युक्ति- ॥ इदानींमोक्षाख्यफलस्यात्यंतरंगसाधनत्वाच्छ्रवणमननिदिध्यासनापरोक्षज्ञानभक्तिभगवत्प्रसादाख्यमोक्षसाधनान्युपोद्घातसं मल्लिका
॥ १ ॥ गत्याफलसौरभस्यादौनिरूपय न्ज्ञानस्वभावादेवमोक्षइतियत्परोदीरितंभगवत्प्रसादाद्यनपेक्षज्ञानस्वभावाख्यमोक्षसाधनं तत्राव फलसौ०
रकाज्ञाननिवृत्त्याख्यमोक्षंप्रत्याव्रियमाणः ब्रह्मापरोक्षज्ञानस्यैवहेतुत्वेऽन्योन्याश्रयप्रसंगादन्यदेवावरणनिवर्तकंवक्तव्यमितिभावे नतत्तावद्दूषयति ॥ यदीत्यादिना ॥ १ ॥ अज्ञानं भावरूपाज्ञानं । अनापरोक्ष्यं अपरोक्षाभावः । दृश्यते मनोवृत्त्या । अंते

यद्यज्ञानंमनोवृत्तिप्रतिबंधकमेवन ॥ मनसाब्रह्मणस्तर्हिसाक्षात्कारस्सदाभवेत् ॥ १ ॥
योग्यस्यानापरोक्ष्यंहिप्रतिबंधनिबंधनं ॥ योग्यंचमनसोब्रह्मदृश्यतेंतेकथंनचेत् ॥ २ ॥
श्रुतिश्चमनसैवैनंपश्यतीत्याहयोग्यतां ॥ रुणद्धिनपरोक्षंतत्साक्षात्कारंरुणद्धिच ॥ ३ ॥
मनसःप्रतिरोधेहिश्रवणाद्यपिमृग्यते ॥ प्रतिबंधनिरासायनचेत्स्वार्थंस्पृशेद्बलात् ॥ ४ ॥
मनसःप्रतिरोधेहिस्यादन्योन्याश्रयोध्रुवं ॥ मनसोप्रतिरोधेपिस्यादन्योन्याश्रयोध्रुवं ॥ ५ ॥

चरमापरोक्षज्ञानदशायां । नचेत् । योग्यंनचेत् ॥ २ ॥ तत् प्रतिबंधकभूतमज्ञानं ॥ ३ ॥ प्रतिरोधे अज्ञानेनप्रतिरोधेसति । श्रवणाद्यपिप्रतिबंधनिरासायमृग्यतइतिसंबंधः । नचेत् प्रतिबंधकंनास्तिचेत् । स्वार्थं ब्रह्म ॥ ४ ॥ एवंचपरस्योभयतःपाशार ॥५७९॥
ज्जुरित्याह ॥ मनसइति ॥ प्रतिरोधे अज्ञानेनप्रतिरोधे । प्रतिबंधकाज्ञानापगमेमनोवृत्त्यातत्साक्षात्कारः । साक्षात्कारेणैवच

प्रतिबंधकाज्ञाननिवृत्तिरितिपरेणांगीकारेऽन्योन्याश्रयः । अप्रतिरोधे अज्ञानेनप्रतिरोधाभावे। अन्योन्याश्रयः योग्यमनसोयो ग्यब्रह्मणश्चान्योन्यमाश्रयःसंबंधः । अज्ञानस्यप्रतिबंधकत्वेप्रागुक्तान्योन्याश्रयस्स्यात् । अप्रतिबंधकत्वेसर्वदाप्यपरोक्षीकरणा ख्यान्योन्याश्रयः । एवंचदर्शनस्यश्रवणादिसाध्यत्वबोधकश्रुतिविरोधस्स्यात् । तस्मात्अज्ञानप्रतिबंधान्नसर्वदासाक्षात्कारइत्ये ववक्तव्यं । तथाचप्रतिबंधेसतिसाक्षात्कारायोगात्साक्षात्कारप्रतिबंधकाज्ञाननिवृत्तिरूपमोक्षोत्तरकालीनसाक्षात्कारस्यकथमवि द्यानिवर्तकत्वापरपर्यायमोक्षसाधनत्वंस्वस्वभावेनैवस्यात् । स्वप्रतिबंधकनिवृत्तेस्स्वेनैवकर्तुमशक्यत्वात् । नहिराजसाक्षात्कार

श्रवणंमननंचैवध्यानंचेतित्रिकमात्रयं ॥ प्रधानांगंहिमनसोद्रष्टव्येपरमात्मनि ॥ ६ ॥
प्रतिबंधनिरुद्धंहिमनोद्रष्टुंनशक्नुते ॥ ७ ॥ ॥ ॥ ॥

प्रतिबंधकराजगृहद्वारपिधानंराजसाक्षात्कारेणैवमोचयितुंशक्यं । किंतुप्रसन्नेनराज्ञाराजभटैर्वाप्रतिबंधककवाटोद्घाटनेकृतेसत्येव राजसाक्षात्कारः । अतोत्रापिस्वसाक्षात्कारप्रतिबंधकाज्ञानरूपयवनिकाविमोचनायसएवप्रभुरनुसर्तव्यः । ज्ञानस्वभावादेवमोक्षं तुतत्प्रतिबंधकाज्ञानस्वभावएवनिरुणद्धीतिभावः ॥ ५ ॥ परोक्तमोक्षसाधनंनिराकृत्यस्वाभिमतमोक्षसाधनानिपरंप्रत्युक्तदोष स्यस्वपक्षेयथानवकाशस्तथादर्शयति ॥ श्रवणमित्यादिना ॥ ६ ॥ प्रधानांगतामेवोपपादयति ॥ प्रतिबंधेति ॥ प्रतिबंधनि रुद्धं प्रतिबंधेन यवनिकासदृशप्रकृत्यंशाख्यप्रतिबंधेननिरुद्धं । प्रतिबंधनिवृत्तौश्रवणादीनामंगतेतिभावः ॥ ७ ॥ एतदेवद

युक्ति- शंयति ॥ परोक्षेति ॥ भगवन्महिमप्रतिपादकोपनिषद्वाक्यानांब्रह्ममीमांसाप्रदर्शितोपक्रमादिलिंगैर्गुरुमुखादर्थश्रवणंश्रवणं त मल्लिका
स्यैवार्थस्यताभिरेवयुक्तिभिःपुनःपुनस्स्वयमेवशास्त्राभ्यासेनवा तत्वनिर्णयफलकवादकथायावा तदंगंधारणादिकमितिवचनाच्छा
॥ २ ॥ स्त्रार्थधारणावतास्वमनसावाक्षणेक्षणेनुचिंतनंमननं । एताभ्यांश्रवणमननाभ्यांनिर्णीतभगवद्गुणानांतैलधारावदविच्छिन्नयाभग फलसौ०
वतोन्यत्रासारबुद्ध्याततोनिवर्तितया भगवत्येवसस्नेहमनुवृत्तयाचमनोवृत्त्या निरंतरध्यानंनिदिध्यासनं । आवृत्तिरसकृदुपदे
शादितिसूत्रादिदंश्रवणं यावन्मननशक्त्युदयंपौनःपुन्येनकार्यं । मननंचयावन्निदिध्यासनशक्त्युदयंकार्यं । तच्चयावदपरोक्षंका
र्यं । इमानिचक्रमेणोत्तरत्रप्रचुरभगवत्प्रसादसाधनानितत्परोक्षज्ञानरूपाणित्रीणिमनसःसहकारिभूतसाधनानि । मनस्तुसर्वत्रांगि।

परोक्षज्ञानरूपात्तुसदाध्यानात्प्रसन्नधीः ॥ अपसार्यनिरोधंतंस्वात्मानंदर्शयेत्प्रभुः ॥ ८ ॥

करणरूपत्वात् । तच्चसहकारिभिरेतैःक्रमेणान्यत्रोपोद्घलितविरक्ति भगवत्यभिवृद्धभक्तिचभवति । तत्रनिरंतरभगवद्गुणगणस्म
रणरूपतयाभगवतोतिप्रेमहेतुभूतात्सदाध्याना त्सदाध्यानाख्यनिदिध्यासनात्प्रधानांगात् प्रसन्नधीः ममगुणगणस्मरणएवलाल
सांतःकरणस्यान्यत्रविरक्तस्यमय्येवचानुक्तस्यमद्दर्शनकामुकस्यचास्यमांदर्शयामीतिमहाप्रसादसंपन्नकरुणार्द्रधीः । तंनिरोधं स्वा
परोक्षप्रतिबंधकप्रकृत्यंशं । एवंचनिदिध्यासनपर्यंतपरोक्षज्ञानपरंपरायास्साक्षात्कारप्रतिबंधेसत्यपिसंभवान्नान्योन्याश्रयः । आ ॥५८०॥
वृतघटादावपिशब्दादिनाज्ञानदर्शनात् । अपरोक्षज्ञानेचप्रतिबंधकीभूतप्रकृत्यंशरूपमायांभगवानेवापसारयति स्वात्मानंदर्शयति

च । नतुदर्शनशक्त्यैवतदपसरणं । येनान्योन्याश्रयदोषस्स्यात् । अतःप्रतिबंधकमपसारयन्नेवभगवान्दोषमपीममस्मन्मताद्बहि रेवापसारयामासेतिभावः ॥ ८ ॥ उक्तार्थेप्रमाणंचाह ॥ जहीति ॥ अनेन जयजयजह्यजामजितदोषगृहीतगुणामितिश्रुतिगी तावाक्यंसंगृह्णाति । जहिशब्दश्चात्रश्रुतिगीतावाक्यस्थजयशब्दद्वयस्याप्युपलक्षकः । हेअजित परमात्मन् । जय उत्कृष्टोवर्त स्व । त्वमेव अजां ज्ञानप्रतिबंधकप्रकृतिंजहि नाशय । जय अपसारयचेत्याहेतिसंबंधः । तस्मात् ज्ञानेनैवाज्ञाननिवृत्तावन्यो

जह्यजामजितेत्याहतस्माद्भागवतेश्रुतिः ॥९॥ दृष्टश्चभगवानेकंहृद्ग्रंथिंस्वंभिनत्त्यजः ॥
अन्यंचापसृतंकुर्यात्तेनाच्छादयतिक्वचित् ॥ १० ॥ अतःकदाचिद्दृश्योसावदृश्योपिकदा
चन॥आमुक्तेश्चव्यवस्थेयंजीवन्मुक्तिश्चसामता॥११॥ यदिज्ञानेनैवकार्यैस्सहाज्ञानंनिव
र्तते ॥ तदामोक्षविलंबस्यनकिंचित्कारणंतव ॥ १२ ॥ ॥ ॥

न्याश्रयात् । श्रुतिः भागवतेश्रुतिगीतावाक्यं । श्रुतिप्रतिरूपत्वाच्छ्रुतिरित्युक्तं । भागवतइत्युपलक्षणं । स्वरूपाच्छादिकांहत्वा परमाच्छादिकांपरः । व्याघुटय्यमोक्षपदवींददातिपुरुषोत्तमइतिपुराणांतरवचनमपिद्रष्टव्यं ॥९॥ एतदेवविशदयति ॥द्रष्टुश्चेति॥ भिनत्ति दग्धपटायितांकरोति । अपसृतं ईषदपसृतं । सर्वथानाशोपसरणंचपरममुक्तिदशायामेवेतिद्रष्टव्यं । सा व्यवस्था॥१०॥ ॥ ११ ॥ ज्ञानस्वभावेनैवमुक्तिरितिपक्षेदोषांतरंचाह ॥ यदीति ॥ कार्यैः कामकर्मादिभिः । त्रिक्षणावस्थायिज्ञानस्वभावेनैवमु

युक्ति-

॥ ३ ॥

क्तिरितिमतेज्ञानोत्तरक्षणएवमोक्षस्स्यादितिभावः ॥ १२ ॥ स्वमतेतुनायंदोषइत्याह ॥ स्वतंत्रइति ॥ चेत्अस्तिचेत् । सःस्व तंत्रपुरुषः ॥ १३ ॥ भगवतएवमोक्षदातृत्वेनिरवकाशप्रमाणमाह ॥ वरमिति ॥ आत्मनःस्वस्य । कैवल्यं मोक्षमृतइतिसंबं धः । तस्यकैवल्यस्य । ईश्वरः दानेसमर्थः । सावधारणतयाविष्णोरेवकैवल्यदातृत्वकथनान्निरवकाशमिदंवाक्यं । केषामिदंव चनमित्यतआह ॥ तद्धीति ॥ तत्वाक्यं । देवानुशासनं मुचुकुंदंप्रतिदेवानामनुशासनं । स्वज्ञानमहिम्नैवमोक्षस्यस्वसंबंधि त्वाभावंसूचयितुंस्वप्रतिपादककैवल्यप्रतिपादकपादयोर्विसंधिकरणं । वरंवरयेतिभद्रंतइतिचदेवैस्स्वोपकारकमुचुकुंदंप्रत्याशीर्दाने

मल्लिका

फलसौ०

स्वतंत्रश्चेत्प्रभुर्मध्येस्वेच्छयासनिवर्तयेत् ॥ स्वतंत्रश्चनियोगार्होनेत्याहुर्हिमनीषिणः
॥ १३ ॥ वरंवरयभद्रंतऋतेकैवल्यमात्मनः ॥ एकएवेश्वरस्तस्यभगवान्विष्णुरच्यु
तः ॥ इतिभागवतेप्रोक्तंतद्धिदेवानुशासनं ॥ १४ ॥ ॥ ॥

न स्वोपकारविमोचनेप्यसमर्थावयंनकैवल्यदानेसमर्थाइतिसूचयति । अतएवऋतेकैवल्यमित्याहुः । अनेनैवेष्टदायकत्वरूपमिष्ट दैवत्वंचनस्वेषामितिसूचयंति । एतावतैवस्ववक्तव्यार्थस्यपूर्णत्वेपिपुनरुत्तरार्धेन व्याप्तत्वात् विशिष्टबलनियमनशीलत्वसमग्रैश्व र्यादिगुणभरितत्वाद्देहादेरपिच्युतिरहितत्वेननित्यमुक्तत्वाच्चमोक्षदानसमर्थं अतएवपरमेष्टदैवरूपमनीदृशंस्वभिन्नंचभगवंतमुपदि ॥५८१॥
शंतस्स्वजगद्गुरुतांचसूचयंति । साक्षाद्देवैरेवेत्थमनुशासनाच्चविष्णोरन्यदेवानांनकैवल्यदातृत्वमितिभावः ॥ १४ ॥ प्राक्जीवन्मु

क्तिदानंवर्णितं । इदानींपरममुक्तिदानप्रकारमपिवर्णयति ॥ मुक्ताविति ॥ परममुक्तावित्यर्थः । ग्रंथिद्वयं स्वाच्छादकपरमा च्छादकप्रकृत्यंशाख्यहृद्ग्रंथिद्वयं । मनोमानलिंगदेहात्मानंबंधं मानोभिमानः । अविद्यानिमित्तकतदतिरिक्तबंधस्वरूपनिरूपणा र्थमिदं । तस्यमुक्तस्य ॥ १५ ॥ परस्यतुप्रागुक्तान्योन्याश्रयान्मुक्तिरेवनस्यादितिसाहित्यमुद्रयाऽऽह ॥ प्रतिबंधेति ॥ प्रतिब ध्येन अपरोक्षज्ञानेन । यस्यमते । बध्येनैवबंधनिवृत्तेःक्काप्यदर्शनादसंभवंस्फोरयितुमेवमुक्तं । मुक्तं सर्वस्मान्मुक्तोहमित्यभिमा

मुक्तौग्रंथिद्वयंसम्यङ्मोचयेन्मुक्तचेतनात् ॥ बंधंमनोमानलिंगदेहात्मानंचमोचयेत् ॥
मुक्तौस्वरूपनिष्पत्त्यातस्यस्वच्छंददर्शनं ॥ १५ ॥ प्रतिबंधनिवृत्तिश्चप्रतिबध्येनकेवलं ॥
यस्यान्योन्याश्रयस्तंत्वांमुक्तंचापिनमुंचति ॥ १६ ॥ साक्षात्कारेतुकरणंश्रवणंकिलके
वलं ॥ श्रवणेऽगिन्युत्तरांगंमननादीतिकश्चन ॥ १७ ॥ ॥ ॥

नवंतमपित्वामन्योन्याश्रयोनमुंचति । यद्यपिमुक्तस्यपुनर्मोचनाभावोसंभावितएव । तथाप्ययंदोषोनमुंचतीतिविनोदोक्त्यामहा नदीप्रवाहेमज्जतउन्मज्जतश्चद्राविडस्यगलबद्धकंबलवदपरिहार्यत्वात् वाङ्मात्रेणत्वयात्यक्तोप्ययंदोषः तद्दोषान्मुक्तइत्यभिमानि नंत्वांनमुंचतीतिसूचयति । एवंवदतोमरणेप्यन्योन्याश्रयान्मुक्तिर्नभवतीतिभावः ॥ १६ ॥ परप्रक्रियांतरंदूषयितुमनुवदति ॥ साक्षात्कारेत्विति ॥ आदिपदेननिदिध्यासनंगृह्यते । श्रवणमेवांगि तेनैवापरोक्षज्ञानाख्यफलंचभवति । मनननिदिध्यासने

तुफलोत्पत्त्यनंतरंक्रियमाणे असंभावनाविपरीतभावनानिवृत्त्याख्यफलांतरजनके श्रवणाख्यपूर्वांगिनउत्तरांगेइतिमायावादिनो वदंतीतिभावः ॥ १७ ॥ तदभिमतश्रवणस्वरूपचनिरूपयन्ननूदितपरप्रक्रियांदूषयति ॥ श्रुतेरित्यादिना ॥ अवधृतिरवधारणं । तत्श्रवणं । श्रवणस्यस्थिरत्वे मनननिदिध्यासनानंतरंस्वफलजनकत्वेचादृष्टद्वाराकालांतरभाविस्वर्गाख्यफलजनकयज्ञस्योपरिक्रियमाणेष्ट्यादिवच्छ्रवणोत्तरमनननिदिध्यासनयोरपिफलवत्सन्निधावफलत्वरूपा स्यादप्युत्तरांगता । नचैतदस्ति । ज्ञानरूपतयाऽस्थिरस्ययज्ञवददृष्टादिद्वाररहितस्यस्वोत्पत्त्यनंतरमेवस्वफलीभूतापरोक्षज्ञानजनकस्यचश्रवणस्य स्वाजन्यफलांतरजनके

श्रुतेर्ब्रह्मणितात्पर्यावधृतिश्श्रवणंमतं ॥ त्रिक्षणस्थायिविज्ञानरूपत्वान्नस्थिरंहितत् ॥ १८ ॥
श्रवणानंतरंदृष्टिर्यदिजातांगतागता ॥ एकस्मिन्हिफलेहेत्वोर्द्वयोरंगांगितामता ॥ १९ ॥
नजाताचेद्यतस्सास्यात्तदेवकरणंभवेत् ॥ श्रवणंमननात्पूर्वंश्रुतंनध्यानतःपरं ॥ २० ॥ ॥

उत्तरकालीनतयापूर्वकालीनस्वफलाजनकेचमनननिदिध्यासने अंगेएवनभवतः फलवतोंगिनस्सन्निधौतत्फलेनैवसफलस्यफलांतररहितस्यचसहकारिणोंगत्वात् । एतयोश्चत्वद्रीत्यैवतदभावात्कथमंगता । उत्तरांगतातुदूरापास्तेति अंगांगितामतेत्यंतग्रंथसमुदायस्याभिप्रायः ॥ १८ ॥ १९ ॥ उक्तमिदमेवमायिनांमतं । संभावितपक्षांतरंचोत्थाप्यदूषयति ॥ नजातेति ॥ नजाताचेत् श्रवणानंतरमेवतत्फलतयाऽभिमतदृष्टिर्नजाताचेदित्यर्थः । यतः यस्मात्करणात् । सादृष्टिः । श्रवणस्यज्ञानरूपतयातदैवनष्टत्वे

नकालातरभाविदृष्टिर्यतोभवति । तदेवकरणंस्यान्नतुश्रवणमितिभावः । ननुनिदिध्यासनानंतरंपुनश्श्रवणांतरमंगीक्रियतइत्यत आह ॥ श्रवणमिति ॥ २० ॥ मध्ये निदिध्यासनापरोक्षज्ञानयोर्मध्ये । कल्पांतरं कारणतयाकल्प्यं श्रवणांतरंकल्प्यं स्वकपोलेनैवकल्प्यं । निदिध्यासितव्यइत्यतःपरं श्रोतव्यइतिश्रुतेरभावात्श्रवणस्वरूपमपिकल्पनीयं । तस्यकारणताचकल्पनीया । मननादौ मननस्यआदौआदिभागे नकश्चनकल्प्यइत्यर्थः । श्रोतव्यइतिसाक्षाच्छ्रौतपदस्याविद्यमानत्वात् । श्रुतहान्यश्रुतकल्पनाप्रसंगान्नायंपक्षस्साधीयान् । किंतुप्राथमिकपक्षएवपरेणांगीकार्यः । सचोक्तरीत्याऽयुक्तएवेतिभावः । कस्तर्हिश्रुतेरभिप्रायइत्यत आह ॥ तच्चेति ॥ तत्त्रयं श्रवणमनननिदिध्यासनाख्यंत्रयं । क्रमिककारणं साक्षात्साक्षात्कारसाधनंनिदिध्यासनं । तद्द्वारा

मध्येकल्पांतरंकल्प्यंमननादौनकश्चन ॥ तच्चैकवाक्येपठनात्त्रयंक्रमिककारणं ॥ २१ ॥

यदिसाक्षात्कारकार्याज्ञाननाशेसहायता ॥ ज्ञानेंगिन्यंगतैवस्याच्छ्रवणेंगिनिनांगता ॥ २२ ॥

मननं । तयोर्द्वाराचश्रवणं । एवंचत्रयमपिसाक्षात्कारंप्रत्येवकारणं । आत्मावाअरेद्रष्टव्यइतिप्रागुक्तदर्शनमुद्दिश्यत्रयाणामप्येकवाक्येसहैवपठनात्त्रीण्यप्यंगान्येव । कारणत्वसाम्यात् । अंगितुएतत्सहकारेणभगवंतंसाक्षात्कुर्वत्करणरूपंमनएव । अन्यथाकर्मणाज्ञानमातनोतीतिश्रुतेःश्रवणादपिपूर्वकालीनंकर्मैवांगिस्यात् । अंतःकरणशुद्धिद्वारापुण्यद्वाराचतज्जन्यसाक्षात्कारेश्रवणादित्रितयमप्युत्तरांगंस्यात् । अंतःकरणस्यैवप्राधान्यादंगित्वं । कारणानांतुसर्वेषांसहकारित्वलक्षणमंगत्वमेवन्याय्यमितिभावः ॥ २१ ॥ संभावितपक्षांतरमाशंक्यदूषयति ॥ यदीति ॥ साक्षात्कारः श्रवणजन्यब्रह्मसाक्षात्कारः । श्रवणफलेब्रह्मसाक्षात्कारे

युक्ति- जातेपिसाक्षात्कारस्स्वफलभूताविद्यानिवृत्तिमेतत्सहायेनैवकरोति । नान्यथा । तर्हिज्ञानरूपेंगिन्येवानयोरंगता । श्रवणेंगिन्यंग मल्लिका
॥ ५ ॥ तेतिपक्षोगतइत्यर्थः । नन्वस्तुतर्ह्ययमेवममापिपक्षइतिचेत् न । विवरणोक्तेश्श्रवणत्वापातात् । साक्षात्कारस्यापिज्ञानरूपतयाश्र फलसौ०
वणपक्षोक्तदूषणेनैवदुष्टत्वाच्च ॥ २२ ॥ पूर्वंश्रवणस्यसाक्षात्कारहेतुतामंगीकृत्यदूषणमुदितं । इदानींतदेवनघटतइत्याह ॥ परो
क्षेति ॥ सा अपरोक्षज्ञानजननरूपा ॥ २३ ॥ ननुसाक्षात्कारयोग्येर्थेप्रयुक्तश्शब्दःसाक्षात्कारमेवजनयतीत्यतआह ॥गेहइति॥

परोक्षज्ञानजनकंश्रवणंकेनहेतुना ॥ अपरोक्षफलंकुर्यात्साह्यदृष्टस्यकल्पना ॥ २३ ॥ गेहे
घटइतिप्रोक्तेबहिस्स्थस्यापरोक्षधीः ॥ गेहांतस्थघटेपिस्यात्सापिदृश्यार्थदृङ्न्किं ॥२४॥ साक्षा
त्कारस्ययोग्योर्थोयदासाक्षात्प्रदृश्यते ॥ तत्रप्रयुक्तशब्दोपिसाक्षात्कारफलोयदि ॥ २५ ॥
तर्हिस्याद्ब्रह्मणस्साक्षात्कारःप्राक्कारणांतरात् ॥तत्रप्रयुक्तशब्दस्तुव्यर्थस्स्यादितिमेमतिः॥२६॥
किंचफूत्का(फट्का)रलिंगेनदृश्यमानेपिहस्तिनि ॥ जायमानानुमापिस्यात्साक्षात्कारात्मिकातव ॥२७॥

सा शब्दजन्याप्रतीतिः ॥ २४ ॥ पक्षांतरमाशंकते ॥ साक्षात्कारस्येति ॥ योग्यतामात्रमेवनालं किंतुतद्दर्शनसमयेप्रयुक्तश्श
ब्दस्साक्षात्कारमेवजनयतीतिशंकाभिप्रायः । यद्यपीयंशंकाप्रकृतानुपयुक्ता । घटस्येवब्रह्मणश्श्रवणदशायामेवचक्षुरादिनामनसा ॥ ५८३ ॥
वादर्शनाभावात् । तथापिघटादौचेमांशंकांपरिहर्तुमियमाशंका दूषयति ॥ तर्हीति ॥ २५ ॥ २६ ॥ फूत्कारः वेतंडशुंडादंडो

त्थस्वनविशेषः । तवमते । दृश्यमानार्थेज्ञानकरणत्वस्योभयत्रसाम्यादितिभावः ॥ २७ ॥ दूषणांतरंचाह ॥ एकगोष्ठेति ॥इदं
विजातीयकरणानामेकत्रसन्निवेशेस्वजातिविरुद्धफलजनकत्वं । किंचचक्षुःकरणकएवापरोक्षज्ञानेशब्दस्यापिकरणतोच्यते । उत
तदजन्यसाक्षात्कारांतरे । नाद्यः । एकज्ञानेकरणद्वयानपेक्षणेनसंशयोत्तरप्रत्यक्षेव्याप्तिदर्शनस्येवसहकारित्वस्यैवप्राप्तेः । नद्वि
तीयः। केवलशब्दादेवान्यत्रापितदुदयप्रसंगात् ॥ २८ ॥ प्रमेयंदूषयित्वादृष्टांतंचदूषयति ॥ दशमइति ॥ स्वात्मनासहदशसं

एकगोष्ठप्रविष्टाःकिंमहिषीधेनुपूर्वकाः ॥ एकाकारफलंदद्युरिदंचादृष्टकल्पनं ॥ २८ ॥ दशम
स्त्वमसीत्युक्तिरपिशाब्द्याधियास्वया ॥ चित्तव्याक्षेपहंत्र्येवदशमोहमितिप्रमा ॥ २९ ॥
तत्रापिमानसी नोचेदहंत्वोल्लेखिनीकथं ॥ दशमस्त्वमसीत्यत्रह्यहंशब्दोनविद्यते ॥ ३० ॥
त्वंतामेवज्ञापयेत्सानाहंतांज्ञापयेद्विवाक् ॥ शब्दोवदेत्स्वशक्यार्थमशक्यार्थंकथंवदेत् ॥३१॥

ख्याकजनेषुसत्सुस्वानवलोकिनोबहिर्मुखस्यदशमःकइतिशंकायांप्रयुक्तादशमस्त्वमसीत्युक्तिरित्यर्थः । शाब्द्या शब्दकरणिकया ।
धिया परोक्षज्ञानेन । चित्तव्याक्षेपहंत्री अन्यत्रैवासक्तंतच्चित्तं त्वंत्वप्रकारेणैवतत्स्वरूपंप्रबोध्यस्वस्वरूपाभिमुखंविदधत्येवेत्यर्थः ।
मानसीत्युपलक्षणं । साक्षिरूपिणीवा । नोचेत् मनःकरणिकानोचेत् । अहमित्युलेखस्यमनःकरणकेसाक्षिरूपेचज्ञानएवदर्शनात् ।
नन्वहंशब्दप्रयोगेशाब्द्यामपिप्रतीतौअहंत्वोलेखोस्तीतिचेत् । सत्यं । प्रकृतेसोपिनास्तीत्याह ॥ दशमइति ॥ शक्तिग्रहप्रकारेणै

युक्ति- वज्ज्ञानजनकत्वनियमादितिभावः ॥ २९ ॥ ३० ॥ ३१ ॥ ननुस्वस्वरूपेअहंत्वस्यापिविद्यमानत्वात्त्वमितिपदेनैवतस्यापिबोधो मल्लिका
स्त्वित्यतआह ॥ घटत्वेति ॥ उभयवत्यपि द्रव्यत्वघटत्ववत्यपि ॥ ३२ ॥ युक्त्यंतरमपिसूचयन्नेतदेवविशदयति ॥ अव्युत्प
॥ ६ ॥ न्नस्येति ॥ सा वाक्यजन्या ॥ ३३ ॥ ३४ ॥ शब्दप्रयोगेपितत्तदर्थसाक्षात्कारश्चक्षुरादींद्रियैरेवेत्यत्रदृष्टांतमाह ॥ कारुरिति ॥ फलसौ०

घटत्वाकारधीरेवघटशब्देनजायते ॥ द्रव्यत्वाकारधीर्द्रव्यपदादुभयवत्यपि ॥ दशमोहं
त्वितितुयामतिस्सामानसीध्रुवं ॥ ३२ ॥ अव्युत्पन्नस्यतद्वाक्यश्रवणेपिमतिर्नसा ॥
व्युत्पत्तिश्शब्दजन्यार्थज्ञानेक्लृप्तंहिकारणं ॥ ३३ ॥ अतश्शाब्दप्रबोधोस्तिमध्येव्यासं
गभंजकः ॥ समाहितमनास्तुस्वंदशमंमनसेक्षते ॥ ३४ ॥ कारुस्स्वकंठपरशुंविस्मृत्य
बहुचिंतयन् ॥ अयंपरशुरित्युक्तेकिंशब्दादेवपश्यति ॥ ३५ ॥ उक्तिःपरोक्षज्ञानेनचि
त्तव्याक्षेपनाशिनी ॥ पश्चात्स्वकंठपरशुंचक्षुषैवसपश्यति ॥ ३६ ॥ स्वतस्समाहितम
नादशमोहमितिस्वयं ॥ मनसैवाभिपश्येच्चेद्ब्रह्मपश्येत्तथैवहि ॥ ३७ ॥ ॥

शब्दप्रयोगेपिपरशोश्चक्षुषैवदर्शनस्यसर्वजनसंप्रतिपन्नत्वाद्विप्रतिपन्नस्थलेष्वप्येवंज्ञानद्वयमवर्जनीयमितिभावः ॥ ३५ ॥ ३६ ॥ 
अहंदशमइतिज्ञानंमानसमेवेत्यत्रयुक्त्यंतरमप्याह ॥ स्वतइति ॥ स्वतः शब्दप्रयोगंविना । समाहितमनाः सावधानचित्तः ।

अविवेकिनएवशब्दापेक्षा । विवेकीतु यूयंनव अहंतुदशमइतिस्वयमेवप्रत्येतीतिसर्वानुभवसिद्धं । तस्मादविवेक्यपिशाब्द्याप्रतीत्याचित्तंस्वाभिमुखीकर्तुमेवशब्दमपेक्षते । तयास्वस्थचित्तस्तुविवेकिवत्स्वात्मानंस्वमनसैवदशमोहमितिपश्यति । वृथाकरणवैषम्यकरणेकारणाभावादितिभावः । तथैवेत्यनेनासंप्रज्ञातसमाधिस्थयोगिनिचित्तव्याक्षेपाभावाद्बाह्येंद्रियाणामुपरतत्वेनशब्दश्रवणासंभवाच्चस्वस्थचित्तवन्मनसैवब्रह्मापरोक्षज्ञानं नतुशब्दसहायेनेतिसूचयति । एवंचपरोदीरितबहिर्मुखदृष्टांतःकथंप्रकृतोपयोगी । नहिशांतोदांतउपरतस्तितिक्षुस्समाहितोभूत्वाऽऽत्मन्येवात्मानंपश्येदित्युक्तब्रह्मापरोक्षज्ञानिनःकदाप्यसमवधानमुचितं

शब्दस्तुव्यवधानस्योच्छित्त्यैकर्णेनिपातितः ॥ शाब्दींकरणसामर्थ्यात्त्वमाकारांधियंदिशेत् ॥३८॥
ततस्समाहितमनाःपश्येदहमितिस्वयं ॥ अहंत्वोल्लेखिनीशब्दाभावेर्धामनसैवहि ॥ ३९ ॥ ॥

एवंचब्रह्मदर्शनदशायांक्वशब्दादपरोक्षज्ञानं । कस्यवेदंनिदर्शनमितिभावः । नन्वस्तुयोगिनश्शब्दानपेक्षा । इदानींबहिर्मुखंजनमभिमुखीकर्तुंगुरुणोपदिश्यमानवेदांतवाक्यरूपशब्दस्योपयोगोस्तीतिचेत् । सत्यं । तथापिगुरूपदिष्टशब्दश्रवणसमनंतरमेवतस्यब्रह्मापरोक्षदर्शनाभावेनपुनर्दृष्टांतवैयर्थ्यस्यतदवस्थत्वात् । नचवाच्यमिदानीमपिशब्दश्रवणसमनंतरमेववाक्यार्थविशिष्टब्रह्मदर्शनमप्यस्तीति । त्वदुक्तमहावाक्यार्थेप्रतिवादिनांविवादाभावप्रसंगात् । घटोदृष्टइतिवद्दृष्टंब्रह्मेतिप्रतिवक्तव्यत्वाच्च ॥ ३७ ॥ बहिर्मुखेपिव्यासंगनिवर्तकत्वेनप्रागुक्तांशस्यसहकारितामनूद्यदृष्टांतमुखेनाप्युपपादयति ॥ शब्दस्त्विति ॥ ३८ ॥ शब्दाभावे

अहमितिशब्दाभावे ॥ ३९ ॥ ४० ॥ असौप्रतिबंधनिवर्तकः ॥ ४१ ॥ परोदीरितदृष्टांतेपिदशमोहमितिज्ञानस्यशब्दाकरणकत्वे ऽनुमानमाह ॥ अहमिति ॥ अहंदशमइतिवाक्यजनितज्ञानेव्यभिचारपरिहारायविशेषणं । स्वस्थधीः स्वस्थस्याहंदशमइतिधीः ॥ ४२ ॥ दृश्यमानेऽर्थेप्रयुक्तश्शब्दस्साक्षात्कारमेवजनयतीतिमतंसंग्रहायपुनरप्यनूद्यप्रकारांतरेणचदूषयति ॥ दृष्टियोग्यइति



प्रतिबंधनिरासेहिनिमित्तांतरतःकृते ॥ दहनादेवदाह्यस्यदाहस्यान्नान्यतःक्वचित् ॥४०॥
प्रतिबंधनिरासेनतस्यस्याचरितार्थता ॥ सहकारीभवेद्वासौसएवनहिदाहकः ॥ ४१ ॥
अहंशब्दाप्रयोगेपिह्यहमाकारधीत्वतः ॥ दशमोहमितिज्ञानंनशाब्दंस्वस्थधीर्यथा ॥
पराकरोतितेपक्षमनुमानमयीदृशं ॥ ४२ ॥ दृष्टियोग्येप्रयुक्तोपिशब्दोयद्यपरोक्षकृत् ॥
गृहेघटोस्तीत्युक्तेपितर्हिस्यादपरोक्षधीः ॥ ४३ ॥ दृश्यमानेप्रयुक्तस्तुशब्दोयद्यपरोक्ष
कृत् ॥ असमाहितचित्तस्यकथंतर्ह्यपरोक्षधीः ॥ ४४ ॥ नह्यसौविस्मृतस्वात्मापुराशब्द
प्रयोगतः ॥ आत्मानंमनसापश्येद्व्याक्षेपाक्षिप्तचेतनः ॥ ४५ ॥ ॥ ॥

॥ ४३ ॥ व्याक्षेपाक्षिप्तचेतनः व्याक्षेपनिरस्तमनोव्यापारइत्यर्थः । अतएतादृशेप्रयुक्तं दशमस्त्वमसीतिवाक्यमपि दृश्यमानेप्रयुक्तशब्दत्वाभावात्त्वन्न्यायेनैवनसाक्षात्कारजनकंस्यादितिभावः । पूर्वंदार्ष्टांतिकेशब्दप्रयोगसमयेदृश्यमानत्वाभावउक्तः । इदा



नींतुदृष्टांतएवेतिविवेकः ॥ ४४ ॥ ४५ ॥ किंचदृश्यमानेपिप्रयुक्तश्शब्दःदर्शनांतरंसाधयति । उततदेवेतिविकल्प्याद्यंदूषयति ॥ दृश्यमानइति ॥ वैयर्थ्याच्चेत्युपलक्षणं । अन्यत्रापितज्जनकत्वप्रसंगादित्यपिद्रष्टव्यं । द्वितीयंदूषयति ॥ सैवेति ॥ तस्याश्चप्रागेवस्वकरणजनितायाःपुनश्शब्देनापिजननायोगादितिभावः ॥ ४६ ॥ पक्षांतरमाशंक्यदूषयति ॥ करणस्येति ॥ शब्दस्य तत्रैवसामर्थ्यादितिभावः ॥ ४७ ॥ तस्मात् शब्दश्रवणस्यक्वाप्यपरोक्षज्ञानजनकत्वादर्शनात् । अस्य श्रवणादेः । श्रुतिबलादेव

दृश्यमानेपिशब्देनसाक्षात्कारांतरप्रमा ॥ अनानुभविकत्वेनवैयर्थ्याच्चनशोभते ॥
सैवचेत्तर्हिशब्दोत्थासाक्षात्कारप्रमाकृते ॥ ४६ ॥ करणस्यबलाच्चेद्धीस्तर्हिशाब्द्येवसा
भवेत् ॥ दृष्टेऽर्थेतर्करसिकस्यानुमानाद्यथानुमा ॥ ४७ ॥ तस्माद्दर्शनमुद्दिश्यतादर्थ्येना
स्यकीर्तनात् ॥ करणत्वंश्रुतिबलाद्वाच्यंनान्यास्तितेगतिः ॥ ४८ ॥ श्रुतिस्तुश्रवणंवक्ति
मननंध्यानमंततः ॥ पारंपर्याच्चुतत्राद्येहेतुर्ध्यानंतुमुख्यतः ॥ ४९ ॥ नचेत्कर्मैवहेतुस्स्या
दंगंस्याच्छ्रवणाद्यपि ॥ कर्मणाज्ञानमित्याहयतश्श्रुतिरचंचला ॥ ५० ॥ ॥

श्रवणस्यापरोक्षज्ञानजनकत्वंवक्तव्यमितिभावः ॥ ४८ ॥ तत्र श्रवणमनननिदिध्यासनानांमध्ये । आद्ये श्रवणमनने । मुख्यतः द्वारांतरंविना । उक्तविधयामनःकरणकदर्शनोपयोगीत्यर्थः । अयमभिसंधिः । मनसैवैनंपश्यतीतिश्रुत्याइतरव्यवच्छेदपूर्वकंतृतीययामनसएवकरणत्वनिर्णीतेस्सहकारितयैवैषांकथनं नकरणतया द्विकरणकैकक्रियायोगात्त्रयाणामपिकरणत्वप्रसंगाच्चेति ॥४९॥

युक्ति-
॥ ८ ॥

॥ ५० ॥ तस्मात् पूर्वतयाश्रवणस्यमुख्यकारणत्वेकर्मणएवतत्प्रसंगात् । ततएव तादृशनिदिध्यासनादेव । तत्अपरोक्षज्ञानं ॥ ५१ ॥ श्रवणादेवब्रह्मदर्शनांगीकारेबाधकंचाह ॥ यदीति ॥ मंदानामपिजीवन्मुक्तत्वंस्यादितिभावः । विवादाभावादेरुपलक्षणमेतत् ॥ ५२ ॥ श्रवणदर्शनयोरत्यंतवैलक्षण्येसर्वानुभवसिद्धंदृष्टांतमाह ॥ अश्नतइति ॥ एकत्रतृप्तिदर्शनात् अन्यत्रतद

मल्लिका
फलसौ०

तस्मात्क्रमिकवेदोक्तकारणेषुयदुत्तरं ॥ ज्ञानादव्यवधानेनपूर्वंचततएवतत् ॥ ५१ ॥
यदिश्रवणमात्रेपिसर्वेषांब्रह्मदर्शनं ॥ जीवन्मुक्ताःकुतस्तर्हिशुकाद्याएवयोगिनः ॥५२॥
अनानुभाविकंचेदंश्रुतिकालेपिदर्शनं ॥ अश्नतश्शृण्वतश्चान्नंकिंनास्तिमहदंतरं ॥ ५३॥
तच्छब्दान्नापरोक्षंस्यान्नतरान्निर्विकल्पकं ॥ यतस्त्वदुक्तवाक्येपिदशमत्वविशिष्टधीः
॥५४॥ अन्वितार्थाभिधायित्वादन्योन्यान्वयमिश्रितं ॥ स्वार्थंमुख्यममुख्यंवापदंवक्ती
तितेमतं ॥ तच्छब्दान्निर्विकल्पाधीरितिरिक्तंवचस्तव ॥ ५५ ॥ यौगपद्येनतद्योग्यगुणा
नुस्मरणंहरेः ॥ अच्छिन्नतैलधारावदारात्तंदर्शयेद्धृदि ॥ ५६ ॥ ॥ ॥

भावात्रसनेंद्रियमेवतत्तद्रसदर्शनकारणं नशब्दइतिभावः ॥ ५३ ॥ तत्तस्मात् रसशब्देनरससाक्षात्कारादर्शनात् । नतरामित्येतदेवस्पष्टयति ॥ यतइति ॥ ५४ ॥ तत्तस्मात् तवमतेपिशब्दस्यान्विताभिधायित्वात् ॥ ५५ ॥ उपसंहरति ॥ यौगपद्येने

॥ ५८६ ॥

ति ॥ तत्तस्मात् श्रवणस्यदर्शनहेतुत्वायोगात् । अच्छिन्नतैलधारावद्यौगपद्येनहरेर्योग्यगुणानुस्मरणं स्वयोग्यगुणानुस्मरणमि तिनिदिध्यासनस्वरूपकथनं ॥ ५६ ॥ साक्षात्कारस्येंद्रियजन्यत्वनियमान्मनसैवैनंपश्यतीतिश्रुतेश्चकथंध्यानमात्रेणदर्शनमित्यत आह ॥ ध्यानंचेति ॥ तद्गं ध्येयप्रतिमांतर्गतं । तं ध्येयगुणवंतंभगवंतं पश्यतीतिकरणेकर्तृत्वोपचारः । ध्यानप्रसन्नभगवदनु गृहीतंमनःयोग्यजीवस्यभगवत्साक्षात्कारकरणंभवतीतिभावः । एतत्सर्वंमनसिनिधायश्रोतॄणांमनस्समाधानार्थंप्रागस्माभिःकिंचि त्प्रदर्शितमितिद्रष्टव्यं ॥ ५७ ॥ उक्तार्थंप्रमाणेनद्रढयति ॥ यदंघ्रीति ॥ अनेन यदंघ्र्यभिध्यानसमाधिधौतयाधियानुपश्यंतिहि

ध्यानंचमनसातस्माद्ध्यातृचित्तंहरीच्छया ॥ तद्गंतमेवेंद्रियत्वात्पश्यतीत्यतिमंगलं ॥ ५७ ॥
यदंघ्र्यभिध्यानसमाधिधौतसुधियात्मनः ॥ अनुपश्यंतितत्त्वमित्याह भगवान्शुकः ॥ ५८ ॥
ध्यानमेवप्रधानांगंतेनचाज्ञानधीमलं ॥ क्षाल्यतेधौतधीरेवदर्शनेकारणंकिल ॥ ५९ ॥ धीश
ब्दोक्तंमनस्साक्षात्कारस्यकरणंकिल ॥ अंगांगंश्रवणंदृष्टिकारणंनतरांकिल ॥ ६० ॥ ॥

तत्वमात्मनः । वदंतिचैतत्कवयोयथातथंसमेमुकुंदोभगवान्प्रसीदतामितिभागवतश्लोकंसंगृह्णाति ॥ ५८ ॥ अस्यतात्पर्यमाह ॥ ध्यानमिति ॥ श्रवणमननेविहायास्यैवासाधारण्येनग्रहणादितिभावः । तेन ध्यानाख्यसमाधिना । अज्ञानधीमलं अज्ञानाख्य मनोमलं । धौतपदमहिम्नालब्धोयमर्थः । तेनचांगत्वस्फोरणंकृतमितिद्रष्टव्यं । धौतधीः अज्ञानाख्यपंकक्षालनेनधवलीभूतधीः । दर्शने आत्मतत्वदर्शने ॥ ५९ ॥ धीशब्दार्थंवदन्तृतीयाबलेनलब्धार्थमप्याह ॥ धीशब्देति ॥ अनुपश्यंतीतिज्ञानकरणतयो

क्त्वादितिभावः । अतःप्रागुक्तकारणपदमप्येवकारसाहित्यात्करणपरं । अतिशयितकारणस्यैवकरणत्वात् । अंगांगं ध्यानांगस्य मननस्यांगं । साक्षाद्ध्यानांगमपिनेत्यर्थः । अतएवनतरामित्युक्तं ॥ ६० ॥ श्लोकस्यप्रकृतोपयोगंदर्शयति ॥ एवमिति ॥ अर्थ द्वयं ध्यानस्यप्रधानांगत्वं । मनसःकरणत्वरूपमंगित्वंच । परोदीरितमार्गौ श्रवणस्यैवांगित्वं मनननिदिध्यासनयोरुत्तरांगत्वमि तिमार्गौ । मार्गपदेनोक्त्याप्राप्तापराधपरिहारायकुमार्गावित्यनुवादः ॥ ६१ ॥ कलहः वादिप्रतिवादिनोर्विवादः । एतदेवाभिप्रे

एवंचार्थद्वयंसिद्धंयदस्माभिरुदीरितं ॥ परोदीरितमार्गौयौकुमार्गौतौबहिर्गतौ ॥ ६१ ॥ परो
क्षज्ञानकरणंसाक्षात्कारायकोवदेत् ॥ कोवाश्रवणमात्रेणतंपश्यतिमहाप्रभुं ॥ अज्ञैश्चशब्द
मात्रेणदृष्टश्चेत्कलहःकुतः ॥ ६२ ॥ तैलधारावदच्छिन्नगुणसंधानरूपया ॥ मनोधारणयायो
गीपश्येचेदुचितंहितत् ॥ ६३ ॥ दिव्यंददामितेचक्षुःपश्यमेयोगमैश्वरं ॥ इतिगीतासुहरिणा
निरणायिमतंमम ॥ ६४ ॥ अविद्यांकिलविद्राव्यदिव्यंचक्षुर्दृशेदिशेत् ॥ साक्षाद्धीकरणादेव
साक्षाद्धीस्संस्कृतादपि ॥ नान्यस्माद्यद्ददौदिव्यंचक्षुरेवनिरीक्षितुं ॥ ६५ ॥ ॥

त्यप्रागस्माभिस्संग्रहायोक्तं ॥ ६२ ॥ ध्यानस्वरूपंनिरूपयन्ध्यानस्यैवप्रधानांगत्वमनुभावयति ॥ तैलधारावदिति ॥ ६३ ॥ ध्यानप्रसन्नभगवद्दत्तचक्षुषैवभगवद्दर्शनं । नशब्दश्रवणमात्रेणेत्यत्रगीतावाक्यमपिप्रमाणयति ॥ दिव्यमिति ॥ ६४ ॥ अस्य तात्पर्यमाह ॥ अविद्यामिति ॥ प्राग्दर्शनाभावसंपादकप्रतिबंधकनिरासस्यावश्यकत्वात् । अविद्यांविद्राव्येत्युक्तं । यत्यस्मात् ।



निरीक्षितुंस्वविश्वरूपंद्रष्टुंदिव्यंचक्षुरेवददौ।तस्मात्संस्कृतादपिभगवदनुग्रहाख्यसंस्कारसहितादपिसाक्षाद्धीकरणादेवसाक्षाद्धीस्सा क्षात्कारः । नत्वन्यस्माल्लिंगाच्छब्दाद्वेतिसिद्धं । अनुगृह्णन्नपिभगवान्नलोकमर्यादामुल्लंघितवान् । त्वंतुनिर्मर्यादस्तामप्युल्लंघयसि। अतस्त्वंनालौकिकोनापिलौकिकइतिभावः॥६५॥ तर्हिचक्षुरितिकथनान्मनसःकथंकरणत्वमित्यतआह॥चष्टइति॥इति व्युत्पत्त्या तच्चक्षुःगीतोक्तंचक्षुः । बहिर्दर्शनेपिमनसएवप्राधान्यमित्याह ॥चक्षुस्सहायेनेति॥ ततःप्राधान्येनमनएवतत्रापिचक्षुः ।अन्यथा भागवतगीतावाक्ययोर्विरोधात् । अंतर्वाबहिर्वातयोरुभयोरेवदर्शनहेतुत्वस्य ·चक्षुषापश्यतिमनसापश्यतिसुखंपश्यतीतिलोकवे

चष्टेऽनेनेतितच्चक्षुर्मनोवाबाह्यमेववा ॥ चक्षुस्सहायेनमनोयतःपश्यतितंबहिः॥६६॥ किंचदक्षशिर
श्छिदन्नच्छेदेकारणंपुरा ॥ अपश्यत्किलतद्दृष्ट्यैदध्यौपशुपतिश्चिरं ॥ ६७ ॥ इतिभागवतेध्यानात्पू
र्वंदृष्टेरभावतः ॥ तदभावेऽभावरूपंव्यतिरेकमदर्शयत् ॥ ६८ ॥ दृष्ट्वासंज्ञपनेयोगमितिध्यानोत्तर
क्षणे ॥ दृष्टिंब्रवीतियत्तेनतत्सत्त्वेसत्त्वरूपिणं ॥ अन्वमंस्तान्वयंध्यानाद्दृश्यार्थस्यदर्शने ॥ ६९ ॥

दसंमतत्वात्स्मृतिद्वयेनापिमनश्चक्षुषीएवगृहीते नश्रावणस्पार्शनादिसाक्षात्कारांतरकरणानि । किमुवाच्यंतदापरोक्षज्ञानकरणलिं गशब्दादीनांदर्शनहेतुतयाऽसंग्राह्यत्वमितिभावः ॥ ६६ ॥ ध्यानस्यैवदर्शनेप्रधानांगत्वं नश्रवणस्येत्यत्रभागवतकथांतरसंमतिम पिप्रमाणयति ॥ किंचेति ॥ व्यतिरेकं व्यतिरेकव्याप्तिं । शस्त्रैरस्त्रान्वितैरेनमनिर्भिन्नत्वचंहरः । विस्मयंपरमापन्नोदध्यौपशुप तिश्चिरमितिभागवतवाक्यस्यतात्पर्यकथनमिदं ॥ ६७ ॥ ६८ ॥ दृष्ट्वासंज्ञपनेयोगमित्यनेन दृष्ट्वासंज्ञपनेयोगंपशूनांसपतिर्मखे ।

युक्ति- यजमानपशोस्तस्यकायात्तेनाहरच्छिरइतिवाक्यंसंगृह्णाति । मखेयज्ञे । संज्ञपने याज्ञीयपशुहिंसाया । योगंउपायं । स्वयज्ञभंगा मल्लिका०

॥ १० ॥ त्कुपितोहरिरिमंछेत्तुंनमुंचति । तस्मादिममेवयज्ञपशुंकृत्वैतच्छिरएवविच्छिद्यभगवदाहुतित्वेनाग्नौजुहोमीतिसंकल्पाख्यमुपायं फलसौ०

दृष्ट्वेतिभावः । अन्वयंअन्वयव्याप्तिं ॥६९॥ रौद्रीविद्या रुद्रकृतध्यानादिविद्या ॥ ७० ॥ अधुनोक्तरीत्याभागवतभारतादिरहस्या नुकूलांमध्वस्यविद्यांस्तौति ॥रुद्रइति॥ यस्याः विद्यायाः । क्षुद्रोपद्रवः श्रवणादेवापरोक्षज्ञानं नतुनिदिध्यासनसहकृतमनसइति

रौद्रीविद्यानवद्येत्थंध्यानस्यदर्शिहेतुतां ॥ अन्वयव्यतिरेकाभ्यांनिर्णिनायेतिमेमतिः
॥ ७० ॥ रुद्रोप्यद्रावयद्यस्याःक्षुद्रोपद्रवहृद्रुजं ॥ हृद्यामध्वस्यशुद्धासाविद्याविद्योतते
तरां ॥७१॥ इदंत्रयंप्रधानांगंमनःकरणमुच्यते ॥ प्रतिबंधे नतत्पश्येत्तदपायेतुपश्यति
॥७२॥ प्रतिबंधनिवृत्त्यर्थंश्रवणाद्यपिमृग्यते ॥ अतश्श्रुतिश्श्रवणतोमुक्तिरित्यपिसाज
गौ ॥ एवंचमनसैवेतिश्रौतावधृतिरप्यभूत् ॥ ७३ ॥ ॥ ॥

विपरीतप्रमेयं । सएवहृद्रुकूहृदयरोगः तांहृद्रुजं । श्रुतिस्मृत्यनुभवविरुद्धत्वात्स्वाभिमतहरणेनैवतिरस्कृतत्वाद्वाक्षुद्रेत्युक्तं॥७१॥त्रयं श्रवणादित्रयं । प्रधानांगं कर्मादिभ्यःप्रधानांगं । एतेषांमध्येतुपूर्वोक्तरीत्याध्यानस्यैवप्राधान्यंद्रष्टव्यं॥७२॥मृग्यतेमनसा । अतः श्र वणादेरप्यंगत्वात् । सा श्रुत्यैवमोक्षमाप्नोतीत्यादिका । एवंच मनसएवदर्शनकरणत्वात् ॥ ७३ ॥ किंचजडादस्वतंत्राच्चासाध्या

याः भावरूपानादिप्रकृत्यंशाख्यप्रतिबंधनिवृत्तेः प्रसन्नभगवदेकसाध्यत्वात् अप्रतिबद्धेनापिमनसाअव्यक्तस्वभावस्यतस्यप्रसादे नैवद्रष्टुंशक्यत्वात्भगवत्प्रसादएवदर्शनेमुक्तौचसर्वेभ्योप्यतिशयितहेतुरित्यत्रश्रुतिंप्रमाणयन्तयैवश्रुत्यादर्शनस्यमुक्तेश्चस्वरूपंनिरूपयति ॥ हर्यनुग्रहइति ॥ यमेवैषइतिश्रुत्येत्यनेन नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन । यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वामितिश्रुतिंसंगृह्णाति । प्रवचनेनव्याख्यानेननलभ्यइत्यादिनाव्यर्थीकृत्य वृणुते मदीयोय

हर्यनुग्रहएवैभ्यस्सर्वेभ्योबलवत्तरः ॥ व्यर्थीकृत्यप्रवचनंसुमेधांचबहुश्रुतं ॥ यमेवैषइति
श्रुत्याप्रसादस्यैवकीर्तनात् ॥ ७४ ॥ तनुशब्दबलात्सिद्धंसाकारस्यैवदर्शनं ॥ अतोनि
राकारवस्तुनिर्विकल्पकदर्शनं ॥ ७५ ॥ निरस्तंसातनुश्चाभूत्स्वामित्युक्तेस्वरूपिणी ॥
प्रागावृतायाविवृतेरेवोक्तेर्नित्यासिद्धता ॥ ७६ ॥ अतश्चिदानंदरूपाशिरःपाण्यादिमा
न्हरिः ॥ मुक्ताश्चतादृशाकाराइतिश्रौतमतास्थितिः ॥ ७७ ॥ ॥ ॥

मित्यंगीकरोतीत्युक्त्यास्वीयतयांगीकाराख्यप्रसादस्यैवश्रुत्याकीर्तनादितिसंबंधः । एवकारस्यतेनेत्यनेनसंबंधः । अन्यथावैयर्थ्यप्रसंगात् । तेनैवलभ्यःप्राप्यः । तत्प्राप्तिरपितदपरोक्षज्ञानेनैवेतिभावेनतस्यैषआत्मेत्याद्युक्तं विवृणुतेदर्शयति । अर्थप्रदर्शनस्यैवविवरणशब्दवाच्यत्वात् ॥ ७४ ॥ स्वांस्वरूपभूतां । स्वीयामित्यर्थांगीकारेतत्संबंधिजडशरीरस्यैवप्राप्तेः तस्यचप्रकृतेभगवत्यसंभवात्जडशरीरदर्शनस्यप्रसादफलत्वायोगाच्चोक्तएवार्थः । जीवस्वरूपापरोक्षज्ञानमप्यनेनैवग्राह्यं । मुक्तौ

स्वस्वरूपानंदानुभवस्यावश्यमपेक्षितत्वात् जीवमौक्ततनोरपिस्वरूपभूततनुत्वेनस्वांतनुमितिसामान्योक्त्योभयोरपिवक्तुंशक्यत्वा
च्च । अतएवमुक्ताश्चताद्दशाकाराइत्युक्तं । अथवाभगवतोबृहच्छरीरमेवतनुः । तद्दर्शनमेवापरोक्षदर्शनं । आत्मावाअरेद्रष्टव्यइ
तितद्दर्शनस्यैवश्रवणादिफलत्वसंभवात् । विस्तृततनोरेवतनुशब्दमुख्यार्थत्वाच्च । अतोमूलोक्तनित्यत्वंव्याप्तत्वस्याप्युपलक्षणं ।
जीवस्वरूपदर्शनंतुचक्षुःप्रतिबंधकनिवृत्त्युक्त्यार्थादेवलभ्यते । जीवस्यसाकारत्वादिकंचभगवत्प्रतिबिंबत्वेनैवलभ्यतइतिभावेनो
क्तंताद्दशाकाराइति । इतिश्रौतमतस्थितिः इत्येवश्रौतमतस्थितिः । इतोन्यन्मतमश्रौतमित्यर्थः ॥ ७५ ॥ ७६ ॥ ७७ ॥ ननुश्रव

गोप्यःकामाद्भयात्कंसोद्वेषाचैद्यादयोनृपाः ॥ संबंधाद्वृष्णयस्स्नेहाद्यूयंभक्त्यावयंप्रभो ॥
इतिभागवतेप्रोक्तंकामद्वेषादिसाधनं ॥ ७८ ॥ ॥ ॥

णादिजनितभगवदपरोक्षज्ञानादेवमोक्षइत्युक्तं । कातर्हिकामक्रोधादीनांमोक्षदायकत्वप्रतिपादकभागवतवचनानांगतिरितिचेत् ।
न । तत्रैव कामंदहंतिकृतिनोननुरोषदृष्ट्यारोषंदहंतमुततेनदहंत्यसह्यं । सोयंयदंतरमलंनिविशन्बिभेतिकामःकथंनुपुनरस्यमन
इश्रयीतेत्यादिवचनैःकामक्रोधादीनांदोषत्वस्यकीर्तनात् । लोकेपिकामक्रोधादीनांशिष्टैर्दोषत्वेनपरिगणनान्नकापिगतिः । हरिभ
क्त्यादेश्चलोकेवेदेपुराणादौचक्कापिदोषतयाऽकथनेनगुणतयैवकथनेनचमानांतराविरुद्धमानप्रतिपादितानांश्रवणमननादीनामेव
साधनत्वौचित्यात् । नचवाच्यंलौकिककामादेरेवदोषत्वं । नभगवद्विषयककामादेरिति । रामकामुकशूर्पनख्याःकर्णनासाच्छेदयो ॥ ५८९ ॥

र्निष्कारणत्वप्रसंगात् । एकपत्नीव्रतत्वादेवतदनंगीकारोनतुकामस्यदोषत्वादितिचेत् । न । कामस्यदोषतयाऽपराधत्वाभावेतच्छि
क्षणायोगात् । पुण्येनपुण्यंलोकंनयतिपापेनपापमितिश्रुत्यातत्तत्कृतपापेनैवभगवतश्शिक्षकत्वश्रवणात् । पापांतरस्यनिमित्तत्वक
ल्पनेदृष्टहान्यदृष्टकल्पनयोःप्रसंगात् । षोडशसहस्रपत्नीपतेस्तस्यत्वदुक्तनियमाभावाच्च । उभयोरप्याप्तवाक्यत्वेनाप्रामाण्यायो
गादेकस्यार्थांतरंवाच्यमितिचेत् तर्हिसंभवदर्थांतरस्य दोषस्यगुणत्वप्रतिपादकतयास्वतोपिविरुद्धस्यपूर्वोत्तरविरुद्धस्यसयुक्तिकनि

द्वारिद्वारिहरेर्लोकेसदासर्वत्रसेविषु ॥ अनाद्यनंतकालेष्वप्येवंकैंकर्यकर्मसु ॥ ७९ ॥
निबिडज्ञानवैराग्यभक्त्यादिगुणसंपदा ॥ शापाद्युपाधिमूलोसावीषद्द्वेषोजयादिषु ॥ ८० ॥
अस्वाभाविकदोषत्वान्नैवमोक्षनिरोधकृत् ॥ इत्येवमुक्तिदत्वेनकीर्त्यतेनारदादिभिः ॥ ८१ ॥
भृत्यापराधसहनशीलत्वस्तुतयेहरेः ॥ केवलद्वेषतोमोक्षइतिनर्षेर्मनोगतं ॥ ८२ ॥
कतमोपिनवेनस्यपंचानांपुरुषंप्रति ॥ इत्युत्तरश्लोकएववेनेसाधनपंचकं ॥ यन्नेत्याह
ततोद्वेषोद्वेषमात्रंकथंभवेत् ॥ ८३ ॥ ॥ ॥ ॥

रवकाशबहुतरास्मद्वाक्यविरुद्धस्यचत्वदीयवाक्यसमुदायस्यैवार्थांतरंवाच्यमितिभावेनाह ॥ गोप्यइति ॥ इतिभागवतेप्रोक्तंका
मद्वेषादिसाधनमित्यस्यकीर्त्यतइत्यनेनसंबंधः । ऋषेर्नारदस्य । ऋषिरित्यनेनभगवद्भजकतापसकुलोत्पन्नस्यपरमवैष्णवस्यकृष्ण
द्वेषगुणीकरणमेवनहार्दं । किंतूक्तएवभावइतिसूचयति ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ इत्युत्तरश्लोके पंचानां वेनेभ

त्त्यभावस्यस्वतस्सिद्धत्वात्तदतिरिक्तकामादिपंचोपायानांमध्येकतमोपिएकोपिनेत्यर्थप्रतिपादकोत्तरश्लोके । यत्यस्मात् । द्वेषः द्वेषादित्यत्रोक्तद्वेषः । द्वेषमात्रं सेवादिगुणसाहित्यरहितसंपूर्णद्वेषइत्यर्थः ॥ ८३ ॥ तेनैवनारदेनैव । तस्य स्वेनैवोक्तद्वेषस्य । विदः ज्ञानिनः ॥ ८४ ॥ तदेववाक्यंपठति ॥ भगवादिति ॥ इतिवाक्ये ॥ ८५ ॥ कीर्तयेदित्युपलक्षणं । कथंनिषेधेच्चेत्यपि

पूर्णोहिभगवद्वेषोवेनेतेनैवकीर्तितः ॥ कथंपुनर्निषेधोहितस्यैवस्याद्विदोमुने: ॥ ८४ ॥
भगवन्निंदयावेनोद्विजैस्तमसिपातितः ॥ इतिनिंदाख्यविद्वेषस्तमोहेतुरुदीरितः ॥८५॥
इदानींमोक्षदत्वंचकथंतस्यैवकीर्तयेत् ॥ त्रिकालदर्शीसमुनिःकिंतात्कालिकदृक्कन ॥८६॥
अतोग्रांथिकमुद्राज्ञोनैवंव्याख्यातुमर्हति ॥ तदीषद्द्वेषएवासौसुगुणस्तोममध्यगः॥८७॥
हिरण्यकशिपुश्चापिभगवन्निंदयातमः ॥ विविक्षुरत्यगात्सूनोःप्रह्लादस्यानुभावतः॥८८॥
यदनिंदत्पितामह्यंत्वद्भक्तेमयिचाघवान् ॥ तस्मात्पितामेपूयेतदुरंताद्दुस्तरादघात् ॥ ८९ ॥

द्रष्टव्यं ॥ ८६ ॥ एवं आपातार्थप्रतिपादकतया । तत्तस्मात् । असौ मोक्षसाधनतयोक्तः नेतिनिषिद्धश्च ॥ ८७ ॥ ८८ ॥ किंच भागवतएवभगवद्वेषस्यतमोहेतुदोषतयाबहुषुस्थलेषुनिर्णीतत्वात् सूत्रकृताचविद्यायाएवसाधनत्वेननिर्णीतत्वात्मोक्षसाधनतयो च्यमानोद्वेषस्समुद्रविलोडितहिंगुबिंदुवत्भक्त्यादिसाधनसमुद्रांतर्निलीनईषद्द्वेषएवभवेदित्याह ॥ हिरण्यकशिपुरित्यादिना ॥

यदनिंददितिप्रह्लादवाक्यं । अनिंददितियत् मयिचाघवानपराधवानितियत् तस्मादघादितिसंबंधः ॥ ८९ ॥ ततःस्थलात् । अपिपदेननिंदंस्तुकिमुतेतिसूचितं ॥ ९० ॥ ९१ ॥ तौ श्रुतिसूत्रकृतौ ॥ ९२ ॥ साक्षादुक्तानिउपलक्षितानिचसाधनानिक्रमेणसंगृह्णाति ॥ श्रवणमिति ॥ तस्मात् उक्तश्रुतिस्मृतियुक्त्यादिप्रमाणसमुदायात् । हरेरितिपदंसाधनषट्केपिसंबध्यते । भक्तिपदंविरक्तेरुपलक्षकं । अयमत्रक्रमः । प्रथममिममुद्धरामीतितद्योग्यतापरिपाकैकनिबंधनाहरेरनिमित्तकृपा । ततस्तस्मिन्मदीयोयमि

निंदांभगवतश्शृण्वंस्तत्परस्यजनस्यवा ॥ ततोनापैतियस्सोपियात्यधस्सुकृताच्युतः ॥ ९० ॥
इत्यादिवाक्यसंदर्भैस्तमोहेतुर्यतस्स्फुटं ॥ निर्णीतोभगवद्द्वेषस्ततोप्युक्तोर्थएवहि ॥ ९१ ॥ सूत्र
कृच्चाहयद्विधैवतुनिर्धारणादिति ॥ नान्यःपंथाइतिस्पष्टोवेदस्तौकोनुलंघयेत् ॥ ९२ ॥ श्रवणं
मननंतस्माद्ध्यानंसाक्षात्कृतिर्हरेः ॥ भक्तिःप्रसादइत्येतेमुक्तेस्सोपानपङ्क्तयः ॥ ९३ ॥ ॥

तिरीषत्स्नेहरूपःअनुग्रहापरपर्यायोहरेरीषत्प्रसादः । ततोहरेरन्यत्रेषद्विरक्तिः ततोहरावीषद्भक्तिः । ततःपुनरीषदभिवृद्धोहरेःप्रसादः ततश्श्रवणं । ततःपुनःपूर्वतोप्यभिवृद्धविरक्तिभक्तिप्रसादाः । ततोमननं तस्मात्पुनरभिवृद्धविरक्तिभक्तिप्रसादाः । ततोनिरंतरध्यानरूपंनिदिध्यासनं तस्मादतिशयितेविरक्तिभक्ती अतिशयितोभगवत्प्रसादश्च । तेभ्यःप्रसन्नभगवतैवप्रतिबंधकाविद्यायामपसारितायांतदपरोक्षज्ञानं । ततस्स्वयोग्यपरिपूर्णविरक्तिभक्तिप्रसादाः । ततआत्यंतिकदुःखनिवृत्तिरूपःपरमानंदावाप्तिलक्षण

श्चमोक्षइतिमोक्षसाधनपङ्क्तयः । ततश्चमहोपकारकेहरौस्वरूपभूताफलरूपाचनित्याभक्तिः । तन्निमित्तोहरेर्नित्यप्रसादश्चेतिभक्ति प्रसादयोस्सर्वत्रान्वयप्रदर्शनायसामान्येनैवकीर्तनं । अन्यथामहाभक्तिर्महाप्रसादइत्यवक्ष्यत् ॥ ९३ ॥ यदापश्यःपश्यतेरुग्मव र्णकर्तारमीशंपुरुषंब्रह्मयोनिं । तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैतीतिश्रुतिमर्थतस्संगृह्णन्साकारसगुणसर्वेश्वरत्वा दिविशिष्टभगवत्साक्षात्कारएवमोक्षसाधनं नतुपरोदीरितमैक्यज्ञानंनिर्विकल्पकंवातद्धेतुरितिदर्शयति ॥ रुग्मवर्णमित्यादिना ॥

रुग्मवर्णंचकर्तारमीशंपुरुषरूपिणं ॥ ब्रह्मतातंमहात्मानंपद्मनाभंपरात्परं ॥ ९४ ॥ यदापश्य
तिजीवोयंतदाकर्मद्विरूपकं ॥ हित्वानिर्दुःखत्वपूर्वैःपरंसाम्यमुपैतिसः ॥ ९५ ॥ इतिश्रुतौमो
क्षहेतुज्ञानस्येत्थंविनिर्णयात् ॥ ज्ञानंसरूपसाकारसगुणेश्वरगोचरं ॥ साध्यंमोक्षार्थिभिर्भक्तै
र्नान्यच्छ्रुतिविरोधतः ॥ ९६ ॥ यस्स्वतःपरतोवेषद्विरक्तोविष्णुभक्तिमान् ॥ सारासारविवेक
ज्ञोमुमुक्षुश्चसमुक्तये ॥ अध्यायद्वयरूपस्यशास्त्रस्यश्रवणंचरेत् ॥ ९७ ॥ ॥ ॥

ब्रह्मयोनित्वस्यपद्मनाभमूर्तावेवसंभवात्पद्मनाभमित्युक्तं । निर्दुःखत्वपूर्वैःनिर्दुःखत्वनित्यसुखत्वनित्यदेहत्वपूर्वैः । अन्यत् निर्गु णत्वादिज्ञानं ॥ ९४ ॥ ९५ ॥ ९६ ॥ इदानीमध्यायचतुष्टयार्थप्रतिपादकेनाथातोब्रह्मजिज्ञासेत्यादिमसूत्रेणस्वोक्तार्थसंगमयन् श्रवणादीनांकालंविभज्यदर्शयति ॥ यस्स्वतइत्यादिना ॥ प्रागेवशास्त्रश्रवणाभावेनशास्त्रजनितवैराग्यादेरयोगात्स्वतःपरतो



वेत्युक्तं । स्वतः स्वयोग्यतापरिपाकबलात् । स्वतःस्वतंत्रपरमात्मनोवा परतः वैराग्यादिगुणभरितमहत्समागमबलादित्यर्थः । ईषदितिपदंविशेषणचतुष्टयेनापिसंबध्यते । सामान्यतोवैराग्यादिविशेषणसंपत्त्यनंतरमितिसौत्राथशब्देनैवायमर्थोपिसंगृहीतः । विशिष्याज्ञातेवस्तुन्याशोकादर्शनेनमोक्षसाधनब्रह्मज्ञानायेत्यर्थप्रतिपादकातश्शब्दबोधितविषयसाधनफलेषुश्रोतुस्तादर्थ्यार्थकवि भक्तिसूचिताशातिशयजननायतत्प्रतिपादकसकलशास्त्रस्यापिसाक्षाद्ब्रह्मस्वरूपनिरूपकाध्यायद्वितयेपारंपर्येण तत्संबंधिन्यध्या यद्वितयेचब्रह्मजिज्ञासात्वस्यविद्यमानत्वात् ब्रह्मजिज्ञासापदोदितंसकृच्छ्रवणंकार्यं । अयमेकश्रवणकालः । अथसकृच्छ्रवणसंप त्त्यनंतरं पुनर्विशिष्योत्कंठितचतुर्थाध्यायोक्तफलस्य तत्साधनज्ञानपादोक्तापरोक्षज्ञानस्यच अतो मोक्षाया तोज्ञानायेतिचसौत्रा तःपदोदितस्य साक्षात्परंपरयाचसाधनीभूतस्योपासनापादोक्तस्य सौत्रजिज्ञासापदेनैवमुख्यतःकर्तव्यतयानिरूपितस्य शास्त्रा भ्यासाख्यमननस्य ध्यानस्यच सम्यक्संपत्तिपर्यंतमुत्कंठिततयाऽतःपदेनाप्युक्तस्यच सम्यक्सिद्ध्येविचार्यमाणभगवद्गुणगणनि र्दोषत्वनिरूपणपराध्यायद्वयार्थस्य भगवत्येवमनोनैरंतर्योपयोगिवैराग्यभक्त्युत्पादकपादद्वयार्थस्यचातःपदोदितसम्यग्बोधायोपा सनाज्ञानफलेषुवादिविवादपरिहारायचासकृच्छ्रवणमपिकर्तव्यं । अथ सार्धाध्यायद्वयार्थस्यसम्यग्बोधसंपत्त्यनंतरं अन्यत्रसम्य ग्वैराग्यातिशयेनहरौसम्यग्भक्त्यतिशयेनच तल्लोकएवस्थास्यामितमेवपश्यामीतिपुनर्विशिष्योत्कंठितातःपदोदितमोक्षायज्ञानाय च मननध्यानात्मिकामुख्याब्रह्मजिज्ञासाकर्तव्या । तत्राप्याध्यानशक्तेर्मननं आज्ञानाच्चध्यानमितिविवेकः । वैराग्यमारभ्यबंध ध्वंसात्मकमुक्तिपर्यंतसकलव्यापाराणां जडत्वेनस्वजन्मनिस्वनिष्ठान्यजनकत्वशक्तौचस्वातंत्र्यायोगात् अवांतरकर्तुर्जीवस्यचा

स्वतंत्रत्वा न्मुमुक्षोस्स्वभक्तस्यपरमेष्टरूपाणामेषांव्यापाराणांसिद्धये पूर्णतयाफलांतरानपेक्षस्वतंत्रकर्तुर्भगवतःप्रसादोवश्यमपेक्ष
णीयः । राजप्रसादादेवराजपुरुषाणामिष्टसंपत्तिदर्शनात् । प्रसादश्चनःप्रभुरयमितिनिर्व्यलीकतत्तत्स्नेहादेवतेषुतेषुलोकेदृष्टः ।
स्नेहश्चस्वोपकारकेदृष्टः । उपकारातिशयेसातिशयश्च । एवंप्रसादोपिभक्तिस्नेहादेवदृष्टः । तदतिशयेसातिशयः । अन्योन्याश्रय
परिहाराय प्राक्तावदेनमुद्धरामीतिकस्मिंश्चित्पुरुषेतत्पुण्यपरिपाकैकनिबंधनोनिमित्तांतरशून्यश्चप्रसादोप्येकोदृष्टः । अतःप्रकृतेपि
प्राक्तावद्दीनमेनंभक्तमुद्धरामीतितद्योग्यतापरिपाकैकनिबंधनोनिमित्तांतरशून्यश्चहरेःप्रसादोवक्तव्यः । उपरिचोत्तरोत्तरप्रचुरश्रव
णादिरूपस्वव्यापारेष्वपिस्वोपकारकेभगवतिमध्येमध्येसातिशयाभक्तिःकर्तव्या । तदभिव्यक्तोहरेःप्रसादश्चतादृशोवक्तव्यः ।
एवंचप्राथमिकप्रसादमारभ्यक्रमेणाभिवृद्धचरममहाप्रसादपर्यंतंप्रसादपरंपरायाः प्राथमिकोपकारफलितभक्तिमारभ्यापरोक्षज्ञाना
ख्यमहोपकारफलितमहाभक्तिपर्यंतभक्तिपरंपरायाश्चसूत्रकृतएवाभिप्रेतत्वान्नानुक्तकथनमिदं । यद्वा अतः जडप्रेरकतयातत्रतत्र
प्रस्तुतात् न अ इतिव्युत्पत्त्यासर्वविलक्षणत्वेनाकारशब्दवाच्यपरमात्मरूपात् मोक्षदायकतयारुद्रादिप्रसादविलक्षणाद्वाभगवत्प्र
सादात् अतः क्रमिकोपकारफलतयाप्रसक्तभगवद्भक्तितश्चेतिसौत्रातश्शब्दादेवप्रसादभक्तिपरंपरापिसूत्रकृतैवोक्ता । एतदेवाभि
प्रेत्यप्राग्ग्रंथकृतापिसाधनमालाग्रथिता । अस्माभिश्चटीकायांविवृता । इदानींपुनस्तमेवार्थंसूत्रारूढंकर्तुंयस्स्वतःपरतोवेत्याद्युक्तं ।
तस्यसर्वस्यतात्पर्यंसंगृह्यसामान्यतइत्यादिनामयापिप्रपंचितमितिज्ञेयं । भाष्योक्तसकलार्थानांसौत्रपदारूढत्वंभाष्यकृतोभिप्रेतमे
व । प्रपंचितंचतत्रतत्रभाष्यकृताटीकाकृताच । स्वमनःप्रेरकतयासदाहृदिसन्निहितेनतेनैवप्रेरितंचप्रमेयंग्रंथकारेणप्राक्तत्रतत्रोक्त

मिदानीमुच्यतेवक्ष्यतेच । वीणांवादयतोवीणावादनकौशलमिवसर्वविद्यासुकृतिनःपूर्णप्रमतेरेवेयंकृतिः । अहंतुवीणावन्निमित्त मात्रमितिवदन्ग्रंथकारोनक्वाप्यकथितकथकः । अर्जुनप्रतिज्ञापूरककृष्णकृतिवत्टीकापीयंकृतपुण्यानांतेषामेवकृतिः । नाकृतपु ण्यानामस्मिन्महाकार्येऽधिकारइतिज्ञातव्यं ॥ ९७ ॥ अध्यायचतुष्टयात्मकशास्त्रस्यनैकप्रकारेणैवशास्त्रत्वं । किंत्ववांतरविभा गोप्यस्तीत्याशयेनोक्तं ॥ विषयस्येति ॥ विषयस्य विषयरूपब्रह्मणएव शास्तृत्वात्प्रतिपादकत्वा द्ब्रह्मस्वरूपनिरूपकत्वादित्य

विषयस्यैवशास्तृत्वान्मुख्यंशास्त्रमिदंकिल ॥ तदंगंशास्त्रमितरत्फलसाधनबोधकं ॥
प्रवर्तकस्यचर्चात्रसासाक्षाद्विषयस्ययत् ॥ ९८ ॥ वैराग्यभक्तिपादौचश्रुत्वाध्यायद्वय
श्रुतेः ॥ सम्यक्सारासारवेदीभक्तिवैराग्यदार्ढ्यवान् ॥ ९९ ॥ सार्धाध्यायद्वयोक्तार्थसं
पन्नोथविमुक्तये ॥ तद्धेतुद्दृष्टयैचपुनश्शास्त्राभ्यासस्वरूपिणीं ॥ मननाख्यांध्यानरूपांजि
ज्ञासांचाचरेत्किल ॥ १०० ॥ ध्यानस्यपरिपाकेतुतंदृष्ट्वामुच्यतेकिल ॥ १०१ ॥ ॥

र्थः । इदंअध्यायद्वयं । तदंगं तदंगभूतशास्त्रं । इतरत् अध्यायद्वयं । प्रवर्तकस्य उद्देश्यतयाप्रवर्तकस्य । स्वयोग्यसाधनेनफल संपत्तिमुद्दिश्यतत्रप्रवर्तनादितिभावः । यत्यस्मात् ॥ ९८ ॥ अध्यायद्वयश्रुतेस्सारासारवेदी । ब्रह्मणःसारतयाऽन्येषामसारत यातत्रनिरूपणात् । वैराग्यभक्तिपादौश्रुत्वाचभक्तिवैराग्यदार्ढ्यवानितिसंबंधः ॥ ९९ ॥ १०० ॥ तंपरमात्मानं ॥ १०१ ॥ अतः

युक्ति- सौत्रपदावलीसत्त्वात् । आदिसूत्रे प्रथमसूत्रे ॥ १०२ ॥ १०३ ॥ साधनंनिरूप्यफलंचकिंचिद्विवेचयति ॥ उत्क्रांतीति ॥ मलिका
॥१५॥ बुद्धिशुद्ध्यै अस्मन्मनःपावनीकरणाय ॥ १०४ ॥ चिरं ब्रह्मणोमुक्तिकालपर्यंतं ॥ १०५ ॥ तदंतेपरांते ॥ १०६ ॥ १०७ ॥ फलसौ०

अतश्श्रवणवैराग्यभक्तिशास्त्रविचारणाः ॥ ध्यानंचभगवद्दृष्टिस्तद्भक्तिस्तदनुग्रहः ॥ १०२ ॥
इमानिसाधनान्यंतेफलाध्यायोदितंफलं ॥ इत्यादिसूत्रेसर्वोपिशास्त्रार्थःकथितःकिल ॥१०३॥
उत्क्रांतिमार्गगम्यासिभोगरूपंफलंसतां ॥ फलाध्यायेतुकथितंबुद्धिशुद्ध्यैविचार्यते ॥ १०४ ॥
ज्ञानीज्ञानोदयेजातेब्रह्मनाड्याविनिर्गतः ॥ अर्चिराद्यध्वनाप्राप्यब्रह्मलोकेचिरंवसेत् ॥ जीव
न्मुक्तिदशासैवज्ञानिनांकीर्त्यतेबुधैः ॥ १०५ ॥ द्विपरार्धात्मकःकालःपरइत्येवकथ्यते ॥ परस्या
र्धंपरार्धंयत्प्राहुश्शब्दविचक्षणाः ॥ १०६ ॥ ब्रह्मणश्शतवर्षात्माकालस्तस्मात्पराभिधः ॥
तदंतेकिलसर्वेषांप्राग्ज्ञातपरमात्मनां ॥ तेनैवब्रह्मणासाकंमहामोक्षोभविष्यति ॥ १०७ ॥
वेदांतज्ञानतस्सम्यङ्निश्चितार्थाविरागिणः ॥ यतयश्शुद्धसत्वास्तेब्रह्मलोकेवसंतिहि ॥ १०८ ॥
सर्वेपरांतकालेतुपरामृतपदोदितात् ॥ नारायणान्नित्यमुक्तात्परिमुच्यंतिसंसृतेः ॥ १०९ ॥

उक्तार्थप्रतिपादिकां वेदांतविज्ञानसुनिश्चितार्थास्सन्यासयोगाद्यतयश्शुद्धसत्वाः । तेब्रह्मलोकेतुपरांतकालेपरामृतात्परिमुच्यंतिस ॥५९३॥

र्वइतिश्रुतिमर्थतोगृह्णाति ॥ वेदांतेति ॥ सन्यासयोगादित्यस्यफलितकथनंविरागिणइति ॥ १०८ ॥ १०९ ॥ ११० ॥ अतः
वेदांतविज्ञानसुनिश्चितार्थैःप्राप्यत्वात् । अयं परांतकालीनः । अन्यः ब्रह्मप्रलयादप्यन्यकालवर्ती ॥ १११॥ इयंश्रुतिः ॥११२॥
इदानींयोग्यायोग्यजीवानादायगतस्य महत्तत्वात्मनाभगवतोग्रासीभूतस्यब्रह्मणस्स्वेनसहमुच्यमानैर्जीवैस्सहलिंगदेहभंगप्रकारंस
विस्तरंदर्शयति ॥ उदरइति ॥ जीवान्सर्वान् उत्तममध्यमाधमभेदेनत्रिविधान् । वैकुंठांतःपुरस्थे चतुर्दिक्षुस्थितामुक्तगम्यद्वा

ल्यब्लोपेपंचमीचेयंभवेच्छब्दज्ञसंविदा ॥ परामृतंप्राप्यमुक्ताइत्यप्यर्थश्श्रुतेस्तदा ॥ ११० ॥
अतःपरममोक्षोयंनान्योसावस्तिजानतां ॥ इत्याहवैदिकीवाणीविशदासर्वसंमता ॥ १११ ॥
अतोविमुक्तिकालोयंश्रौतत्वान्नापरोश्रुतेः ॥ परांतकालमेवेयंमुक्तिकालंयतोब्रवीत् ॥ परांत
कालस्सकिलमहत्तत्वलयोयदा ॥ ११२ ॥ उदरेवासुदेवस्यजीवान्सर्वान्विधिस्तदा ॥ निवे
श्यसर्वमुक्त्यर्हान्जीवानादायसत्वरः ॥ ११३ ॥ वैकुंठांतःपुरस्थेतुविरजाख्येसरिद्वरे ॥ नित्ये
चिद्रूपसलिलेरजश्शब्दोपलक्षितैः ॥ ११४ ॥ ॥ ॥

रचतुष्टयादंतर्मुक्तनगरींपरितोविद्यमाने चतुर्द्वारपर्यंतंपरिलंबिन्याःबंधकीभूतप्रकृतेःपरमव्योमाख्यमुक्तपुर्याश्चमध्यप्रदेशेऽमुक्तग
मनप्रतिबंधकतयापरिखावत्परितस्स्थितइत्यर्थः । प्रधानपरमव्योम्नोरंतराविरजानदीतिपुराणवाक्यादयमर्थोवगंतव्यः । चिद्रूप
सलिले लक्ष्म्यात्मकसलिले । तत्रप्रयुज्यमानविरजाशब्दार्थमाह ॥ रजश्शब्देति ॥ तेषांत्रिगुणानां । भूतेंद्रियमनोमात्रं केव

युक्ति- लंसूक्ष्मपंचभूतदशेंद्रियमनआख्यषोडशकलात्मकं । त्रिधामगैः वैकुंठश्वेतद्वीपानंतासनस्थैः ॥ ११३ ॥ ११४ ॥ ११५ ॥११६॥ मल्लिका०
॥ १६ ॥ एषा वेदांतेतिप्रागुक्ता । तत्तस्मात् स्पष्टंश्रुतावुक्तत्वात् ॥ ११७ ॥ ततः ब्रह्मणोलिंगदेहनाशानंतरं । चिद्रूपसलिलसंप्लवे महा फलसौ०
लक्ष्म्यात्मकजलसमुदायोपरि । वटपत्रपुटे लक्ष्म्यात्मकवटपत्रपुटे ॥ ११८ ॥ अयं परांताख्यः । तस्मात् परममोक्षरूपत्वात्

त्रिगुणैर्वर्जितेतेषांभजनेतिपटीयसि ॥ स्नात्वाभूतेंद्रियमनोमात्रांत्रिगुणरूपिणं ॥११५॥
लिंगदेहंविनिर्भिद्यप्राङ्मुक्तैश्चात्रिधामगैः॥ सहमुक्तैश्चसहितोवासुदेवोदरंविशेत् ॥११६॥
एवंपरांतकालेस्मिन्मुच्यंतेब्रह्मणासह ॥ इत्याहोपनिषत्सैषातत्तत्वमिदमेवहि ॥११७॥
ततश्चिद्रूपसलिलसंप्लवेसतिकेशवः ॥ वटपत्रपुटेशेतेलक्ष्म्यासहकिलप्रभुः ॥ ११८ ॥
अतःपरममोक्षस्यकालोयंनात्रसंशयः ॥ तस्माद्ब्रह्मलयस्सोयंमहाप्रलयएवहि ॥ ११९ ॥
सोयंलयश्चकल्पांतेसंकर्षणमुखाग्निना ॥ प्रलयार्केणचजगद्दाहेसांवर्तकोदकैः ॥ विलो
डितंचतद्ब्रह्मसर्वंजलमयंभवेत् ॥ १२० ॥ ॥ ॥

॥ ११९ ॥ सूक्ष्मलिंगदेहलयप्रकारमुक्त्वास्थूलजगल्लयप्रकारमप्याह ॥ सोयमिति ॥ कल्पांते सोयं वक्ष्यमाणस्स्थूलजगल्लयश्च ॥५९४॥
लिंगदेहलयात्प्रागेवास्ति । फलसौरभेमुक्तिरूपलयतयालिंगदेहलयस्यांतरंगत्वात्तस्यैवप्राक्कथनं ॥ १२० ॥ तेजसा बाह्यावरणभूत

तेजसा । ततूतेजः । तस्यगगनस्य ॥ १२१ ॥ १२२ ॥ इति अनेनप्रकारेणैवस्थूलजगल्लयः । ज्ञानबलतः ज्ञानस्यैवबलतः ॥१२३॥यद्यपिज्ञानेननाशाख्यबाधोनास्ति । तथापिनास्तित्वबोधाख्यबाधोस्तीत्यतस्सोपिनास्तीत्याह ॥ ज्ञानेनेति ॥ अतस्त्वद

जलंचतेजसाशुष्येत्तच्चवायौप्रशाम्यति ॥ वायुश्चगगनेलीनोलयस्तस्याप्यहंकृतौ ॥
अहंकारस्यमहतितस्यस्यात्प्रकृतौलयः ॥१२१॥ प्रकृतिश्चस्वभावस्थास्वभावंप्रकृतिंविदुः॥
अतस्तस्यास्तुनलयस्सानित्यैवपरात्मवत् ॥१२२॥ इतिश्रुतिपुराणादौतत्रतत्रप्रदृश्यते॥
एवंचज्ञानबलतःकस्यनाशोभवेद्वद ॥१२३॥ ज्ञानेनैवचनास्तित्वंकस्यविश्वस्यजायते ॥
प्रलयेनास्तितायातुसाध्वंसादेवकेवलं ॥ १२४ ॥ किमन्यन्नाशयेज्ज्ञानीकस्यवानास्ति
तांदिशेत् ॥ स्वदेहस्यापियद्दाहान्नास्तितानस्वसंविदा ॥ १२५ ॥ अतोजगद्बाधकथास्वा
बोधादेवकेवलं ॥ उच्चैर्नवाच्याविद्वत्सुमहाहास्यास्प(दं)दाहिसा ॥ १२६ ॥ इतोन्यस्स
र्वसंहारोनश्रौतोनापियौक्तिकः ॥ घटादिसर्वनाशोहिस्वस्वकारणशेषवान् ॥ १२७ ॥

भिलषितत्रिकालनास्तिताख्यबाधस्यनात्रावकाशइतिभावः ॥१२४॥ अन्यत् उक्तप्रकारेणनष्टजगतोन्यत् । दाहात् संकर्षणमु खानलेनदाहात्॥१२५॥अतः दृष्टजगतः उक्तविधयैवनाशात् । जगदंतरस्यचाभावात् । सा ज्ञानान्नाशकथा॥१२६॥इतः ब्रह्मप्र

लयात् । सर्वसंहारः ब्रह्मव्यतिरिक्तप्रकृतिप्राकृताख्यसकलजगत्संहारः ॥ १२७ ॥ कार्यनाशेपि सकारणकार्यनाशेपि ॥ १२८ ॥ १२९ ॥ द्विरूपा कारणकार्यनाशरूपा । इयं घटमारभ्यप्रकृतिपर्यंता । सैव प्रकृतिरेव ॥ १३० ॥ निरूपितप्रमेयतःसिद्धमनुमानमाह ॥ नाशत्वादिति ॥ विमतोनाशः परोदीरितसर्वनाशः ॥ १३१ ॥ यौक्तिकोनहि ॥ १३२ ॥ कुतोनयौ

दाहेनकार्यनाशेपिभस्मशेषःप्रदृश्यते ॥ स्वस्वावयवनाशेपिसूक्ष्मसूक्ष्मतदंशका ॥ शिष्टाभवंतितद्वस्तुकथं
स्यादसदेवहि ॥ १२८ ॥ अतोयायात्वयोच्यतेसासानाशपरंपरा ॥ कथंमुंचेदुपादानसूक्ष्मांशांशपरंपरां
॥ १२९ ॥ परंपराद्विरूपेयंप्रकृतौपर्यवस्यति ॥ सर्वस्यांतेयतस्सैवशिष्टानष्टाचनैवसा ॥ १३० ॥ नाशत्वा
द्विमतोनाशस्स्याद्भावांतरशेषवान् ॥ घटनाशवदित्येषाविदोषायुक्तिरस्तिहि ॥ १३१ ॥ निश्शेषवस्तुना
शस्यनाशमात्रेप्यदर्शनात् ॥ वक्राभासोक्तिमात्रेणनैवस्याद्धिसयौक्तिकः ॥ १३२ ॥ अदृष्टकल्पनादोषो
यतस्सर्वत्रसंचरेत् ॥ श्रुतयश्चपुराणानिमन्मतस्यैवसाक्षिणः ॥ १३३ ॥ किंचसर्वविनाशोननाशस्यास्या
विनाशनात् ॥ नापिभावस्यसर्वस्यनाशोब्रह्माविनाशनात् ॥ १३४ ॥ ॥ ॥

क्तिकइत्यतआह ॥ अदृष्टेति ॥ १३३ ॥ ययाकयाचनयुक्त्यासर्वनाशंसाधयतोपिस्वोक्तयुक्त्यैवांततस्साध्यमानसकलजगन्नाशस्यैवोर्वरितत्वेनसर्वनाशप्रतिज्ञैवेयंव्याहतास्यादित्याह ॥ किंचेति ॥ अस्य साध्यमानसर्वनाशाख्यस्य । तस्यापिनाशेपुनस्सर्वजगदुन्मज्जनप्रसंगादितिभावः । अस्तुतर्हिसर्वभावविनाशइत्यतआह ॥ नापीति ॥ प्राचीनपक्षेपीदंदूषणमनुसंधेयं ॥ १३४ ॥



तर्हिब्रह्मव्यतिरिक्तभावस्यनाशोस्त्वित्यतआह ॥ ब्रह्मभिन्नस्येति ॥ जीवस्यापिब्रह्मभिन्नत्वादितिभावः । ननुपरमार्थतोमयाजीवब्रह्मभेदानंगीकारात्कथंब्रह्मभिन्नेत्युक्तेजीवस्यप्राप्तिरितिचेत् तर्हिपारमार्थिकभेदस्यत्वयाक्वाप्यनंगीकाराद्ब्रह्मभिन्नपदेनैवजगतोप्यप्राप्तिस्स्यात् । अपारमार्थिकभेदमादायजगतःप्राप्तिश्चेत् ततएवजीवस्यापिप्राप्तिस्स्यादित्याह ॥ मिथ्याभूतइति ॥ तद्भेदः जीवेश्वरभेदः ॥ १३५ ॥ पक्षांतरमाशंक्यदूषयति ॥ भावेति ॥ जीवस्य जीवोपाधिभूतलिंगदेहस्य । तदुपहितजीवस्यवा ।

ब्रह्मभिन्नस्यभावस्यनाशेजीवोपिनंक्ष्यति ॥ मिथ्याभूतोस्तितद्भेदःपरमार्थोनकुत्रचित्
॥ १३५ ॥ भावकार्यस्यसर्वस्यनाशआशास्यतेयदि ॥ जीवस्यजीवधर्माणांकालादेर्गग
नस्यच ॥ विनाशोनादिभावानांभवेदाकस्मिकस्तदा ॥ १३६ ॥ ब्रह्मान्यानादिनाशेतु
नश्येद्ब्रह्मापितादृशं ॥ अतस्सर्वविनाशोयंविद्वदग्रेनशोभते ॥ १३७ ॥ ॥

जीवधर्माणांअल्पज्ञत्वादीनां ॥ १३६ ॥ ननुब्रह्मान्यजडभूतसकलभावनाशएवसर्वनाशोंगीक्रियतेअतःकोदोषइतिचेत् । न । अनादित्वेनांगीकृतगगनादीनांनाशप्रसंगात् । अस्तुकोदोषइत्यतआह ॥ ब्रह्मान्येति ॥ तादृशं अनादिभावभूतं । अनश्वरब्रह्मवदनादिभावानांगगनादीनामविनाशिसर्वनाशनिष्ठत्वेननाशासंपादकजडत्वप्रवेशमात्रेणनाश्यत्वाशायोगादितिभावः । एवमप्यन्योन्याभावात्मकजीवब्रह्मभेदस्यानष्टत्वेनत्वदभीष्टासिद्धेः ब्रह्मधर्मतयाप्रतीयमानजडभूतत्वदैक्यस्यैवनष्टत्वेनेष्टहानेश्चेत्यप्यूह्यं ।

युक्ति- नित्यत्वश्रुतिबलान्नब्रह्मणोनाशइतिचेत्ततएवगगनादीनामपिनाशइतिसंतोष्टव्यं । आकाशवत्सर्वगतश्चनित्यइतिश्रुत्याब्रह्मण मल्लिका
॥ १८ ॥ स्संदिग्धयोस्सर्वगतत्वनित्यत्वयोर्दृष्टांततयोक्तगगनेनिश्चितयोस्तयोस्सत्त्वस्यश्रुत्यभिप्रेतत्वात् । अतएवगगननित्यत्वादेनौंपचारि फलसौ०
कत्वं । दृष्टांतस्यभंगेदार्ष्टांतिकस्यसुतरांभग्नत्वेनब्रह्मणिततोप्यतिशयितौपचारिकत्वप्राप्तेः । अत श्श्रुतिसिद्धनित्यत्ववतांनाशायो
गात्केवलंस्वमतबलेनपदार्थानांनाशांगीकारेचनिरीश्वरवादिभिस्तवब्रह्मणएवनाशयितुंशक्यत्वाच्च । अयं इदानीमभावात्कालां
तरेकल्प्यमानः । कदाचिदस्यसर्वस्यनाशोभविष्यतीतिवासकालःसर्वविनाशवानितिवासाधयताकालस्यावश्यमंगीकार्यत्वादिति
भावः ॥ १३७ ॥ किंचऐक्यरक्षणायखल्वयंसर्वविनाशोंगीक्रियते । ब्रह्मातिरिक्तभावरूपजडविनाशांगीकारेच अविनाशीवाअ

अणुत्वेशवशत्वादेरनादेरविनाशनात् ॥ जीवब्रह्मैकताशाचदुराशैवाभवत्तव ॥१३८॥

रेयमात्मानुच्छित्तिधर्मेतिश्रुतावनुच्छित्तिरेवधर्मोयस्येतिसमासांगीकारेपौनरुक्त्यभयेन नविद्यतेउच्छित्तिर्येषां तेधर्मायस्येत्येववक्त
व्यतयानित्यत्वेनप्रमितजीवधर्माणांधर्म्यभिन्नतयाचेतनरूपाणांचनाशप्रसक्तेरेवाभावेनतवैक्यस्यानवसरएवेतिभावेनाह ॥ अणु
त्वेति ॥ आदिपदेन नित्यानंदोनित्यज्ञानोनित्यबलःपरमात्मा । स्वाभाविकीज्ञानबलक्रियाचेत्यादिश्रुत्याचनित्यतयोक्तभगवद्ध
र्माणांसंग्रहः । चेतनातिरिक्तकालाकाशादिजडजगन्मात्रनाशसाधनेजीवब्रह्मणोर्बहिर्भूतत्वादितिभावः । अथयदिचिन्मात्रमंगी ॥ ५९६ ॥
कृत्यश्रुतिमनादृत्यचभावरूपचिद्धर्माणांभावरूपजगतश्चनाशोंगीक्रियते । तदाप्यैक्यस्यैवनष्टत्वेनैक्याभावस्यचावशिष्टत्वेनभवद

निष्टस्यापरिहारात्।अथयदिधर्मधर्मिणोरभेदमंगीकृत्यतवैक्यंरिरक्षसि।तदात्वदीयमृतसंजीवनेनैवपुनरुज्जीवितास्सार्वज्ञादयोधर्माः किंचिज्ज्ञत्वादयोजीवधर्माश्चोभयतोगृहीतमुद्गरास्तवैक्यमेवरामभटाराक्षसचमूमिवहन्युः। एवंचजगन्नाशायप्रयतमानस्यतवैवना शोभूदितिचदुराशैवाभवत्तवेत्यवधारयतोभावः॥१३८॥ तेमते।अज्ञानोपादानता मिथ्यात्वंचेतिसंबंधः॥१३९॥ उक्तरीत्या संकर्षण

अनादिभावभूतानामेतेषांपरमात्मवत् ॥ अज्ञानोपादानतातेनमिथ्यात्वंचयुक्तिमत्
॥ १३९ ॥ सादेरनादेस्सर्वस्यब्रह्मणोन्यस्यवैक्षयः ॥ उक्तरीत्यासनैवाभूद्योमायावादि
नांमतः ॥ १४० ॥ साद्यदृष्टैस्सहान्यस्यकार्यमात्रस्यचक्षये ॥ यःपुनःकारणाभावात्सृ
ष्ट्यभावस्तुकथ्यते ॥ चित्रंसतार्किकोक्तोपिप्रतितर्कहतोभवेत् ॥ १४१ ॥ ब्रह्मणश्श
तवर्षाख्यपरांतोयोमहालयः ॥ सर्वकार्यकरंडस्यब्रह्मांडस्यास्यसप्तभिः ॥ १४२ ॥ युक्त
स्यावरणैरस्मिन्जायमानेपुनःपुनः ॥ अनादितोनुवृत्तेचसपष्टंसृष्ट्यंतरान्विते ॥ १४३ ॥

मुखाग्निनेत्याद्युक्तरीत्या ॥ १४० ॥ मायावाद्यभिमतंब्रह्मव्यतिरिक्तसाद्यनादिजगन्नाशाख्यसर्वनाशंदूषयित्वा सादिभिस्सर्वादृष्टै स्सहसादिजगतांसर्वेषांनाशं पुनःकार्यमात्रस्यसर्वथानुत्पत्तिंवदतस्तार्किकस्यसर्वनाशंदूषयति॥सादीति॥सादिभिरुत्पत्तिसहितैः। अदृष्टैस्सर्वादृष्टैः। अन्यस्य महीमहीधरादेः। कारणाभावात् कारणीभूतादृष्टाभावात्। सःसृष्ट्यभावः ॥१४१॥ अस्मिन्महा

प्रलये पुनःपुनर्जायमानेसतीतिसंबंधः । अदृष्टस्यसर्वथासर्वात्मनालयः । सर्वादृष्टलयइतियावत् । सःसर्वादृष्टलयः । अंते त्वदभिमतचरमब्रह्मलये ॥ १४२ ॥ १४३ ॥ १४४ ॥ एभ्यः अनादिकालमारभ्येदानींतनब्रह्मपर्यंतमनुभूततत्तद्देवेभ्यः ॥ १४५ ॥ अदृष्टं जगदंतरजनकादृष्टं ॥१४६॥ तत्कल्पनाप्रकारमेवानुमानरचनयाऽऽह ॥ विमतइति ॥ तत्तस्मात् ॥१४७॥

कार्यमात्रलयेतावत्कार्यादृष्टस्यसर्वथा॥ लयोनाजायतकिलकथंसोंतेभविष्यति॥१४४॥
नह्येतेभ्योलयेभ्यश्चस्यादन्योभ्यधिकोलयः ॥ येभ्योब्रह्मादिदेवेभ्योज्ञानीकोभ्यधिकोवद
॥ १४५ ॥ कालस्यांत्यस्यशृंगंननापितद्वलयस्यच ॥ अदृष्टकल्पनादोषोह्यदृष्टंकल्पयत्य
ह्रो ॥ १४६ ॥ विमतःप्रलयोऽदृष्टशेषवान्प्रलयत्वतः ॥ यथायंप्रलयश्चेतियुक्तिकोत्येति
तत्सतां ॥ १४७ ॥ किंचांत्यासापिसृष्टिस्तेसर्वसृष्ट्युपमाभवेत् ॥ ज्ञानिमात्रावृतासा
नपशुपक्ष्यादिसंवृता ॥ तस्यांचज्ञानिमात्रस्यादृष्टनाशस्तुपूर्ववत् ॥ १४८ ॥ सर्वादृष्ट
विनाशस्तुहेत्वभावान्नयौक्तिकः ॥ तस्माद्वैदिकतर्काग्रेशुष्कतर्कोनशोभते ॥ १४९ ॥

युक्त्यंतरेणापितार्किकाभिमतंसर्वनाशंदूषयति ॥ किंचेति ॥ पशुपक्ष्यादिसंवृता सा त्वदभिमतसर्वनाशात्पूर्वविद्यमानासृष्टिःज्ञानिमात्रावृतानेतिसंबंधः । तस्यांसृष्टौ । ज्ञानिमात्रस्य सकलापरोक्षज्ञानिसमुदायस्येत्यर्थः ॥ १४८ ॥ सर्वादृष्टविनाशः सकल



पशुपक्ष्यादिजीवनिष्ठादृष्टविनाशः । हेत्वभावात् अपरोक्षज्ञानाख्यहेत्वभावात् ॥ १४९ ॥ अन्वग्रहीत्अनुग्रहमकरोत् ॥१५०॥ वैकुंठप्राप्त्यतिरिक्तमोक्षाभावंसयुक्तिकप्रमाणवचनेनोपपादयति ॥ ततइति ॥ इतिशब्दात्पूर्वविद्यमानंसर्वभागवतवाक्यं॥१५१॥ ॥ १५२ ॥ तमसःपरमित्यस्यार्थमाह ॥ तमइति ॥ यतोनावर्ततइत्यस्यफलितार्थमाह ॥ पुनरिति ॥ परमागतिरितिसंबंधः ।

सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ इतिश्रुतिरनाद्यंतकालीनान्वग्रहीद्धिनः ॥ १५० ॥
ततोवैकुंठमगमद्भास्वरंतमसःपरं ॥ यत्रनारायणस्साक्षान्न्यासिनांपरमागतिः ॥ १५१ ॥
शांतानांन्यस्तदंडानांयतोनावर्ततेयतिः ॥ इतिभागवतेवैकुंठाख्याभगवतःपुरी ॥ १५२ ॥
तमश्शब्दोदिताज्ञानाद्बहिर्भूतातिभास्वरा ॥ पुनरावृत्तितश्शून्यागतिश्चपरमोच्यते ॥ इतो
तिरिक्तःपरमोमोक्षःकस्याद्विवेकिनां॥१५३॥मर्त्योमृत्युव्यालभीतोलोकान्सर्वांश्चनिर्भयान्॥
नाद्राक्षीत्किलपादाब्जंप्राप्यविष्णोर्यदृच्छया॥स्वस्थश्शेतेमृत्युरस्मादपैतीत्याहदेवकी॥१५४॥
इतोपिकृष्णचरणप्राप्तिरेवामृतंसतां ॥ जीवन्मुक्तौचयन्मृत्युस्ततोमुक्तिरियंपरा ॥ १५५ ॥
आब्रह्मभवनाल्लोकाःपुनरावर्त्तिनोर्जुन ॥ मामुपेत्यतुकौंतेयपुनर्जन्मनविद्यते ॥ १५६ ॥ ॥

इतः अज्ञाननिवृत्तिस्थलात् । अपुनरावृत्तिस्थलादितियावत् ॥ १५३ ॥ मर्त्योमृत्युव्यालभीतःपलायंल्लोकान्सर्वान्निर्भयान्नाध्यगच्छत् । त्वत्पादाब्जंप्राप्ययदृच्छयांतेस्वस्थश्शेतेमृत्युरस्मादपैतीतिभागवतस्थदेवकीवाक्यमर्थतःपठन्मृत्युविदूरस्थानत्वाद्वैकुंठ

स्यैवपरममोक्षत्वमित्याह ॥ मर्त्यइति ॥ व्यालःवनसर्पः । सर्वान् सत्यकैलासस्वर्गादीन् । निर्भयान् मृत्युभयरहितान् । त्व
त्पादाब्जं वैकुंठपुरीस्थस्यतवपादाब्जं । अंते सर्वलोकपलायनावसाने । शेते रमणीयशय्यायांमुक्तस्स्वनार्यासहशेते । अस्मात्
वैकुंठपुरेत्वच्चरणसमीपस्थमुक्तात् । इतः एतद्वचनबलात् । जीवन्मुक्तौ जीवन्मुक्तौस्थितशुकवामदेवादीनामित्यर्थः । यद्यस्मा
त् । मृत्युर्मरणं । ततः मरणराहित्येनजीवन्मुक्तितोप्यतिशयितत्वात् ॥ १५४ ॥ १५५ ॥ गीतावाक्येपिकृष्णसमीपप्राप्तेरेव
पुनर्जन्माख्यसंसारदूरीकरणसामर्थ्योक्तेस्सैवपरममुक्तिरित्याह ॥ आब्रह्मेति ॥ यद्यप्यनंतासनश्वेतद्वीपयोःपुनरावृत्तियुक्तत्व
शंकानिरासाय मुक्तानामप्यावासत्वेनाप्यंगीकृतांतरिक्षस्वर्गादिलोकानांचपुनरावृत्त्यैवयुक्तजनभरितत्वशंकानिरासायचभगवत्पा
दैरेवपूर्वार्धस्यमेरुस्थितब्रह्मसदनादर्वाक्तनलोकानांपुनरावृत्त्यैवयुक्तजनभरितत्वमेवार्थउक्तः । तथापिवक्तुःकृष्णस्यव्याख्यातुरा

इतिगीतोदितांवाणीमनुस्मरनविस्मर ॥ जीवन्मुक्तौतुयज्जन्मततोमुक्तिरियंपरा ॥ १५७ ॥

चार्यस्यचप्राकृतमेरुस्थब्रह्मभवनसाम्येनसत्यलोकस्य कैमुत्यनतेदर्वाक्तनलोकानांचजन्मादियोग्यप्रकृतिबद्धजनयुक्तताप्यभिमं
ता । अन्यथामामुपेत्येतिस्वलोकगमनस्यैवविशिष्यपुनर्भवविदूरत्वकथनविरोधात् । तथापिमुक्तामुक्तजनस्थानतयातेषामपिलो
कानामेकांशेनस्वलोकसाम्यमागतमितिचेन्न । मामुपेत्येतिवदतःकृष्णस्यतल्लोकस्थमुक्तानांजन्मवैधुर्येपिश्वेतद्वीपस्थस्वप्राप्त्येकनि
मित्तत्वस्य तेष्वपिलोकेषुस्थितस्वमूर्तिविशेषप्राप्तिनिमित्तत्वस्यचाभिप्रेतत्वेनतल्लोकमहिमत्वाभावेतात्पर्यात् । अतोनप्रकृतानुपयो
गः । एतद्वाक्योक्तमुक्तेरपिजीवन्मोक्षादतिशयमाह ॥ जीवदिति ॥ यद्यस्मात् । प्राक्मरणाभावेनातिशयउक्तः । इदानींजन

नाभावेनातोनपौनरुक्त्यं ॥ १५६ ॥ १५७ ॥ एताभ्यामेववाक्याभ्यांहरेर्मुक्तस्यचभेदोपिसिद्धइत्याह ॥ साचेति ॥ तेन प्राप्त प्राप्यभावस्यभेदघटितत्वेन ॥ १५८ ॥ स्पष्टैतद्वाक्यविरोधात् अस्पष्टभवदभिलषितैक्यवचनान्यपिनहरिविमुक्तयोरैक्यपराणी त्याह ॥ अस्पष्टेति ॥ १५९ ॥ इदानींश्रुतिभिरपिवैकुंठपुर्यादिभगवत्पुरत्रयस्यैवपरममोक्षत्वंसाधयति ॥ ज्योतिष्मंतइत्या

साचविष्णोस्समीपाप्तिस्तदंघ्रिप्राप्तिरेववा ॥ तल्लोकेषुस्थितिर्वाभूत्तेनैक्यंत्वष्टमोरसः
॥ १५८ ॥ अस्पष्टवचनस्यार्थस्पष्टोक्तेरनुसारतः ॥ प्राहुस्सर्वेयतःपूर्वेतन्माकुर्वेकताभ्र
मं ॥ १५९ ॥ अनंतासनवैकुंठश्वेतद्वीपाभिधास्त्रयः ॥ ज्योतिष्मंतोयत्रलोकास्तत्रमा
ममृतंकृधि ॥ १६० ॥ इतिश्रुतौयतोविष्णोर्लोकेष्वमृततोदिता ॥ ततस्तल्लोकगमनं
महामोक्षोभवेद्ध्रुवं ॥ १६१ ॥ यतोत्रैवश्रुतिस्स्पष्टंविष्णोर्लोकेमहीयते ॥ इत्याहतदि
मेलोकास्तस्यैवस्युर्नसंशयः ॥ १६२ ॥ ॥ ॥ ॥

दिना ॥ यत्रप्रदेशे । ज्योतिष्मंतः सूर्याग्न्यादिप्रकाशंविनापिअजस्रंप्रकाशवंतःलोकास्संति । तत्र तत्प्रदेशस्थलोकेषु माममृतं कृधिकुरु । इतिश्रुतौ एवमर्थकश्रुतौ । अमृतता मरणरहितता ॥ १६० ॥ १६१ ॥ अत्रैव अस्मिन्सूक्तएव । श्रुतिः यत्रतत्पर मंपदंविष्णोर्लोकेमहीयतइतिश्रुतिः । तत्तस्मात् अत्रैववाक्यांतरेस्पष्टंविष्णुलोकत्वश्रवणात् । इमे ज्योतिष्मंतइतिवाक्योक्ताः ।

युक्ति- अत्रसामान्योक्तावपिएतत्प्रकरणस्थविशिष्योक्तिबलात्अत्रापिविष्णुलोकत्वनिर्णयः । बहुवचनाल्लोकानांत्रित्वंचगम्यतइतिभावः मल्लिका
॥२१॥ ॥ १६२ ॥ उक्तस्मृतेः ततोवैकुंठमितिस्मृतेः । अतः लोकस्यैवमोक्षस्थानत्वात् । श्रुतिः गच्छेद्ब्रह्मसलोकतामित्यादिश्रुतिः ।
मुक्तिस्थानस्यलोकत्वाभावेमोक्षस्यसालोक्यमितिव्यवहारोनस्यादितिभावः ॥ १६३ ॥ सच सलोकतामित्यादिश्रुत्युक्तलोकः । फलसौ०
ब्रह्मभुवनपर्यंतलोकानांपुनरावृत्त्युक्तेःसालोक्यमोक्षघटकलोकोविष्णुलोकएवभवेदितिभावः । उपलक्षणंचैतत् । विष्णोर्लोकेम
हीयतइतिस्पष्टश्रुतिसमाख्ययाचेत्यपिद्रष्टव्यं ॥ १६४ ॥ विष्णोर्लोकस्यमोक्षस्थानत्वेयुक्त्यंतरंचाह ॥ सर्वेति ॥ सर्वलोकक्षये

उक्तस्मृतेश्चसंमत्यालोकोयंवैष्णवोभवेत् ॥ अतस्सलोकतांमोक्षोसालोक्यंचश्रुतिर्जगौ ॥ १६३ ॥ आब्रह्मभुवनाल्लोकाःपुनरावर्त्तिनोर्जुन ॥ इत्युक्तेस्सचलोकोयंविष्णोर्लोकोनसंशयः ॥ १६४ ॥ सर्वलोकक्षयेयस्तुमोक्षोसौनेक्ष्यतेक्वचित् ॥ १६५ ॥ ॥

सर्वलोकानांक्षयोयस्मिन्प्रतिपाद्यतेससर्वलोकक्षयः । क्षयइत्युपलक्षणं । जन्मापिग्राह्यं । सर्वलोकानांक्षयजन्मप्रतिपादकवाक्य
मित्यर्थः । तस्मिन् स्थानंमदीयंसहविश्वमेतत्क्रीडावसानेद्विपरार्धसंज्ञे । भ्रूभंगमात्रेणहिसंदिधक्षोःकालात्मनःपश्यतिकोभविष्य
दित्यादिप्रलयवाचकवाक्ये भूर्लोकःकल्पितःपद्भ्यांभुवर्लोकश्चनाभितः । हृदास्वर्लोकउरसामहर्लोकोमहात्मनः । ग्रीवायांजनलो
कश्चतपोलोकश्चनेत्रयोः । मूर्धभिस्सत्यलोकश्चब्राह्मोलोकस्सनातनइत्यादिजन्मवाचकवाक्येच यः वैकुंठलोकःनेक्ष्यते नश्रूयते । ॥ ५९९ ॥

असौवैकुंठलोकः मोक्षएव मुच्यतेअत्रेतिव्युत्पत्त्यामुक्तिस्थानमेवेत्यर्थः । वैकुंठादधोविद्यमानस्वलोकमारभ्यतस्मादधोविद्यमान
लोकानामेवक्षयकथनाज्जन्मकथनाच्चवैकुंठलोकस्योभयकोटावप्यप्रवेशितत्वेनजन्मक्षयरहितलोकत्वमर्थाल्लभ्यते । अतस्तस्यैवमु
क्तिस्थानत्वमितिभावः ॥ १६५ ॥ अत्र नानानमित्यादिवर्गत्रयात्मकसूक्ते । तदनुज्ञयाहर्यनुज्ञया । तल्लोकप्रापकत्वं विष्णुलोक
प्रापकत्वं । तत्तस्मात् मोक्षंप्रापयेतिप्रार्थितत्वात् ॥ १६६ ॥ अधुना अरश्चहिवैण्यश्चार्णवौब्रह्मलोके तदश्वत्थस्सोमसवनस्तदप
राजितापूर्ब्रह्मणःप्रभुविमितमिति सखल्वेवंवर्तयन्यावदायुषंब्रह्मलोकमभिसंपद्यतेनचपुनरावर्ततेनचपुनरावर्ततइतिचब्रह्मलोकस

पवमानोत्रयत्प्राथ्योवायोश्चतदनुज्ञया ॥ तल्लोकप्रापकत्वंतत्सिद्धंगुरुशिरोमणे॥१६६॥
अंतेज्ञानाद्ब्रह्मलोकमभिसंपद्यतेकिल ॥ आवर्ततेनसपुनःपुनरावर्ततेनसः ॥ द्विरुक्त्ये
त्थंनिरणयत्पुनरावृत्तिशून्यतां ॥ १६७ ॥ लोकोयंब्रह्मणोविष्णोरपराजितपूःकिल ॥
कुयुक्त्यामृत्युनादोषैःपराजिग्येयतोनसा ॥ १६८ ॥ ॥ ॥

माख्ययाएकार्थप्रतिपादकंछंदोगोपनिषदष्टमप्रपाठकभागद्वयस्थवाक्यंमनसिनिधाय वैकुंठपुर्याएवपरममुक्तिस्थानत्वंवर्णयति ॥
अंतइति ॥ सखल्वेवमितिवाक्यस्यार्थकथनमिदं । निरणयत् ब्रह्मलोकपदोक्तवैकुंठलोकस्यपुनरावृत्तिशून्यतांनिश्चितवती॥१६७॥
सत्यलोकस्थितस्यचतुर्मुखब्रह्मणःद्विपरार्धावसानेप्रलयश्रवणेनपुनरावृत्तिशून्यत्वायोगात्परब्रह्माख्यविष्णोर्लोकएवायंब्रह्मलोकइ
तिभावेनोक्तं ॥ लोकोयमिति ॥ श्रुतेरंशांतरस्थपदयोरर्थमाह ॥ कुयुक्त्येति ॥ ततः सा मृत्युरस्मादपैतीति नयत्रमायेतिच

स्मृत्युक्तावैकुंठपुरी अपराजितपूरितिसंबंधः ॥ १६८ ॥ प्रभुणानारायणेन विशेषेण मितमुपमितमितिप्रभुविमितमितिपदस्यार्थ कथनं ॥ सत्त्वचित्त्वाद्यैरिति ॥ सत्त्वं जननमरणबंधादिदोषरहितत्वं । विशिष्योपमाचेतनत्वंविनानघटतइतिचित्त्वमपिगृहीतं । अनेनवैकुंठस्यलक्ष्म्यात्मकत्वमपिसूचितं । व्याप्तत्वादिबहुगुणैर्हरिसमायाअपितस्यास्स्वामीहरिरेवेतिसूचनायप्रभुपदमिति भावेनोक्तं ॥ हिरण्मय्याइति ॥ पुरःपुर्याः ॥ १६९ ॥ यद्यस्मात् । तत्तस्मात् उक्तस्मृत्याअपराजितपुरत्वस्य यतोनावर्ततेयतिरितिस्मृत्यापुनरावृत्तिराहित्यस्यचवैकुंठएवसंभवात् ॥ १७० ॥ निमित्तांतरंचाह ॥ अश्वत्थइति ॥ अरण्यौ अरश्चण्यश्चा

सत्त्वचित्त्वविभुत्वाद्यैस्सत्प्रभोस्संमिताकिल ॥ हिरण्मय्याःपुरस्तस्याःपरंब्रह्मप्रभुःकिल ॥१६९॥
इतिच्छंदोगोपनिषज्जगौयत्तज्जगत्प्रभोः ॥ वैकुंठाख्यैवनगरीसापुरीतिमतिर्मम ॥ १७० ॥ यत्रा
श्वत्थोमृतस्यंदीयत्रारण्यौसुधार्णवौ ॥ साश्वत्थप्रियदुग्धाब्धिशायिनःपूर्नसंशयः ॥ १७१ ॥
किंचश्रुतिर्यतस्स्पष्टममृतेनावृतांपुरीं ॥ आहतेनापिमुक्तस्यपुरीसेयंनसंशयः ॥ १७२ ॥ ॥

रण्यौ । अरसंज्ञएकः । ण्यसंज्ञश्चापरइत्यर्थः । रुषदाहइतिधातोर्डप्रत्ययेकृतेरपदोदितदुःखविरुद्धसुखरूपत्वात् ऋगताविति धातोःपचाद्यचिऋवर्णस्थानेगुणेचकृतेज्ञानरूपत्वाच्चारपदवाच्यएकः णपदोक्तसुखरूपत्वात् यपदोक्तज्ञानरूपत्वाच्चण्यपदवाच्योपरः । उभावपिज्ञानसुखरूपतयातत्पदवाच्याविति भावः । सा अश्वत्थसुधासमुद्राश्रयीभूता ॥ १७१ ॥ योवैतांब्रह्मणोवेदअमृतेनावृतांपुरीमितिश्रुत्यर्थपर्यालोचनयापिमुक्तानामावासभूतापुर्येव । साचपूर्वोत्तरपर्यालोचनयावैकुंठनगरीत्याह ॥ किंचेति ॥१७२॥

इदं अमृतेनेतिपदं । पूर्णत्वापरपर्यायावृतत्वस्यबहुमुक्तजनसापेक्षत्वादितिभावः ॥ १७३ ॥ एतच्छ्रुत्युक्तामृतपुर्याविष्णुपुरीत्वेज्ञापकद्वयमाह ॥ देवानामिति ॥ देवानां मुक्तदेवानां पुरःपुर्याः । तस्याः योवैतामितिश्रुत्युक्तायाः । पूर्वं योवैतामितिवाक्यात्पूर्वभागे ॥ १७४ ॥ अयोध्याभिधाचवैकुंठनगर्याएवेत्यत्रप्रमाणमाह ॥ नानेति ॥ सा वैकुंठमध्यनगरी । यद्य

जात्येकवचनंचेदमावृतामितिकीर्तनात् ॥ अतोऽमृतैःपूर्णपुरीनारायणपुरीध्रुवं ॥ १७३ ॥
देवानांपूरयोध्येतियदयोध्याभिधांपुरः ॥ प्रादात्तस्याश्श्रुतिःपूर्वंतद्विष्णोरेवसापुरी
॥ १७४ ॥ नानाजनपदाकीर्णवैकुंठंतद्धरेःपदं ॥ तन्मध्येनगरीदिव्यासायोध्येतिप्रकी
र्तिता ॥ इतिपाद्मस्यवचनाद्यदयोध्याहरेःपुरी ॥ १७५ ॥ विभ्राजमानांहरिणीमितिसै
वश्रुतिःपुनः ॥ हरिणीमाहतेनापिहरेरेवपुरीभवेत् ॥ १७६ ॥ पुरींहिरण्मयींब्रह्मविवेशे
तियतश्श्रुतिः ॥ ब्रह्मणोंतेप्रवेशार्हामाहतेनापिसापुरी ॥ १७७ ॥ ॥ ॥

स्मात् । तस्मादयोध्यापदस्यवैकुंठांतःपुरवाचकत्वात् । तत्पदसमभिव्याहृताअमृतेनावृतापुरीनारायणपुरीतिपूर्वेणान्वयः॥१७५॥ सैव योवैतामितिवाक्यवतीश्रुतिः । यजुश्शाखैकदेशरूपा । विभ्राजमानांहरिणींयशसासंपरीवृतामितिश्रुतिः । हरिणीं हरेरियमितिव्युत्पत्त्याहरिणीशब्दवाच्या । तेन हरिणीशब्देन ॥ १७६ ॥ अंते द्विपरार्धावसानकाले । तेन मुक्तब्रह्मप्रवेशयोग्यत्वेन

॥ १७७ ॥ अधुनाछंदोगोपनिषत्प्रोक्तब्रह्मपूश्शब्दार्थमाह ॥ विष्णोरिति ॥ क्वचित् योवैतामित्यत्र ब्रह्मणःपुरीमित्युक्ता । तत्रत्यब्रह्मपुरीशब्दस्यात्रव्याख्यानेनिमित्तंसूचयति ॥ ब्रह्माविशेद्धियामिति ॥ अत्रब्रह्मप्रवेशयोग्यत्वकथनात्तत्रापिब्रह्मपुरी विष्णुपुर्येवभवेत् । नहिपूर्वमपिसत्यलोकाख्यब्रह्मपुरेस्थितस्यसत्यलोकाख्यब्रह्मपुरीप्रवेशएवफलं । अथवाब्रह्मणःप्रवेशयोग्यत्वात्वैकुंठपुर्येवब्रह्मपुरीति वैकुंठएव गजप्रवेशयोग्यशालायांगजशालाशब्दवत्ब्रह्मपुरीशब्दप्रयोगस्यनिमित्तांतरसूचनार्थमत्रव्या

विष्णोरेवपुरीब्रह्मनाम्नस्तस्यैवपूस्त्वतः॥क्वचिद्ब्रह्मपुरीयुक्तासैवब्रह्माविशेद्धियां ॥१७८॥
येतुलोकांतरप्राप्तिमोक्षंनाचक्षतेबुधाः॥तेषांवृथार्चिराद्यध्वनोर्ध्वोर्ध्वगमनंभवेत् ॥१७९॥
ब्रह्मज्ञानेनसर्वस्यनाशेब्रह्माभवत्स्वयं॥क्वगच्छेद्परिच्छिन्नोमार्गःकस्यापवर्गदः॥१८०॥
अतोवैकुंठादिलोकप्राप्तिर्मुक्तिर्विवेकिनां ॥ अन्यातुमुक्तिराम्नायन्यायच्छेदायकेवलं
॥ १८१ ॥ खगेंद्रध्वजपादाब्जयुगमूलनिषेवणं ॥ यतोभागवतेस्पष्टमपवर्गाख्यमीरितं ॥ १८२ ॥

ख्यानं ॥ १७८ ॥ ऊर्ध्वोर्ध्वलोकगमनरूपार्चिरादिमार्गपर्यालोचनयापिवैकुंठपुर्येवमुक्तिपुरीत्याह ॥ येत्विति ॥ १७९ ॥ अभवत् यत्रतिष्ठतितत्रैवाभवदित्यर्थः ॥ १८० ॥ अतः अर्चिरादिलोकारोहस्यमोक्षमार्गत्वकथनात् ॥ १८१ ॥ अधुना सवैमहाभागवतःपरीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः । ज्ञानेनवैयासिकिशब्दितेनभेजेखगेंद्रध्वजपादमूलमितिमोक्षप्रतिपादकभागवतवाक्यपर्यालोचनयापिवैकुंठस्थनारायणचरणारविंदसमीपप्राप्तिरेवमुक्तिरित्याह ॥ खगेंद्रेति ॥ स्वमातुर्गर्भेस्वरक्षणायपर्यावर्तमानंकृ



ष्णंपरितःईक्षतइतिपरीक्षित् । उत्पत्तिसमयएवापरोक्षज्ञानितयाजीवन्मुक्तइतिभावः । इदंचविशेषणं अस्यफलतयाकथ्यमानामुक्तिःपरममुक्तिरितिसूचनार्थं । विष्णुभक्तस्यैवब्रह्मज्ञानेऽधिकारइतिसूचनायमहाभागवतइतिविशेषणं । तस्यचश्रोतृत्वसंपत्तिसूचनायादभ्रबुद्धिरित्युक्तं । वैयासिकिशब्दितेन व्यासपुत्रशुकनिरूपितेन । ज्ञानोपदेष्टृगुरोरपिविष्णुरूपव्यासपुत्रत्वेनवैष्णवत्वसूचनायवक्तृप्रसक्तिसूचनायचवैयासिकिपदं । ज्ञानंचवैष्णवपुराणेनतदुपबृंहितवेदेनचोत्पन्नंविष्णोस्सर्वोत्तमत्वविषयमेवभवेदिति सूचनाययेनेत्युक्तं । शुकमुखाद्भागवतश्रवणजनितेनेत्यर्थः । हरिचरणारविंदप्राप्त्यतिरिक्तमोक्षाभावसूचनायतस्याएवमोक्षत्वसूचनायचअपवर्गाख्यमितिफलविशेषणं । उपचारेणात्रापवर्गशब्दप्रवृत्तिरितिशंकानिरासायआख्येत्युक्तं । आख्याह्वेअभिधानंच

अतोवैकुंठलोकस्थमुकुंदपदसन्निधौ ॥ स्थितिरेवमुमुक्षूणांमोक्षोव्यासानुशासनात् ॥ १८३ ॥
अतीतकल्पमुक्तंचाप्येषावागेवयद्वदेत् ॥ पुराणस्यसदेद्दक्त्वात्तेनभेजइतीरितं ॥ १८४ ॥

नामधेयंचनामचेतिलिंगानुशासनात् ख्याप्रकथनइतिधातुव्याख्यानाच्चायमेवमुख्यापवर्गइतिभावः । मुक्तिदशायामपिहरेस्साकारत्वंपक्ष्यादिजीवानांचमुक्तौविद्यमानत्वंतत्तारतम्यंमुक्तावपिचेतनातिरिक्तशुद्धजडसद्भावंसेव्यसेवकभावेनतत्रापिमुक्तपरमात्मनोर्भेदंचसूचयितुंखगेंद्रध्वजपादमूलंभेजइतिचोक्तं । अन्यथापेदइत्यवक्ष्यत् । भेजइत्यतीतोक्तिस्तु एष्यत्तुनिश्चितंयत्स्यादतीतत्वेनभण्यतइतिन्यायात् । इदंचैतादृशज्ञानस्यफलसंशयनिरासार्थं । अतीतकल्पेपिमुक्तपरीक्षित्संग्रहार्थंवाभेजइत्युक्तं । येनेत्यस्यतदहंतेभिधास्यामीत्यनेनान्वयः ॥ १८२ ॥ १८३ ॥ इममेवार्थंविस्तरेणप्रदर्शयति ॥ अतीतेत्यादिना ॥ यद्यपिशौनकादी

न्प्रतिकथाकथनायचिरकालातीतपरीक्षित्कथाकथनोद्यतस्यसूतस्यतदीयवाक्यानुवादकस्यव्यासस्यचभेजइत्येवप्रयोगउचितः । त थाप्यपवर्गात्मकस्यवैकुंठांतःपुरस्थहरिचरणसमीपगमनस्यब्रह्मणःपरांतकालएवसंभवात्शंका समाधानंचेतिद्रष्टव्यं । अतीतक ल्पमुक्तं अतीतब्रह्मकल्पेमुक्तं । यत्यस्मात् । ननुतदानींतनभागवतज्ञानस्यमुक्तिदायकत्वेइदानींतनभागवतज्ञानस्यकिमागतमि

आगामिनोपिनिर्णीत्यैवागेवंवर्ततेकिल ॥ अपवर्गाख्यमित्युक्तेरग्रेन्योर्थोनशोभते ॥ १८५ ॥
ज्ञानसाध्यत्वकथनात्सिद्धापरममोक्षता ॥ १८६ ॥ सेव्यसेवकभावश्चयतोभेजइतीर्यते ॥
अतोजीवेशभेदस्यमुक्तावप्यनुवर्तनं ॥ १८७ ॥ साकारत्वंचपादोक्त्यारथोक्त्याभोगसाधनं ॥
तारतम्यंचजीवेषुखगेंद्रत्वस्यकीर्तनात् ॥ खगादिजीवराशिश्चमुक्तावस्तीतिगम्यते ॥ १८८ ॥
एतत्समस्तंतत्रापिसिद्धंवाक्यार्थवेदिनां ॥ १८९ ॥ महाभागवतेऽनल्पबुद्धिःपांडववंशजः ॥
अधिकारीव्यासपुत्रश्शुकोयोगीश्वरोगुरुः ॥ १९० ॥ ॥ ॥

त्यतउक्तं । पुराणस्यसदेहक्त्वादिति । ईदृक्त्वात् पदपौर्वापर्यव्यत्यासमात्रेपिशब्दतोर्थतश्चैकप्रकारत्वात् । एवंचतदानींतनभाग वतज्ञानस्यफलदायकत्वोक्तौअस्यापितदुक्तंस्यादितिभावेनतदुदाहरणमितिभावः ॥१८४॥ अन्योर्थःजीवन्मुक्तित्वकथनं ॥१८५॥ युक्त्यंतरंचाह ॥ ज्ञानेति ॥ १८६ ॥ १८७ ॥ १८८ ॥ तत्रापिमुक्तावपि ॥ १८९ ॥ १९० ॥ परममोक्षत्वेप्रबलयुक्तिंचाह ॥

तादृशेति ॥ तस्यशिष्यस्य जीवन्मुक्तेरपरोक्षज्ञानावस्थात्मकत्वेपितत्फलत्वाभावात् । अपरोक्षज्ञानिनासाक्षाच्छिवेनशुकेनापरो क्षज्ञानिनंपरीक्षितंप्रत्युपदिष्टज्ञानफलतयोच्यमानोयंमोक्षःकथंनपरममोक्षइतिभावः । यन्मार्गः यस्यपरीक्षितोमार्गः । भागवत श्रवणमितियावत् । योगिनामपेक्षितइत्यर्थः ॥ १९१ ॥ गीतावाक्यांतरेणापिवैकुंठस्यापुनरावृत्तिस्थानत्वंस्पष्टमाह ॥ नतदिति॥

तादृशाचार्यसंपत्तौतस्यज्ञानेनयत्फलं ॥ महामोक्षःकथंनासौयन्मार्गोद्यापियोगिनां
॥ १९१ ॥ नतद्भासयतेसूर्योनशशांकोनपावकः ॥ यद्गत्वाननिवर्ततेतद्धामपरमंमम
॥ १९२ ॥ इतिगीतासुकृष्णेनस्वलोकगमनस्ययत् ॥ पुनरावृत्तिशून्यत्वंपरमत्वंचकीर्ति
तं ॥ अतस्तत्परमंधामतदेवचपरात्परं ॥ १९३ ॥ यत्रत्वस्येतिवाक्यंचस्पष्टश्रुत्युक्तमा
र्गतः ॥ आचचक्षेपरंमोक्षमिममेवनचापरं ॥ १९४ ॥ वाक्यार्थस्यप्रकारश्चपूर्वमेवनिरू
पितः ॥ तयोर्निरवकाशस्यप्राबल्यंसावकाशतः ॥ १९५ ॥ अन्यथासुखभोगस्यज्ञानमा
त्रस्यसर्वथा ॥ निषेधात्तार्किकस्यैवमोक्षस्स्यान्नावयोर्मते ॥ १९६ ॥ ॥ ॥

परात्जीवन्मोक्षात् ॥ १९२ ॥ १९३ ॥ श्रुतीत्युपलक्षणं । स्मृतीत्यपिग्राह्यं । इमंवैकुंठं ॥ १९४ ॥ १९५ ॥ अन्यथा यत्रत्व स्येतिवाक्यस्यतर्कमुद्रयाप्रवृत्त्यनंगीकारे । यद्यपिसुखभोगोपिसुखापरोक्षज्ञानमेव । तथापिसुखाभावस्यसूचनाय केनकंजिघ्रेदि

युक्ति- तिविषयानुभवस्यश्रुतावपिपृथग्ग्रहणात्ग्रंथकृतापिपृथग्गृहीतं । सुखभोगस्य सुखसाधनविषयानुभवस्य । मोक्षः षड्डुद्धिपदोदि मल्लिका
॥२५॥ तषड्विधज्ञानैस्सहएकविंशतिप्रभेददुःखध्वंसात्मकः । आवयोः मोक्षेचसुखंज्ञानंचास्तीत्यंगीकुर्वतस्त्वचममचेत्यर्थः ॥ १९६ ॥ फलसौ०
इदानींमोक्षेपिभावांतराद्ब्रह्मणोभेदसद्भावेऽनुमानंरचयति ॥ अविद्येति ॥ अविद्यास्तमयाधारः ब्रह्मचैतन्यमित्यर्थः । ब्रह्मेत्यु
क्तेसगुणब्रह्मणासिद्धार्थतास्यादित्यतएवमुक्तं । अंतरपदमुपरंजकं । ध्वंसाधारत्वतः ध्वंसाधारत्वात् । अनुमेयं इयमनुमेतिसं

अविद्यास्तमयाधारोभावांतरविभेदवान् ॥ ध्वंसाधारत्वतःकुंभध्वंसाधारकपालवत् ॥
अनुमेयंमुक्तिकालेभेदंसाधयतिस्फुटं ॥ १९७ ॥ ब्रह्मातुसर्वजीवांस्तांस्त्रिविधान्स्वोदर
स्थितान् ॥ निवेश्यविष्णोरुदरेकुक्षिस्थैरपरोक्षिभिः ॥ १९८ ॥ ॥

बंधः ॥ १९७ ॥ पूर्वमुपनिषदभिप्रेततयोक्तंमुक्तिगमनप्रकारमेकीकारायपुनरनुवदन्किंचिदधिकंवदन्भागवतवाक्यारूढंकरोति
॥ ब्रह्मेत्यादिना ॥ कुक्षिस्थैस्स्वकुक्षिस्थैः । शेषवींद्रेत्यादिकंपूर्वानुक्तंभागवतवाक्यानुसारेणात्रसंगृहीतं । कृतत्वात्सगुणंब्रह्मप्र
विश्यपुरुषर्षभमित्यस्यार्थसूचनायकुक्षिंप्रविश्यस्वपितुरित्याद्युक्तं । अनेनसकलजीवोत्तमस्यैवकर्तृत्वात्पितृत्वात्सगुणसहभोगित्वा
दगुणभरितइत्यर्थस्सूचितोभवति । शतवत्सरा न्ब्रह्मशतवत्सरान् । सृष्टिकालेपूर्वमुक्ताइत्यादिकमपियथापूर्वंजायतइतिभागवत ॥६०३॥
वाक्यस्यार्थसूचनायसंगृहीतं । अनेन पूर्वान्पूर्वमुक्ता न्यथानतिक्रम्येतियथापूर्वशब्दार्थउक्तोभवति । अगुणव्यतिरेकेणगुणमि

श्रणरहितेवैकुंठादिलोकत्रयेप्रजायते प्रकर्षेणानंदादिप्रादुर्भाववान्भवतीतिमूलएवोक्तत्वात् स्वपूर्वमुक्ताब्रह्माद्यास्सृष्टिकालेयेषुवैकुं
ठादिलोकेषुतिष्ठंतितत्रैवस्वयमपिस्थितोभूदितिभावः ॥ १९८ ॥ १९९ ॥ २०० ॥ २०१ ॥ २०२ ॥ सारूप्यमोक्षप्रकारंवर्णय

साकंवैकुंठवाहिन्यांपरितोंतःपुरंहरेः ॥ मुक्तामुक्तस्थलोपाधौचिद्रूपजलसंपदि ॥ १९९ ॥
विरजायांमहानद्यांनिर्दोषायांभवच्छिदि ॥ मग्नोविध्वस्तसंसारोलिंगदेहस्यभंगतः ॥२००॥
दिव्यस्वरूपसंपन्नश्शेषवींद्रेंद्रपूर्वकैः ॥ चिद्रूपैस्सनकाद्यैश्चभृग्वाद्यैश्चसमन्वितः ॥ २०१ ॥
कुक्षिंप्रविश्यस्वपितुरुषित्वाशतवत्सरान् ॥ सृष्टिकालेपूर्वमुक्ताब्रह्माद्यायोगिनोयथा ॥
जातास्स्वयंचस्वगणैस्सहतद्वत्प्रजायते ॥ २०२ ॥ शुद्धप्रकृत्यंशतस्स्युर्भूषणायुधराशयः ॥
मुक्तानांकिलसर्वेषांलिंगभंगेहरीच्छया ॥ २०३ ॥ ॥ ॥

ति ॥ शुद्धेति ॥ लिंगभंगे विरजांबुमज्जनाल्लिंगनाशेजायमाने । तन्नाशोत्तरक्षणएवेत्यर्थः । शुद्धप्रकृत्यंशतः विकाररहितके
वलप्रकृतेरेवनानावर्णसूक्ष्मांशैर्हरीच्छयाभूषणादिराशयस्स्युरितिसंबंधः । शर्कराखंडपरिवृतमक्षिकाराशिवन्नानावर्णास्सूक्ष्मतर
भास्वरप्रकृत्यंशामुक्तानांचिन्मयशिरःपाण्याद्यवयवेषुकिरीटाद्याकारेणसंलग्नाभवंतीतिभावः । अथवा तदंगएवानादिकालमार
भ्यशुद्धप्रकृत्यंशतोविद्यमानाभूषणायुधराशय स्स्युः आवरकलिंगभंगेसतिव्यक्तास्स्युः । लिंगदेहस्यचिद्रूपदेहकंचुकतयास्थित

स्यत्रिविधजीवेष्वपिसाम्येनैकत्रविशेषायोगात्प्रागुक्तपक्षएवज्यायान् ॥ २०३ ॥ अत स्सर्वेषामपिकिरीटकुंडलाद्यलंकारस्यापेक्षि तत्वात् । योग्यतया सालोक्यादिमोक्षत्रयस्ययायोग्यता तया । साचोत्तमाधिकारिणामेवभवतिनसर्वेषामितिभावः । सालोक्या दिवदपूर्ववा आवृततयाप्रागपिविद्यमानंवासारूप्यं विरजांबुन्यामज्यलिंगशरीरंविनाश्योत्थितानांसर्वेषांतदैवभवति । सालोक्या दित्रयंतुपुनस्सृष्टिकालेभगवदुदरान्निस्सृतानांयोग्यानामुत्तमाधिकारिणामेवभवति । सर्वमोक्षाणामपिभगवदवताराणामिवशक्त्या

अतस्सारूप्यमोक्षोयंसर्वेषाममपियोगिनां ॥ सालोक्यसामीप्यसायुज्यानियोग्यतयाकिल ॥२०४॥
अस्मद्गुरुमुख्यवायुर्हरेर्नाभिसरोरुहात् ॥ उत्पद्यचतुरास्यत्वंप्राप्यशास्त्यखिलंजगत् ॥ २०५ ॥ एवं
चक्रीजगच्चक्रंसदावर्तयतिप्रभुः ॥ आद्यस्स्थिरचराणांयोवेदगर्भस्सहर्षिभिः ॥ २०६ ॥ योगेश्वरैःकु
माराद्यैस्सिद्धैर्योगप्रवर्तकैः ॥ भेददृष्ट्याभिमानेननिस्संगेनापिकर्मणा ॥ २०७ ॥ कर्तृत्वात्सगुणंब्र
ह्मपुरुषंपुरुषर्षभं ॥ ससंगत्यपुनःकालेकालेनेश्वरमूर्तिना ॥ २०८ ॥ ॥ ॥

त्मनाप्राक्सतांव्यक्तेरेवजायमानत्वान्नोत्पत्तिराशंकनीया ॥ २०४ ॥ वेदागर्भेयस्यसवेदगर्भोमुख्यप्राणः । भविष्यद्भिर्ऋषियोगे श्वरसिद्धाद्यैस्सहसगुणं ज्ञानानंदादिगुणसहितं ब्रह्म परब्रह्मात्मकं पुरुषर्षभंनारायणंसमेत्य प्रलयकालेतदुदरेस्थित्वेत्यर्थः । गुण व्यतिकरे गुणवैषम्याख्यसृष्टौजायमानायांसत्यां । स्वधर्मनिष्ठश्शतजन्मभिःपुमान्विरिंचतामेति । यत्पादपद्मपरिचर्ययेत्यादि

वाक्यैश्चसत्यलोकाधिपत्यस्यापिसाक्षान्मोक्षांगतयाज्ञानभक्तिवैराग्याणामवांतरफलत्वसंभवात् भेददृष्ट्या स्वतृतीयावतारेसमर्थि
तभेदज्ञानेन । अभिमानेन मूलरूपेऽवतारेषुचहरावेवकृतबहुमानेन निस्संगेन फलापेक्षांविनाकृतेनकर्मणा राक्षससंहरणादिक
र्मणाच प्रसन्नभगवदनुग्रहात् यथापूर्वं पूर्वब्रह्माणमनतिक्रम्य तदुत्पत्तिप्रकारेणेत्यर्थः । प्रजायते महत्तत्वप्रवर्तकस्थूलदेहतयो

जातेगुणव्यतिकरेयथापूर्वंप्रजायते ॥ इतिभागवतेस्पष्टंकथेयंसमुदीरिता ॥ २०९ ॥
साधनंचास्यजीवेशभेददृष्टिर्हरौगुरौ॥अभिमानाभिधाभक्तिर्निवृत्तंकर्मचोच्यते॥२१०॥
मुख्यंतदुभयंकर्मत्वमुख्यंतत्रसाधनं ॥ अतस्तृतीयंतत्प्रोक्तमपिशब्दोप्यगर्हयत्॥२११॥
समुच्चयार्थंगर्हार्थमपिशब्दोयमीरितः॥ नचेच्चशब्दंप्रब्रूयात्सोपिच्छंदोभिनत्तिन॥२१२॥
अभिमानोप्युक्तरीत्याभक्तिरेवभवेदसौ ॥ मोक्षसाधनपङ्क्तौयःपठितोदिव्ययोगिना ॥ २१३ ॥

त्पद्यतइतितस्यैवश्लोकस्यसंभवदर्थांतरमभिप्रेत्याह ॥ अस्मद्गुरुरिति ॥ २०५ ॥ २०६ ॥ २०७ ॥ २०८ ॥ २०९ ॥ २१० ॥
तत्र मुक्तौ तेषुसाधनेषुवा । अतः अप्रधानत्वात् । तत्फलसंगरहितंकर्म ॥ २११ ॥ नचे द्गर्हापेक्षानचेत् । सोपि चशब्दोपि ।
निस्संगेनचकर्मणेत्युक्तेपि छंदोभंगाभावादितिभावः ॥ २१२ ॥ मोक्षसाधनपङ्क्तौ सर्वाविवादनिवृत्तकर्माख्यमोक्षसाधनपङ्क्तौ

॥ २१३ ॥ यद्यस्मात् । श्रुतिषु परांतकालेपरामृतादित्यादिश्रुतिषु । यद्यस्मात् । ततो मुक्तिसाधनत्वेनसर्वाभिमतनिवृत्तकर्मणासहपठितत्वात् । अन्योर्थो व्यावहारिकभेददृष्ट्यादेहाद्यभिमानेनपुनरिहैवजायतइत्याद्यर्थः । मुक्त्येकसाधननिवृत्तकर्मणउत्पत्तिहेतुत्वायोगादृषीणांसनत्कुमारादियोगीश्वराणांप्रवर्तकसिद्धानांसकलवेदप्रवर्तकब्रह्मणश्चांतेदेहाभिमानस्यचायोगात्परांतकालेपरिमुच्यंतिसर्वइतिश्रुतिविरोधाच्च । अतोस्मदुक्तविधयाज्ञानभक्तिवैराग्यसाधनत्रयेणपूर्वंब्रह्मवदाविर्भूतानंदोभवतीत्येवार्थः । परांतकालेनमोक्षः किंतुपुनरपिब्राह्मशतवर्षानंतरंमोक्षइतिस्वयूथ्यःकश्चित्तदपिन । परांतकालेपरिमुच्यंतिसर्वइतिश्रुतिविरोधात् ।

एवंपरांतकालेस्यान्मुक्तत्वंयोग्ययोगिनां ॥ परांतकालोयन्मुक्तिकालश्श्रुतिषुकथ्यते ॥
निवृत्तंकर्मयन्मुक्त्यैततोन्योर्थोनशोभते ॥ २१४ ॥ ॥ ॥

नह्युदितेजुहोतीतिश्रुतेरुदयानंतरंत्रिंशद्घटिकोपरिजुहोतीतिकोपिप्रेक्षावानर्थंब्रूते । तस्यतावदेवचिरंयावन्नविमोक्ष्येथसंपत्स्यतइतिश्रुतेःप्रारब्धकर्मनाशानंतरंमोक्षविलंबायोगाच्च । उक्तविधयावैकुंठाच्छ्वेतद्वीपंप्राप्यगमनसंभवेनयावच्छ्वेतंनगच्छतीतिवाक्यस्याप्यनुकूलत्वात् । प्रारब्धकर्मनाशस्तुयद्यपिविरजातरणावधिस्तथापिसप्रारब्धकर्मरूपप्रकृतेर्बंधोब्रह्मणासहैवभिद्यतेनस्वेच्छयेत्यर्थसंभवेनास्यापिवाक्यस्यास्मदनुकूलत्वात् । अन्यथा उपासतेतेपुरतस्समाप्नुयुर्ब्रह्माणमस्मान्मतिमाप्यविष्णुं ॥ प्रयांत्यतोन्येपितमाप्यतस्माद्धरिंगतामुक्तिभाजःपरांतइतिस्पष्टाचार्यवचनविरोधेनापसिद्धांतापातादतोयत्किंचिदेतत् ॥ २१४ ॥ स्वधर्मनिष्ठश्श ॥ ६०५ ॥

तजन्मभिःपुमान्विरिंचतामेतिततःपरंहिमां ॥ अव्याकृतंभागवतोथवैष्णवंपदंयथाहंविबुधाःकलात्ययइतिभागवतवाक्यांतरसमाख्ययायथापूर्वंप्रजायतइतिवाक्यस्याप्यस्मदुक्तएवार्थइत्याह ॥ पुमानिति ॥ पुमा न्ब्रह्मपदवीयोग्यपुरुषः । शतजन्मभिस्स्वविहितधर्माचरणंकृत्वाविरिंचतामेति ॥ २१५ ॥ मामित्यस्यार्थकथनायोक्तं ॥ मांलक्ष्मीमिति ॥ अस्यश्लोकस्यरुद्रवचनत्वान्मांस्वात्मानमित्यर्थःकुतोनेत्यतआह ॥ स्वात्मवाचित्वइति ॥ यथाहमितिरुद्रेणब्रह्मनिर्याणस्यस्वनिर्याणंदृष्टांततयाकथ्यते । एवंचयथालयेऽहंमांप्रविशामिब्रह्मापिमांप्रविशतीत्यर्थोवक्तव्यः । तच्चात्माश्रयान्नशोभते । तस्माद्यथाहंलक्ष्मींप्रविशामि तथाब्र

पुमान्विरिंचतामेतिमामेवैतिततःपरं ॥ इत्युक्त्याचपुनर्जन्मतस्यैवस्यात्कथंवद ॥२१५॥
मांलक्ष्मींस्वात्मवाचित्वेयथाहमितिरुद्रवाक् ॥ नशोभतेनहिस्वात्मप्राप्तिस्स्वस्यलयेसति
॥ २१६ ॥ पदंवैष्णवमेतीतिवैकुंठगतिकीर्तनात् ॥ पुनरावृत्तिवार्तास्यनिवृत्तैवाभवत्तव॥२१७॥

ह्मापिलक्ष्मींप्रविशतीत्येवार्थउचितः । सर्वेषामपिदेवानांलक्ष्मीद्वाराविष्णुप्राप्तेश्शास्त्रसिद्धत्वादितिभावः । उपलक्षणंचैतत् । यतस्सत्यलोकस्थितस्यब्रह्मणस्स्वलोकादुपरितनवैकुंठस्थविष्णुप्राप्तयेभूलोकस्थितकैलासपर्वतस्थशिवप्रवेशोलौकिकमाभाणकमनुकरोति । अतोपिनयुक्तः । सोथविरिंचवीर्यइतिभागवतेरुद्रस्यब्रह्मकुमारत्वोक्तेश्चनयुक्तइतिद्रष्टव्यं ॥ २१६ ॥ अथ लक्ष्मीप्राप्त्यनंतरं भागवतः भगवद्भक्तशिरोमणिर्ब्रह्माअव्याकृतं विकाररहितं वैष्णवंविष्णुसंबंधिपदंस्थानंवैकुठमेतीत्यनेनलब्धमर्थमाह ॥ पद

मिति ॥ तवपुनरावृत्तिवार्ता । यथापूर्वंप्रजायतइत्यस्यपूर्ववद्ब्रह्मापुनरप्युत्पद्यतएव नतुवैकुंठंप्राप्नोतीत्यर्थकथनं । तद्ब्रह्मलयप्रतिपादकेऽस्मिन्वाक्येस्पष्टंवैकुंठगतेरुक्तत्वेनैतद्वाक्यसमाख्ययातस्मिन्नपिवाक्येऽस्मद्व्याख्यानानुसारेणवैकुंठगतेरेववक्तव्यत्वादितिभावः ॥ २१७ ॥ सोऽश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चितेतिश्रुत्यामुक्तैस्सहचतुर्मुखब्रह्मणोमौक्तभोगकथनाच्चनतस्यपुनर्जन्मेत्याह ॥ ब्रह्मणेति ॥२१८॥ अस्यैवब्रह्मणःपुनर्जन्माभावेयुक्त्यंतरंचाह ॥ दत्तमिति ॥ तत् हनूमतोभविष्यद्ब्रह्मपदवीदानं ॥२१९॥

ब्रह्मणासहमुक्तस्सन्भोगान्भुंक्तेविपश्चिता ॥ श्रुतिश्चैषाब्रह्मणोंतेमुक्तिमाहनसंसृतिं ॥२१८॥
दत्तंकिलब्रह्मपदंरामेणास्मद्धनूमते ॥ तच्चनस्याद्यदिब्रह्मासएवस्यात्पुनःपुनः ॥ २१९ ॥ नचे
च्छ्रुतिःकथंप्राहपवमानःप्रजापतिः ॥ इत्याद्यापवमानस्यप्रजापतिपदंवद ॥ २२० ॥ तस्माल्लये
हरेःकुक्षिंप्रविश्यांतेलयस्यसः ॥ वैकुंठादिपुरस्थस्स्यादित्येवार्थःपुमर्थकृत् ॥ २२१ ॥ परांतका
लेसर्वेपिमुच्यंतेयोगिनःकिल ॥ ब्रह्मैवंसतियोगींद्रोमुक्ताग्रेसरतामियात् ॥ २२२ ॥ असुरा
न्दमयन्नुग्रान्सुरान्शांतांस्तथोन्नयन् ॥ परावृणक्तिपूर्वेषांसख्यानित्वरयापरैः ॥ २२३ ॥ ॥

वायोर्ब्रह्मपदानंगीकारेश्रुतिविरोधंचाह ॥ नचेदिति ॥ आदिपदेन मारुतस्यवेधसइतिश्रुतिंगृह्णाति ॥२२०॥ सःब्रह्मा ॥२२१॥ ब्रह्मणःकैमुत्येनमुक्तत्वेश्रौतयुक्त्यंतरंचाह ॥ परांतेति ॥ एवंसति ब्रह्मणोप्यधमापरोक्षज्ञानिनांसर्वेषांमुक्तत्वेसति ॥ २२२ ॥ श्रुत्यंतरेणापिसर्वमोक्षाभावमैक्याभावंचसाधयति ॥ असुरानिति ॥ अनेन श्रृण्वेवीरउग्रमुग्रंदमायन्नन्यमन्यमतिनेनीयमा

नः । एधमानद्विळुभयस्यराजाचोष्कूयतेविशइंद्रोमनुष्यान् ॥ परापूर्वेषांसख्यावृणक्तिवितर्तुराणोअपरेभिरेति । अनानुभूतीरव
धून्वानःपूर्वीरिंद्रश्शरदस्तर्तरीतीतिश्रुतिवाक्यद्वयंसंगृह्णाति ॥ अस्यार्थः । वीरः अध्यवसितांतगामी । इंद्रः परमैश्वर्यसंपन्नश्श्री
नारायणः । उग्रमुग्रं विश्वद्रोहितयाक्रूरंक्रूरंदैत्यजनं दमायन्दमयन् अंधतमसिनिक्षिप्यपीडयन् । पुनरावृत्तिशून्यतयादमनस्य
दीर्घकालीनत्वसूचनायदीर्घोच्चारणं । तेनांधतमस्येवदमनंलभ्यते । उग्रपदोपस्थितादुग्रादन्यमन्यं शांतंसज्जनसमूहं अतिनेनी
यमानस्सांसारिकक्लेशानतिक्राम्यस्वीयवैकुंठादिलोकमतिशयेननयन् । जीवन्मुक्तिदशातोतिशयसूचनायनेनीयमानइत्युक्तं । जी
वानांपरस्परभेदं मुक्तानांचस्वस्माद्भेदंचसूचयितुमन्यमन्यमित्युक्तं । अन्यथाशांतंशांतमित्यवक्ष्यत् । एधमानद्विट् स्वस्वयोग्य
तामतिक्रम्यपुण्यकरणादिनावर्धमानंद्वेष्टि अधिकपुण्यंयेनकेनाप्युपायेननाशयतीतिसतथोक्तः । अनेनजीवायोग्यस्वसमानाधि
कमाहात्म्यशिक्षणेनस्वतोतिनीचतत्तद्योग्यमहिम्नस्सदारक्षणेनचकदाप्यैक्यायोगंसूचयति । उभयस्य तमसिमुक्तौचस्वेनप्रापित
द्विविधजीवसमुदायस्य राजास्वामी नतुकदापितदैक्यवानित्यर्थः । श्रृण्वे पुराणादिषुश्रूयते । श्रुतिस्स्वोक्तार्थेश्रुतिवाक्यांतरा
णिस्मृतिवाक्यानिचप्रमाणयितुमेवमाह । अन्यथातेरेजइत्यवक्ष्यत् । स्वविरोध्यैक्यवचनेषुविभक्तिव्यत्यासादिगतिसूचनायप्रयो
गव्यत्यासः । मनुष्यान्विशोमध्यममानुषप्रजाः । कदाचिन्नीचमार्गेकदाचिदुच्चमार्गेचप्रवेशंसूचयितुंविशइतिविशेषणं । तानपि
स्वदत्तफलभोगदशायामपिस्वर्गनरकभूम्याख्यलोकत्रयएवचोष्कूयतेप्रवर्तयति । चुक्प्रवर्तनइतिधातोः । लिंगदेहभंगात्पूर्वंस्वर्ग
नरकादौप्रवर्तनस्यशुभाशुभकर्मभ्यांशुभजीवेष्वपिसंभवादेषांफलतयाविशिष्योक्तिर्नघटते । अतोलिंगभंगोत्तरकालीनमेवेदंप्रवर्त

नं । भगवद्भक्तिद्वेषनिमित्तकफलकथनेएतेषामपिमिश्रद्वेषभक्तिपरिपाकनिमित्तफलस्यैवकथनीयत्वाच्च । स्वयोग्यसाधनसंपत्ताव पिसुखदुःखानुभवात्मकसंसारस्यैवफलतयास्थिरीकरणेनपूर्वोक्तफलद्वयाद्वैजात्यसूचनायक्रियांतरं । संसाररूपफलविवादाभावा न्नात्रश्रुत्यादेस्सूचनंच । अत्राप्युभयस्योभयस्वभावभरितस्यजीवजातस्यराजेतिग्राह्यं । अत्रपूर्ववन्नियमसूचकवीप्साभावादेतेषा मपिफलनियमसूचनायबहुवचनं । पूर्वेषां पूर्वोक्तासुराणां सख्या स्वप्रीतिसाधनयजनाध्ययनादिशुभकर्माणिपरावृणक्ति विष्णु वैष्णवद्रोहादिकंकारयित्वाछिनत्ति । वृवचूछेदनइतिधातोः । अनेनमहतापिप्रयत्नेनाधमानांनोर्ध्वगतिरितिसूचयति । वितर्तुराणो विशेषेणत्वरमाणः । दययैवत्वरा । नपुनराशया नापिक्लेशावहेतिसूचनायछांदसप्रयोगः । अपरेभिर्देवैस्सख्यान्येति । अनेनयो ग्यानांकल्यादिकृतविघ्नैर्नकदापिस्वर्गफलप्राप्तौप्रतिबंधइतिसूचयति । असुराणांदमनयोग्यस्थानस्यप्रागनुक्तत्वात्तत्सूचनायानानु भूतीरवधून्वानइत्युक्तं । नविद्यतेऽनुभूतिर्भगवदनुभवोयासांताअनानुभूतयःताःराक्षसततीरवा ऽधस्ताद्धून्वानःपातयन्नित्यर्थः। भीषणताडनादिनामध्येमार्गमपिभयेनांगपरिकंपनायांतरभक्तमपिबहिर्भीत्यास्वचरणंस्वभटचरणंजिघृक्षंतमपितंबलान्मोचयतीति सूचनायधून्वानइत्युक्तं । अधोगतियोग्यदुर्विषयानुभवस्यदेवतांतरानुभवस्यचतेष्वेवपूर्णतयानिषेधायोगेननिषिध्यमानोनुभवः परिशेषाद्भगवदनुभवएव । योग्यजीवेष्वपिप्रमादादिनाकादाचित्कानानुसंभवादयोग्येष्ववेसार्वकालीनाननुभवसूचनायसंहितायां स्वरदैर्घ्यं । इंद्रःपरमात्मा । पूर्वीरनादिकालमारभ्यवर्तमानाइशरदस्संवत्सरांस्तर्तरीति । एवमेवातिशयेनतरति । पूर्वीरित्युक्त्या तर्तरीतीतिलटाचतरणेसर्वदाप्यप्रतिहतत्वरूपातिशयार्थकयङ्लुडंतप्रयोगेणचकालत्रयेप्यस्यनियमस्यनभंगइतिसूचयति । इममे

वार्थसंक्षेपतोदर्शयन्श्रुतितात्पर्यमाह ॥ योवाग्धून्वन्दुराशयानित्यंतेनग्रंथेन ॥ अपरैर्देवैः ॥ २२३ ॥ २२४ ॥ २२५ ॥ येषा मधमानांमध्यमानांच । सः परमात्मा । उन्नीतै वैकुंठगमनायोर्ध्वंनीतैरप्यभेदवान्न ॥ २२६ ॥ महोन्नति मैक्यघटनायस्व समोन्नतिं ॥ २२७ ॥ २२८ ॥ पुनरपिस्मृत्याश्रुत्याचसर्वमोक्षाभावंसाधयति ॥ आरुरुक्षंतीति ॥ ऊर्ध्वपदवीमारोढुमिच्छंति।

एतीतिवेदेतमसिदैत्यानांश्रूयतेव्यथा ॥ यदृच्छाकृततन्मोक्षप्रयत्नच्छेदएवच ॥ २२४ ॥
देवानामूर्ध्वलोकश्चवीप्सयानियमोपिच ॥ अतस्सर्वविमोक्षश्चसवैक्यंचकथंवद ॥ २२५ ॥
लोकप्राप्तिश्चयेषांनतेषामैक्येतुकाकथा ॥ राजोभयस्यसकिलनोन्नीतैरप्यभेदवान् ॥ २२६ ॥
एधमानद्विडित्युक्त्यास्वात्मसाम्यंसहेतन ॥ तस्माद्ब्रह्मत्वमेतेषांदुरापमितिमेमतिः ॥ ईषद्वृद्धिं
चयोद्वेष्टिसकिंदद्यान्महोन्नतिं ॥ २२७ ॥ अतश्श्रुतिसतीभावसिद्धश्रीशानुभाववित् ॥तद्भा
वंभावयेन्नैवयोऽवाग्धून्वन्दुराशयात् ॥ २२८ ॥ आरुरुक्षंतिमायाभिरुत्सिसृप्संतियेदिवं ॥
तान्दस्यून्विधुनोम्यज्ञपूर्वस्माचपदादधः ॥ इतिभागवतोक्त्याचश्रुत्याचैतत्समर्थय ॥ २२९ ॥

मायाभि र्मायामेवस्फुटीकृत्यप्रवृत्तशास्त्रैरित्यर्थः । उत्सिसृप्संति ऊर्ध्वंगंतुमिच्छंति । दिवंस्वर्गमोक्षंच । पूर्वस्मात्पदा त्पूर्वंविद्य मानपातालादिस्थानात् । इदंचबलिंप्रतींद्रवाक्यं । श्रुत्या मायाभिरुत्सिसृप्सतइंद्रद्यामारुरुक्षतः । अवदस्यूं रधूनुथाइतींद्रंप्रति

युक्ति- वेदद्रष्टृऋषिणोक्तश्रुत्या । सानुस्वारद्वितीयाबहुवचनांतोपरिस्थितरेफस्यपदकालेन कारत्वमितिवेदेनियमाद्दस्यूनधूनुथाइतिपद मल्लिका
च्छेदः । धूञ्परिकंपनइतिधातोर्लिङ्न्यात्मनेपदमध्यमपुरुषैकवचनमिदं ॥ २२९ ॥ तत्तस्मात् । एवंचश्रुत्यैवसरसंदैत्यानाम
॥ ३० ॥ धोगतिनिरूपणात्तेषामूर्ध्वगतिप्रतिपादकस्मृतिवाक्यानां विरोधेत्वनपेक्षमितिन्यायेनान्यार्थएववक्तव्यइत्यप्यनुसंधेयं ॥ २३० ॥ फलसौ०

असुराणामूर्ध्वलोकाप्राप्तिस्तमसिचस्थितिः ॥ नियताश्रूयतेसर्वमोक्षोदुर्वचएवतत् ॥ २३० ॥
मामात्मपरदेहेषुप्रद्विषंतोभ्यसूयकाः ॥ तानहंद्विषतःक्रूरान्संसारेषुनराधमान् ॥ क्षिपाम्यज
स्रमशुभानासुरीष्वेवयोनिषु ॥ २३१ ॥ आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि ॥ मामप्रा
प्यैवकौंतेयततोयांत्यधमांगतिं ॥ २३२ ॥ इतिकृष्णोपिगीतायामसुराणामधोगतिं ॥ स्वाप्रा
प्तौनियमंचाहद्वेषिणांयत्पदेपदे ॥ अतःपूर्वोक्तवाक्यार्थेसमाख्येयंबलीयसी ॥ २३३ ॥ क्वाचि
त्कद्वेषिमोक्षोक्तिरपिभक्तान्जयादिकान् ॥ शापादिनातथाभूतानुद्दिश्यैवेतिशंसति ॥२३४॥

गीतावाक्येनापिदैत्यानामधोगतिनियमंसमर्थयते ॥ मामात्मेति ॥ आत्मपरदेहेषुभगवतोद्वेषोनाम उच्चस्यतस्यनीचस्वपरैक्य
भावनैव । तर्जनताडनादेस्तत्तज्जीवद्वेषत्वसंभवेपिभगवद्द्वेषत्वायोगात् ॥ २३१ ॥ वीप्सयैवकारद्वयेननियमोपिद्रष्टव्यः ॥२३२॥ ॥ ६०८ ॥
यद्यस्मादियंगीतोक्ता बलीयसी स्पष्टत्वान्निरवकाशत्वाच्चप्रबला ॥ २३३ ॥ जयादिकान् । आदिपदेनविजयचित्रकेतुभृगूर्वश्या

दीनांसंग्रहः । तथाभूता नासुरयोनिषुभूतान् ॥ २३४ ॥ यद्यस्मा त्तत्स्मा त्सावकाशादपिनिरवकाशस्यप्रबलत्वात् ॥ २३५ ॥ इदानींमुक्तानांबहुत्वेसाकारत्वेतारतम्येचश्रुतीराह ॥ यज्ञेनेत्यादिना ॥ यत्र नाकपदोदितमोक्षे पूर्वेसाध्यादेवास्संति । तत्रते यज्ञनामकभगवत्पूजकादेवाश्चसचंतेत्युक्त्यामुक्तौपूर्वापरत्वाक्रांतबहुदेवतासिद्धिरितिभावः ॥ २३६ ॥ क्वचि त्परंज्योतिरुपसंप द्येतिश्रुतौ । सहमुक्ताज्ञातयः । अन्येमुक्ताअज्ञातयः ॥ २३७ ॥ अक्षण्वंतःकर्णवंतस्सखायोमनोजवेष्वसमाबभूवुः ॥ आदघ्ना

यद्वाङ्गिरवकाशेयंतस्याश्चोक्तैवतद्गतिः ॥ २३५ ॥ यज्ञेनयज्ञमयजंतेतिवेदवचस्य
पि ॥ उक्तोयमर्थोविस्पष्टंततोमुक्तास्सहस्रशः ॥ संतिनैकत्वमेतेषांयतोत्रानेकतो
च्यते ॥ २३६ ॥ तेषुपूर्वेपूर्वमुक्ताःपश्चान्मुक्तास्तथापरे ॥ ज्ञातयोऽज्ञातयश्चेतिते
मुक्ताःक्वचिदीरिताः ॥ २३७ ॥ सखायःकिलतेसर्वेमुक्तावपिमनोजवे ॥ असमा
स्स्वच्छरूपत्वाद्ध्रदाइवमनोहराः ॥ २३८ ॥ ॥ ॥

सउपकक्षासउत्वेह्रदाइवस्नात्वाउत्वेददृश्रइतिश्रुतेरभिप्रायमाह ॥ सखायइत्यादिना ॥ तेमुक्ताः त्वे केचिन्मुक्तास्स्नात्वास्ना नयोग्याह्रदाइवमनोहराः उएव ददृश्रे ददृशिरइतिश्रुतिखंडार्थसूचनं । ह्रदाइवमनोहराइतिदर्शनस्यस्वाभिन्नतांसूचयितुंश्रुतौ संश्लिष्टोच्चारणं । उपलक्षणंचैतत् । केचिन्मुक्ताः उपसमीपेकक्षंवनंयेषांतेउपकक्षास्तएवोपकक्षासश्श्वेतद्वीपस्थोपवनादौविहरंतः

उएवदद्दशिरे। त्वे केचिन्मुक्ताः आदघ्नासः आ कंठपर्यंतं कटिपर्यंतंवा दघ्नंप्रमाणंयस्य । श्वेतद्वीपंपरितोविद्यमानस्यक्षीरसमुद्रस्य। अर्शवानर्श इतिवत्तद्वंतआदघ्नासः। क्षीरसमुद्रजलेयथासुखंविहरंतउएवदद्दशिरइतिपदद्वयस्याप्यर्थोद्रष्टव्यः। एवंचादघ्नासइतिविशेषणेनलोकसमीपस्थानांसामीप्यमुक्तानामुदाहरणं । उपकक्षासइत्यनेनलोकांतस्थितसालोक्यमुक्तानामुदाहरणं । ह्रदाइवेतितृतीयविशेषणेनातिगभीराणामपिपवित्राणामत्यंतमनोहराणांचभगवतःकरचरणाद्यंगाश्रितदेवादीनांसायुज्यमुक्तानामुदाहरणमितिविभागः । अनेनैवप्रकारेणवैकुंठलोकसमीपस्थसांतानिकादिलोकेषु अनंतासनलोकसमीपस्थघनोदकेचरममाणा

मनोज्ञकर्णवंतश्चमनोज्ञाक्ष्यादिसुंदराः ॥ प्रत्ययोयत्प्रकृत्यर्थप्राशस्त्यंचवदेत्किल ॥ २३९ ॥
प्रशस्तताचकर्णादेर्ज्ञानानंदात्मतैवहि ॥ अतोनिराकारतैषांनैववाच्याकदाचन ॥ श्रोत्रनेत्र
फलस्यासेरपितेतत्पदोदिताः ॥ २४० ॥ ॥ ॥ ॥

स्सामीप्यमुक्तालोकेलोकस्थभगवदंगेषुचरममाणास्सालोक्यमुक्तास्सायुज्यमुक्ताश्चद्रष्टव्याः । सारूप्यंतुयद्यपिसर्वेषांचमुक्तानामस्ति । निर्दुःखत्वनित्यज्ञानत्वमुक्तत्वादिभगवद्धर्मसमानधर्मवत्त्वरूपसारूप्यस्याभावे समीपस्थत्वादिमात्रस्यसुखप्राप्तिदुःखनिवृत्त्योरन्यतरत्वस्याप्यभावेनसामीप्यादिभाजांत्रयाणाममपिमुक्तत्वायोगात् । तथापिस्वर्गादिसमीपस्थप्रदेशेषुरममाणामुक्तास्तस्यासंकीर्णोदाहरणं। तच्चान्यत्रोक्तरीत्याद्रष्टव्यं ॥ २३८ ॥ अक्षण्वंतःकर्णवंतइत्येतत्पदद्वयमंगांतरस्याप्युपलक्षणमितिभावेन तदर्थमाह ॥ मनोज्ञेति ॥ आदिपदेनकरचरणादिसर्वावयवागृह्यंते । कर्णनेत्रसौंदर्यस्यसर्वावयवसाचिव्येसत्येवसंभवादितिभा ॥६०९॥

वः। प्रत्ययोमतुप्प्रत्ययः। एषांमुक्तानां ॥ २३९ ॥ २४० ॥ २४१ ॥ महिमानइतिश्रुतौ तेहनाकंमहिमानइतिश्रुतौ। तत्तस्मात् ॥ २४२ ॥ नन्वस्यप्रकरणस्यमुक्तपरत्वंकुतइतिचेत्सर्वेनंदंतीत्युत्तरवाक्यबलादित्याह ॥ नंदंतीति ॥ नहिमुक्तेरन्यत्रसर्वेनंदंतीतिघटते। उपलक्षणंचैतत् । सखायइतिपदेनोक्तसर्वसख्यस्य ऋचांत्वइतिश्रुत्युक्तब्रह्मबाहुल्यस्यचमुक्तेरन्यत्रायोगात्तदपिग्रा

स्पष्टैतद्वाक्यबलतोयत्रत्वस्येतिवागपि॥ उक्तरीत्यातर्कमुद्रामाश्रित्यैवेतिगम्यते॥२४१॥
मुक्तिकालेयतस्तेषांमहिमानइतिश्रुतौ ॥ महिमोक्तश्शून्यभावोमुक्तानामुचितोनतत्
॥ २४२ ॥ नंदंतिकिलतेसर्वेक्लेशलेशश्चतेषुन ॥ अतोमुक्तकथैवेयंतत्पूर्वावाक्मौक्त
वाक् ॥ २४३ ॥ परंज्योतिरुपप्राप्यनिष्पन्ननिजरूपवान् ॥ पर्येतिमुक्तिस्थानेषुस्त्रीभि
र्यानैश्चसंयुतः ॥ २४४ ॥ रममाणोहसन्क्रीडन्ज्ञात्यज्ञातिजनैस्सह ॥ इतिमुक्तस्यसौ
भाग्यंश्रुतिराहपदेपदे ॥ २४५ ॥ अतोद्वितीयशून्यत्वमद्रष्टृत्वमवक्तृतां ॥ अश्रोतृ
त्वंश्रुतिप्रोक्तचित्रभोगेष्वभोक्तृतां ॥ २४६ ॥ ॥ ॥

ह्यं। अतोमुक्तकथैवेयमितिभावः। तत्तस्मात्। पूर्वावाक् अक्षण्वंतइतिवाक् ॥ २४३ ॥ परंज्योतिरितिश्रुत्यापिमुक्तसौभाग्यंप्रदर्शयन्स्पष्टदृष्टबहुतरनिरवकाशमेकं वाक्यंनपराभिप्रेतंबाधितमर्थंब्रूतइत्याह ॥ परंज्योतिरित्यादिना ॥ २४४ ॥ २४५ ॥

युक्ति- ॥ ३२ ॥

॥ २४६ ॥ श्रुतिं यत्रत्वस्येतिश्रुतिं ॥ २४७ ॥ २४८ ॥ तादृगर्थं बहुश्रुत्यनुकूलार्थं ॥ २४९ ॥ अर्थो मुक्तौतस्करस्येवश्रोत्रन यनघ्राणहस्तपादादिराहित्यरूपः ॥ २५० ॥ अधुनासैषानंदस्यमीमांसाभवतीतिश्रुतौमानुषानारभ्यविरिंचपर्यंतंमुक्तावपिस्वरूपा

मल्लिका फलसौ०

शून्यवाद्युक्तमोक्षाभांमुक्तिकोनामवैदिकः ॥ ब्रूयाच्छ्रुतिंबाधितार्थांस्पष्टश्रुतिसमाख्यया ॥
योग्यार्थेप्रणयेन्नोचेन्मीमांसाकिंनिबंधना ॥ २४७ ॥ अतश्छंदसिमर्यादामेवमेवेतिशाब्दिकः॥
नैवाहशब्दव्यत्यासंविभक्तिव्यत्ययादिच ॥ अबाधितार्थलाभार्थमेवप्राहपदेपदे ॥ २४८ ॥
तस्मात्क्वाचित्कैक्यवाक्यमुपादायबहुश्रुतीः ॥ नोपेक्षयेत्तादृगर्थंतस्यैकस्यपरंवदेत् ॥ २४९ ॥
व्यत्यासेनव्यत्ययेनवृत्त्यावालोकसिद्धया ॥ कथंमीमांसकस्यार्थस्सर्वानुभवबाधितः ॥ २५० ॥
यतस्साधनवैचित्र्यंदृवर्ष्यादिषुदृश्यते ॥ अतःफलेपिवैचित्र्यंततोमुक्ताःपरावराः ॥ २५१ ॥
नचेन्मुक्तौतारतम्यंकृतहान्यकृतागमौ ॥ भवेतांहिमहादोषौभ्रांताश्चस्युर्महोद्यमाः ॥ २५२ ॥
स्वरूपानंदवैचित्र्यमीमांसांकुर्वतीश्रुतिः ॥ मुक्तानांतारतम्यस्यानंगीकारेप्रकुप्यति ॥ २५३ ॥

नंदस्यैवतारतम्यकथनात्मुक्तानांतारतम्येयुक्तिमप्याह ॥ यतइति ॥ तत स्साधनवैचित्र्येसतिसाध्यवैचित्र्यस्याप्यावश्यकत्वाच्च ॥ २५१ ॥ विपक्षेबाधकमाह ॥ नचेदिति ॥ २५२ ॥ मुक्तानांतारतम्यं मिथोभेदः अनवच्छिन्नानंदतयांतेकथितात्परमात्मन ॥ ६१० ॥

श्वभेदोपिसिद्धइत्याह ॥ स्वरूपेति ॥ २५३ ॥ अव्यवहितोत्तरोपसंहारवाक्येप्रतिपादितब्रह्मस्वरूपानंदप्रायपठितत्वात्सर्वाप्या
नंदमीमांसास्वरूपानंदमीमांसैवेत्याह ॥ यतइति ॥ २५४ ॥ २५५ ॥ २५६ ॥ उपक्रमेपिस्वरूपानंदस्यैवोपक्रांतत्वान्मध्येपिस्व
रूपानंदमीमांसैवभवेत् । उपक्रमोपसंहारानुगुण्येनैवमध्यप्रकरणस्यापियोजनीयत्वादित्याह ॥ सत्येति ॥ सत्यंज्ञान(मानंद)
मनंतंब्रह्मेत्यप्युपक्रमवाक्यस्यशाखांतरेसत्त्वादितिभावः ॥ २५७ ॥ युक्त्यंतरंचाह ॥ संसारेति ॥ सांसारिकसुखेवैराग्यमुत्पा

यतोवाचोनिवर्तंतेअप्राप्यमनसासह ॥ आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चन ॥ २५४ ॥ इत्यंतोक्त
परब्रह्मस्वरूपानंदपङ्क्तिगा ॥ सर्वाप्यानंदमीमांसास्वरूपानंदगोचरा ॥ २५५ ॥ भवेद्धिसर्वथानोचेत्प्रा
यपाठस्यकागतिः ॥ प्रायपाठविरोधोहिमहान्दोषोविदांमते ॥ २५६ ॥ सत्यज्ञानानंदपदैरानंदमय
चर्चया ॥ उपक्रमेपियद्ब्रह्मस्वरूपानंदईरितः ॥२५७॥ अतोमध्येकृताचिंतास्वरूपानंदगोचरा ॥ भवे
दवश्यंसंसारमात्रगोष्ठीकथंश्रुतेः ॥ २५८ ॥ तद्दृष्टांततयासंसार्यानंदोपिविचार्यते ॥२५९॥ ॥

द्यमोक्षसुखएवरतिंजनयित्वाजनान्मोक्षमार्गएवप्रवर्तयंतीश्रुतिःकथंसांसारिकसुखमेववर्णयेदितिभावः ॥ २५८ ॥ ननुभवन्मते
पिश्रोत्रियस्यचाकामहतस्येतिमौक्तसुखस्यसर्वत्रपृथगुच्यमानत्वात् सएकोमनुष्यगंधर्वाणामानंदइत्यादिनोक्ततत्तदानंदोपिमौक्ता
नंदइतिचेत्सत्यं । संसारेपितत्तत्स्वरूपानंदस्यतादृशत्वाभावे नियमेनक्रमाच्छतोत्तरोबाह्यानंदोपिनस्यात् । तस्माच्छतोत्तरबाह्या
नंदक्रमनिदर्शनेनस्वरूपानंदमेवसर्वानुभवारूढंकर्तुंबाह्यानंदस्यापिकथनमित्याह ॥ तद्दृष्टांततयेति ॥ तेषांस्वरूपानंदानांदृष्टांत

तया । यथागृहाद्बहिर्निस्सरद्धूपधूमबाहुल्यतारतम्यनिदर्शनेनगृहांतरेपितत्तारतम्यमनुभावयंतितथेतिभावः ॥ २५९ ॥ तदेव दर्शयति ॥ तत्तदिति ॥ यःक्रमःस्वरूपानंदरहितकल्पादिदैत्येषुबाह्यानंदक्रमस्याप्यश्रवणाददर्शनाच्चस्वरूपवैचित्र्यनिमित्तमे वेदंबाह्यवैचित्र्यमितिभावः ॥ २६० ॥ श्रुत्युक्तमानुषानंदस्यनियमेनमनुष्येष्वदर्शनाच्चस्वरूपभूततदानंदएवश्रुतेस्तात्पर्यमित्याह ॥ उक्तइति ॥ २६१ ॥ नियतं नियमेनविद्यमानं तादृङ्मौक्तसुखं वित्तपूर्णसकलपृथिवीपरिपालनदशायांचक्रवर्तिनोयत्सुखं ता

तत्तद्रूपस्यतादृक्त्वाभावेबहिरयंक्रमः ॥ कथंस्यान्नियमेनैवयोवेदेनप्रमीयते ॥ २६० ॥
उक्तोहिमानुषानंदोनसदाविद्यतेनृणां॥संसारिणांक्वचिद्दुःखमपिसंभावितंयतः॥२६१॥
अतस्तादृङ्मौक्तसुखंनियतंहिश्रुतेर्मतं ॥ नचेद्ब्रह्मादिजीवानांरूपस्यानंदरूपता॥केनसि
द्ध्येद्यदिस्पष्टाश्रुतिरेषाबहिर्गता ॥ २६२ ॥ कथंब्रह्मसुखंतेषामवाङ्मनसगोचरं ॥ नहि
तक्षकचूडास्थंरत्नमन्येनलभ्यते ॥ अतस्तार्किकजीवास्स्युस्सर्वेजीवास्तवापिहि ॥२६३॥

दृशंयन्मौक्तसुखं मुक्तिदशायामनुभूयमानसुखं श्रुतेर्मतमभिमतमितिसंबंधः । एवंचबाह्यानंदस्यपूर्वस्माच्छतगुणत्वेनोत्तरपदस्थ स्वरूपानंदस्यापिशतगुणत्वेसिद्धेस्वरूपस्यानपायाच्छ्रोत्रियस्य श्रवणफलंप्राप्तस्या कामहतस्यावाप्तस्वयोग्यसकलकामस्यमुक्तस्या प्यानंदएव तादृशइतिसर्वत्रापिवाक्यशेषस्ययोजनाद्रष्टव्या । नचे देषाश्रुतिस्स्वरूपानंदपरानचेत् । रूपस्यस्वरूपस्य केनप्रमा णेन ॥ २६२ ॥ ननुयतोवाचइतिश्रुत्युक्तब्रह्मस्वरूपभूतानंदेनैवजीवानामानंदरूपतासिद्ध्यतीत्यतआह ॥ कथमिति ॥ ब्रह्मा ॥ ६११ ॥

दिजीवैर्मनसास्मर्तुंवाचावक्तुंचाशक्यमितिश्रुत्यैवप्रतिपादितंब्रह्मसुखंकथंजीवानांस्यादितिभावः । तार्किकजीवाः आनंदरूपत्व रहिततयातार्किकोक्तजीवाः ॥ २६३ ॥ ऐक्यायोगा जीवानांपरस्परमैक्यायोगात् । अपौरुषेये वेदे ॥ २६४ ॥ श्रोत्रियस्यचा कामहतस्येत्यत्रोक्ताऽकामहतता । बृहदारण्यकस्थानंदमीमांसायामवृजिनोसहश्चेत्यत्रोक्तमवृजिनत्वमपापत्वंच ॥ २६५ ॥ यथा

जीवस्वरूपानंदस्यतादृक्त्वेकिंगतंतव ॥ ऐक्यायोगाद्यदिभयंभेदोस्तुसततंसतां ॥
अपौरुषेयेनिर्बंधोनस्वस्वमतसिद्धये ॥ २६४ ॥ अकामहतताकस्मान्मुक्तलिंगमपो
द्यते ॥ कथमवृजिनत्वंचमुक्तादन्यस्यशोभते ॥ २६५ ॥ ब्राह्मणस्यहिदेहोयंनोपभो
गायकल्पते ॥ इहक्लेशायमहतेप्रेत्यानंतसुखायच ॥ २६६ ॥ इत्युक्त्यानेहसुखिनो
विरागाअपियोगिनः ॥ अतःपदस्थसुखवत्पदाकामेसुखंकुतः ॥ २६७ ॥ सभुङ्क्तेवि
षयान्सर्वान्प्रशास्तिचजगत्रयं ॥ अयंपंचाग्निमध्यस्थस्तपस्तपतिसर्वदा ॥ सुखले
शोपिनास्यास्तिसुखंतादृक्कथंवद ॥ २६८ ॥ ॥ ॥

मनुष्यगंधर्वादिपदस्थानामुत्तरोत्तरंशतशताधिकानंदाः तथातेषुतेषुपदेषुकामरहिततयाऽकामहतानांश्रोत्रियाणांब्राह्मणादीनांचत त्तत्पदस्थदेवानंदसदृशानंदइतिपरकीयव्याख्यानंदूषयति ॥ब्राह्मणस्येति॥२६६॥ इत्युक्त्येति । भारतोक्त्या॥२६७॥सपदस्थः

अयं ब्राह्मणादिः ॥ २६८ ॥ तस्मा दुष्करीत्यायोगिनामपिमुक्तिकालीनसुखैकभोक्तृत्वात् ॥ २६९ ॥ किंचकामितार्था लाभेहिकामेनहतता । तल्लाभेचाकामहतता । तच्चसंकल्पादेवचश्रुतेरितिसूत्रान्मुक्तानामेवघटते । अमुक्तास्तुविरक्ताअकामाएव । काम्यार्थप्राप्त्यायाऽकामहततासाकथममुक्तेषुस्यादतोपीयंमुक्तवार्तैवेत्याह ॥ अतइति ॥ -अतो मुक्तावेवसकलकाम्यावाप्तिसंभवात् । अस्तु मुक्तावेवास्तु । इयंश्रुत्युक्ता । अकामस्य संसारेवैराग्यवशाद्विषयकामनामेवाकुर्वतः । वृथा सांसारिक

तदिहक्लेशभाग्योगीसुखंतस्यास्तिमुक्तिगं ॥ तस्मान्मुक्तसुखेष्वेवतारतम्यंतवाप्यभूत् ॥ २६९ ॥
अतःकामार्थसंपत्त्याह्यकामहततास्त्वियं ॥ अकामस्यवृथाकामहततावाङ्चेत्तव ॥ २७० ॥ विरक्ता
स्सर्वसंपत्तौविरक्तास्स्युर्नकुत्रचित् ॥ तत्तत्पदेष्वकामास्तेवि(भ)रक्ताःक्वव्यवस्थया ॥ २७१ ॥ तव
नीचपदाकामात्सुखंशतगुणोत्तरं ॥ भवेदुच्चपदाकामेकथंस्युस्तादृशर्षयः ॥ २७२ ॥ यदिसर्वपदाका
मास्सर्वेतर्हिसुखेसमाः ॥ भवेयुस्तारतम्येनसुखितातेषुकिंकृता ॥ २७३ ॥ ॥ ॥

विरक्तस्वरूपनिरूपणस्याकामइत्येतावतापूर्तेर्हतपदंव्यर्थमित्यर्थः । नचे न्मुक्तपरंनचेत् ॥ २७० ॥ किंचमनुष्यगंधर्वपदाकामात्देवगंधर्वपदाकामस्यशतगुणानंदः एवमुत्तरत्रापीतिवदतातत्तत्पदाकामास्तदन्यपदेषुसकामाश्चतत्रतत्रोक्ताअकामहतास्त्वयावक्तव्याः । पदांतरेष्वप्यकामत्वेआनंदतारतम्यायोगात् । एतादृशाकामाश्चनक्वापिसंतीत्याह ॥ विरक्ताइति ॥ कुत्रचित्कुत्रचि

देव । व्यवस्थयाविभक्तइतिसंबंधः ॥ २७१ ॥ २७२ ॥ २७३ ॥ महायोगीतिविन्यासः ॥ २७४ ॥ भोग्यार्थतारतम्ये भोग्यार्थ इशर्कराखंडादिः । सुखस्य तदनुभवजनितसुखस्य ॥ २७५ ॥ एतदेवनिदर्शनमुखेनदर्शयति ॥ किंकूपस्थेति । सूक्ष्मभांडे तिच ॥ २७६ ॥ २७७ ॥ किंचास्तुवाऽकामेपियथाकथंचिदकामहतपदं । त्वयात्वकामहतपदेनतत्पदाकामहतोत्रवक्तव्यः। तच्च

अतस्तत्तत्पदाकामस्सकामोन्यपदेषुच ॥ भवेदसौमहायोगीकागीस्तंबाधितंवदेत् ॥ २७४ ॥
भोग्यार्थतारतम्येस्यात्तारतम्यंसुखस्यच ॥ तत्त्यागेपिसुखस्योच्चनीचतेत्यद्भुतंवचः ॥ २७५ ॥
किंकूपस्थजलाकामात्सुखंशतगुणोत्तरं ॥ तटाकस्थजलाकामेपिपासारहितेवद ॥ २७६ ॥
सूक्ष्मभांडोदनाकामात्सुखंशतगुणोत्तरं ॥ स्थूलभांडोदनाकामेबुभुक्षारहितेस्तिकिं ॥ २७७ ॥
कथंचित्कामशून्योयस्सोकामहतउच्यतां ॥ पदंनपदलभ्यंतेततोप्येतदलौकिकं ॥ श्रुत्युक्ता
वृजिनत्वंतुघटतेनकथंचन ॥ २७८ ॥ ॥ ॥ ॥ ॥

नश्रौतमित्याह ॥ कथंचिदिति ॥ कामशून्योयस्सकथंचिदकामहतउच्यतामितिसंबंधः । पूर्वोक्तहतपदवैयर्थ्यसूचनायकथंचि दित्युक्तं । पदं तत्पदमितिपदं । एत त्तवार्थकथनं । इदंतुसुतरांनघटतइत्याह ॥ श्रुत्युक्तयेति ॥ पापरहितत्वस्यमुक्तेष्वेवसंभ

वादितिभावः ॥ २७८ ॥ भारतोवायुः ॥ २७९ ॥ २८० ॥ अतइत्येतदेवविशदयति ॥ तत्तदिति ॥ २८१ ॥ २८२ ॥ संसे वयासुरतरोरिवतेप्रसादस्सेवानुरूपउदयेनपरावरत्वादितिभागवतस्थप्रह्लादवाक्येनापिमुक्तौतारतम्यंसिद्ध्यतीत्याह ॥ तेप्रसाद इति ॥ परावरत्वा त्सेवांविनासंपदादिभिरुच्चत्वनीचत्वात् । न प्रसादोनेतिभागवतवाक्यशेषस्यार्थः ॥ २८३ ॥ नाहंतुसख्यो



तत्तच्छ्रुत्यर्थकथनंनश्रुत्यैरोचतेसतां ॥ भारतीहृदयंत्वेकोभारतोवेत्तिनापरः ॥ २७९ ॥ अनुसंधीयतां
चर्चामहतीमूलशास्त्रगा ॥ बुद्ध्यावारोहसिद्ध्यर्थंततःकिंचिदिहोद्धृतं ॥ २८० ॥ अतोमिथोजीवभेदो
जीवब्रह्मविभिन्नता ॥ तत्तदानंदवैचित्र्यात्सिद्धासिद्धांतवेदिनां ॥ २८१ ॥ तस्माच्छ्रौतंचयौक्तंचभ्र
ध्वस्यमतमाफलात् ॥ हृद्यंचनिरवद्यंचतत्सर्वमतिमंगलं ॥२८२॥ तेप्रसादोहरेसेवानुरूपइतिसप्तमे ॥
प्रह्लादोयत्स्फुटंमुक्तौफलंसेवानुगंजगौ ॥ २८३ ॥ तत्रैवमुक्तौफलसंपदउच्चावचाइति ॥ दातैवय
त्फलासाम्यंप्राहभागवतेस्फुटं ॥ युक्तिश्रुतिस्मृतिभ्यस्तत्सिद्धामुक्तोच्चनीचता ॥ २८४ ॥ ॥

भजतोपिजंतून्भजाम्यमीषामनुवृत्तयोयथा। तथैवमत्तःफलसंपदस्स्युरुच्चावचाःकल्पतरोरिवार्थिनामितिदशमस्कंधेकृष्णवाक्येनापिमुक्तौतारतम्यमस्तीत्याह ॥ तत्रैवेति ॥ हरिस्तुनिर्गुणस्साक्षात्पुरुषःप्रकृतेःपरः । ससर्वदृगुपद्रष्टातंभजन्निर्गुणोभवेदितिस्मृतेर्हरिभजनस्यगुणत्रयात्मकसंपत्संपादकत्वायोगात्फलसंपदः फलरूपाः मुक्तिकालीनास्संपदस्स्युरितिभागवतवाक्यस्यार्थः। अतो ॥ ६१२ ॥

वाक्यद्वयमपिमुक्तावेवतारतम्यंसाधयतीतिभावः । तत्रभागवतएवेतिसंबंधः । तत्तस्मात् । साधनतारतम्येसाध्यतारतम्यंस्यादितियुक्तिः । श्रुति रानंदमीमांसारूपा । स्मृति रुक्तभागवतवाक्यद्वयरूपा ॥ २८४ ॥ ननुमुक्तौतारतम्येनीचस्योच्चेमात्सर्यमुच्चस्यनीचेऽवज्ञास्यादितिशंकांश्रौतयुक्त्यैवपरिहरति ॥ मनोजवेष्विति ॥ यद्यस्मात् । तत्तस्मात् असमत्वेपिसख्यकथनात् । तत्रमुक्तौ । तेषांमुक्तानां ॥ २८५ ॥ क्वापिकुत्रचिद्वने । साम्योक्ति र्मुक्तानां परस्परंसाम्योक्तिः । साम्योक्तिमात्रेणमुक्तानांपर

मनोजवेष्वसमतायत्सख्यंचोदितंश्रुतौ ॥ तन्मत्सराद्यभावश्चतत्रतेषांप्रसिद्ध्यति ॥ २८५ ॥
हरिसाम्योक्तिवत्क्वापिसाम्योक्तिर्दुःखवर्जनात्॥ उक्तानिरवकाशास्तायच्छ्रुतिस्मृतियुक्तयः ॥
तत्सिद्धतारतम्यंतन्मुकुंदोपिनमोचयेत् ॥ २८६ ॥ गुरोश्शिष्यस्यपांथस्यकाकस्यचपशोरपि॥
द्वितीयाशैवयद्दृष्टासुखंकस्याद्वितीयता ॥ २८७ ॥ ॥ ॥

स्परंसाम्यांगीकारे ममसाधर्म्यमागताइतिवचनेनमुक्तानांभगवताचसर्वसाम्यंस्यादितिबाधकसूचनायहरिसाम्योक्तिवदित्युक्तं । यद्यस्मात् । तत्सिद्धतारतम्यं ताभिश्श्रुतिस्मृतियुक्तिभिस्सिद्धं मुक्तानांतारतम्यं। तत्तस्मादुक्तप्रमाणानांनिरवकाशत्वात्॥२८६॥ मायावादिनापरममोक्षतयांगीकृतस्यद्वितीयराहित्याख्याद्वितीयत्वस्यसुखविरोधित्वान्नमोक्षत्वमित्येतल्लौकिकालौकिकदृष्टांतमुखेनदर्शयति ॥ गुरोरिति ॥ गुरोश्शिष्याभावेदुःखदर्शनाच्छिष्याणांगुरोरभावेचदुःखदर्शनात्। यद्यस्मात् । अन्यत्स्पष्टं॥२८७॥

युक्ति-

॥ ३६ ॥

यद्यस्मादनश्वरसंपदे स्वर्गस्थितबहुकालस्थायिसंपत्प्राप्त्यर्थं । स्वर्गाश्रययज्ञकरणमपिसंपदादिद्वितीयप्राप्त्यर्थमेवेतिभावः॥२८८॥ स्पृहेतिसर्वत्रसंबंधः ॥ २८९ ॥ सख्यामित्रेण । यशसायशोवता स्वसमीपंप्रत्यागतेनहरिणा सखायोमुक्तानंदंतीतिश्रुतिसंग्रहाय सख्यासखायोनंदंतीत्युक्तं । भूलोकेस्वर्गलोकेमुक्तिदशायांचद्वितीयाशायाएवदृष्टत्वेनाद्वितीयत्वंनपुरुषार्थइतिभावः ॥ २९० ॥ यत्रद्वैतमिवभवति । तदितरइतरंपश्यति । यत्रत्वस्यसर्वमात्मैवाभूत् । तत्केनकंपश्येत्तत्केनकंजिघ्रेद्विज्ञातारमरेकेनविजानीयाद्वे

नश्वरंयदिहैश्वर्यमतोऽनश्वरसंपदे ॥ स्वर्गार्थीकुरुतेयज्ञंसुखंकस्याद्वितीयता ॥ २८८ ॥
एकार्थनाशेप्यन्यार्थैस्त्रीनाशेक्ष्यंतरेस्पृहा॥ दग्धेगेहेनूत्नगेहेसुखंकस्याद्वितीयता॥२८९॥
धत्तेप्रियांमुकुंदोंकेगात्रार्धेतुशिवांशिवः ॥ सख्यासखायोनंदंतिसुखंकस्याद्वितीयता
॥२९०॥ यदिसांसारिकद्वैतमिवमुक्तौद्विताभवेत्॥तदान्योन्यंदर्शनंस्यात्सख्यंविषयभो
कृता॥२९१॥यदात्वात्मैकएवस्यान्मुक्तौनान्यत्तुकिंचन॥तदाकंकेनपश्येत्सकंजिघ्रेत्स्वंचकेनवा॥२९२॥

नेदमखिलंवेदतंचकेनविजानीयादितिश्रुत्यापितर्कमुद्रयाद्वैताभावस्यदूषितत्वान्नाद्वितीयावस्थामुक्तिरित्याह ॥ यदीति ॥ अव्ययानामनेकार्थत्वाद्यत्रेत्यस्ययदीत्यर्थकथनं । अन्यथातदित्यस्यतत्रेत्यर्थकथनंपरस्यापिनस्यात् । सांसारिकद्वैतमिवेति । फलितार्थकथनंअन्योन्यदर्शनंस्यादित्यादि ॥ २९१ ॥ यत्रत्वस्यसर्वमात्मैवाभूदित्यस्यफलितार्थकथनंयदेत्यादि । तथाचायमर्थः । यदा

मल्लिका

फलसौ०

मुक्तौ । अस्य मुक्तस्य दृष्टांतेद्वैतपदबलाद्दार्ष्टांतिकेद्वैतमित्यनुवर्तते । तथाचसंसारेद्वैतमिवमुक्तावपिद्विताद्वैतंयदिभवेदित्यर्थः । तदित्यस्यसर्वदेहेंद्रियादिकंयद्यात्मैवाभूदात्मव्यतिरेकेणकिमपिनाभूदितियावत् । मौक्तस्त्रीपुरुषादिनानाविधजीवदेहानांतदिंद्रियाणांतद्भोगार्हदिव्यान्नपानीयादीनांचद्वैतंयदिनस्यादितितात्पर्यार्थः । स्वदेहेंद्रियादिभिस्सहस्वस्यतुद्विताव्यवहारसाधकत्वेनद्वितासंबंधित्वाद्वैतपदोदितोविशेषएवग्राह्यः । तर्हितदामुक्तौसमुक्तःकेनकरणेनकिंरूपादिविषयंपश्येत्केनकरणेनकंगंधादिविषयंजिघ्रेत् । विज्ञातारमात्मानमन्यंचकेनकरणेनविजानीयात् । येनपरमात्मनेदंमुक्तावपेक्षितसद्रूपसद्गंधादिविषयंवेदअनुभवति । यत्प्र

पश्येदकरणस्तस्मान्मोक्षस्यापुरुषार्थता ॥ अतोवश्यंभवेद्द्वैतंमुक्तौसंसारवत्सतां ॥ २९३ ॥
इतिश्रुतिस्तर्कमुद्रामाश्रित्यद्वैतमेवयत् ॥ स्थिरीकरोतिमुक्तानांकस्यस्याद्द्वितीयता ॥ २९४॥
यदिवस्तुस्थितिकथावृथाभूत्तर्हितेश्रुतिः ॥ विज्ञातारमरेकेनविजानीयादितिस्फुटं ॥ २९५ ॥

सादान्मौक्तसर्वकामाननुभवतीतियावत् । तंपरमात्मानंकेनविजानीयात् । देहेंद्रियादिरहितघटोयथा पश्यतिजिघ्रतिचमुक्तस्सर्वान्कामान् । सोश्नुतेसर्वान्कामानितिश्रुतेः । अतश्चिद्रूपनानाजीवदेहेंद्रियादीनांदिव्यगंधरसान्नपानादीनाद्वैतमपिमुक्तावश्यमस्तीतियुक्तं । इममेवार्थमभिप्रेत्योक्तंयदेत्यादिना । आपाद्यस्येष्टापादनरूपत्वपरिहारायतस्मान्मोक्षस्यापुरुषार्थतास्यादित्यनिष्टांतरमुक्तं ॥ २९२ ॥ २९३ ॥ २९४ ॥ अस्मदुक्ततर्कमुद्रामनंगीकृत्यमुक्तावात्मव्यतिरिक्तस्याभावात्किमपिनपश्येन्नापिजिघ्रेदितिवस्तुस्थितिपरतयाव्याख्यातुर्दोषमाह ॥ यदीति ॥ ततः परज्ञानवत्स्वज्ञानस्याप्यभावात्तार्किकमोक्षवाक् । ज्ञानमात्रनास्तित्व

रूपतार्किकमोक्षप्रतिपादकवाक्यस्यात् । वस्तुस्थितिपरत्वांगीकारेविज्ञातारमरेकेनविजानीयादित्यपिवस्तुस्थितिस्स्यात् । एवंचतवा पसिद्धांतस्स्यात् । परस्यैवाभावेनपरज्ञानाभावमात्रस्यतवानुकूलत्वेपिसुखज्ञानात्मकस्वरूपमात्रस्यतदापिसत्त्वेनतदुभयानुभवस्य त्वयाप्यंगीकारात् । नचवाच्यंस्वावेद्यत्वरूपस्वप्रकाशत्वंवदतोममतदनुभवोपिनापेक्षितइति । तथासतिमोक्षस्यापुरुषार्थत्वप्रसं गात् । तवमतेपिसुखज्ञानात्मकमनसइवतदनुभवितृत्वाभावेऽचेतनत्वस्यातएवापुरुषार्थभाक्त्वस्यचापरिहारेणतदनुभवावश्यंभा वात् । स्वावेद्यत्वमात्रस्यघटेपिसत्त्वेन ज्ञानरूपत्वेसतिस्वावेद्यत्वस्यमनसिविद्यमानत्वेनच विषयप्रकाशत्वस्यवक्तव्यत्वाच्च । एवं

यत्स्वज्ञानंचनेत्याहततस्तार्किकमोक्षवाक् ॥ अभूदियंवेदवाणीकृपाणीतेभवेद्ध्रुवं ॥ २९६ ॥
नप्रेत्यसंज्ञेतिचवाक्प्राकृतज्ञानशून्यतां ॥ मुक्तस्याहपरंनोचेज्जिग्युस्तार्किकबालकाः ॥ २९७॥
किंचनप्रेत्यसंज्ञास्तीत्युक्तिर्मोहनिपातनं ॥ इतिश्रुतेश्चनज्ञानमात्रंसावाङ्निषेधति ॥ २९८ ॥

चस्वविषयज्ञानाभावकथनंनवस्तुस्थितिस्स्यात् । अतस्तर्कमुद्रैवपरेणाप्याश्रयणीयेतिभावः ॥ २९५ ॥ २९६ ॥ अतएवनप्रेत्यसं ज्ञास्तीतिवाक्यस्यस्वरूपभूतज्ञानमंगीकुर्वतात्वयामयाचान्यएवार्थोवक्तव्यइत्याह ॥ नप्रेत्येति ॥ नोचेत्प्राकृतज्ञानमात्रापहारि णीनोचेत् । ज्ञानमात्रनिषेधकार्यपीत्यर्थः ॥ २९७ ॥ अपिचात्रैवमाभगवान्मोहांतमापा-तत् । नप्रेत्यसंज्ञास्तीत्युत्तरवाक्यपर्या लोचनयापिनसाश्रुतिर्ज्ञानमात्रनिषेधिकेत्याह ॥ किंचेति ॥ इतिश्रुते रित्यर्थप्रतिपादिकाया अत्रैवेतिश्रुतेः । तदेववाक्यमनूद्य 

तदर्थस्यमोहाख्यनाशेपातनरूपत्वोक्तेश्चनसावाक्ज्ञानमात्रनिषेधिकेतिभावः ॥ २९८ ॥ यत्रत्वस्येतिवाक्यस्ययथास्थितपदैरेवल भ्यमर्थांतरमाह ॥ यत्रवस्तुद्वैतमिवेति ॥ वस्तूनांद्वैतं नानात्वमिवेत्यर्थः । द्वित्रलग्नं द्वित्रेषुवस्तुषुलग्नंमनोभवेद्यथातथातत्त दर्थंदिदृक्षापियत्रदेशेभवेदितियावत् । दृष्टांतकथनादेवतदनुकूलदार्ष्टांतिकोहनमपिपदलभ्यमेवेतिद्रष्टव्यं । तदित्यस्यार्थकथनं तत्रेति ॥ २९९ ॥ यत्रतपोयोग्यविविक्तप्रदेशे । इममेवविशेषंद्योतयितुंश्रुतौतुशब्दः । सर्वमिष्टं सर्वमितिविशेषणस्यविशेष्यसा

यत्रवस्तुद्वैतमिवद्वित्रलग्नंमनोभवेत् ॥ तत्रेतरःपुमान्पश्येदितरार्थानपिस्फुटं ॥ २९९ ॥
यत्रत्वेकाग्रमनसस्सर्वमिष्टंचयोगिनः॥ आत्मैवाभूत्तत्रकेनततोन्यंकंसपश्यति ॥३००॥
कंजिघ्रतिस्वकंरूपंकेनवासौप्रपश्यति ॥ येनेदमखिलंवेदपश्येद्वाकेनतंगुरुं ॥ इत्यात्म
रतमस्तौद्वायत्रत्वस्येतिवागियं ॥ ३०१ ॥ ॥ ॥ ॥

पेक्षत्वात्तत्पूरणायेष्टमित्युक्तं । दिदृक्षाजिघ्राशाजिघृक्षादीनामपिविषयइतियावत् । सर्वेंद्रियैरपिहरिमेवानुभवामीतिमनोभूदिति भावः । अस्येत्यस्यार्थकथनंयोगिनइति । केनकरणेन कंपदार्थं । सर्वेंद्रियाणामात्मन्येवोपरतत्वेनबाह्यपदार्थेभ्योनिवृत्तेरितिभा वः । कंपश्येदित्यस्यैवार्थांतरकथनंस्वकंरूपंकेनवासौप्रपश्यतीति । येनेदमखिलंवेद तंचकेनविजानीयादित्यस्यार्थकथनंयेनेति । येनगुरुणा । इदं स्वेनक्रियमाणध्यानादिकौशलं । किमर्थमेतत्कथनमित्यतआह ॥ इतीति ॥ ३०० ॥ ३०१ ॥ भगवद्ध्यानै

करतेअन्यपदार्थानवलोकनंनापूर्वमितिभावेनलौकिकदृष्टांतानाह ॥ अक्षेत्यादिना ॥ अक्षासक्तश्चतुरंगादिक्रीडासक्तः । इत्थ मपिगाधालोकेप्रसिद्धा । स्वमात्मानंपश्यतःपुरुषान् घटस्थहृदया मौलौस्थापितघटस्थहृदया । इयमपिकथानाट्यरंगेप्रसिद्धा । शर कृच्छरवक्रतादिकंपरिहरन्धनुर्विद्यानिपुणः ॥ ३०२ ॥ पूर्वंसांसारिकापरोक्षज्ञानिविषयतयाव्याख्यातं । इदानींमौक्तध्यातृविषयं वेदवाक्यंस्यादित्याह ॥ मुक्ताइति ॥ तुच्छफलायशरकारेध्वनत्तूर्यभेर्यादिसहितराजसेनायाअनवलोकनस्यदृष्टत्वान्महाफलदा

अक्षासक्तःकिमश्रौषीन्मातुर्मृतिमुदीरितां ॥ किंपश्येत्पश्यतोपिस्वंघटस्थहृदयानटी ॥ शरकृ
त्केनकंजिघ्रेत्कंजानीयात्कमीक्षते ॥ ३०२॥ मुक्तास्स्वात्मरताजिघ्रंतीक्षंतेकंविजानते ॥ सेनाम
न्यमनाःसेनांनाज्ञासीदितिलौकिकं ॥ आत्मैकासक्तचित्तोपितथेतिकिमलौकिकं ॥ ३०३ ॥
अप्राकृतप्राकृताभ्यांद्वाभ्यांद्वीतोभवेभवेत् ॥ द्वीतास्संसारिणस्तस्मात्तत्संबंधिवपुस्त्विदं ॥ ३०४ ॥

यकभगवद्ध्यातरितदन्यानवलोकनंकिमपूर्वमतश्श्रुतेरयमेवार्थइत्याह ॥ सेनामिति ॥ सेना मिनेनराज्ञासहितां सेनांराजचमूं । उपलक्षणंचैतत् । चतुरंगबलबृंहितादिघोषोपेतामित्यपिद्रष्टव्यं ॥ ३०३ ॥ प्रकारांतरेणश्रौतपदानामत्यंतमनुकूलमर्थंवदन्ननयै वश्रुत्यासंसारान्मुक्तेर्वैलक्षण्यंदर्शयति ॥ अप्राकृतेति ॥ अप्राकृताभ्यां देहेंद्रियाभ्यामितस्सहितोजीवः । भवेसंसारे । द्वीता नामिदंद्वैतमितिव्युत्पत्त्यातत्संबंधि संसारिजीवसंबंधि । इदंपरिदृश्यमानंजडं । तद्वपुः । उक्तव्युत्पत्तेःप्राकृताप्राकृतदेहयोस्सम

त्वेपिप्राकृतदेहस्यैवावगमनेनिमित्तमाह ॥ अस्वभावत्वतइति ॥ इवशब्दोदितं द्वैतंभवतीवेतिक्रियायोगेसत्यस्वभावत्वतोस्वा भाविकत्वरूपमर्थमादायोदितंप्रतिपादितंस्यात् । भवतीवेत्युक्तेस्वभावतोनास्तीत्यर्थलाभादितिभावः । द्वैतपदार्थमुक्त्वेदानींवा क्यंयोजयति ॥ यदेति ॥ यत्रेतिपदस्यकालवाचकत्वेयस्मिन्कालइत्यर्थलाभाद्यदेत्युक्तं । तत्प्राकृतशरीरं । नृणांभवति अस्ति । तदितिश्रौतपदस्यार्थस्तदेति । इतरशब्दोक्त स्वरूपेंद्रियेभ्योभिन्नत्वेनेतरशब्दोक्तोबाह्येंद्रियगणः प्राकृतचक्षुरादींद्रियगणः ।

बाह्यंद्वैतमितिप्रोक्तमस्वभावत्वतश्चतत् ॥ इवशब्दोदितंजीवेयदाभवतितन्नृणां ॥ ३०५ ॥
तदात्वितरशब्दोक्तोबाह्येंद्रियगणोप्ययं ॥ पश्येत्स्वरूपादितरमर्थंदेहघटादिकं ॥ ३०६ ॥
यत्रत्वात्मात्मकंसर्वमभूद्देहेंद्रियादिकं ॥ तत्रमुक्तौकेनबाह्येनाक्ष्णाबाह्यार्थमीक्षते ॥ कंवाजि
घ्रेद्विजानीयादित्यर्थोवाश्रुतेर्भवेत् ॥ ३०७ ॥ ॥ ॥ ॥

स्वरूपाज्जीवस्वरूपात् ॥ ३०४ ॥ ३०५ ॥ ३०६ ॥ यत्रतुमुक्तौ संसाराद्विशेषंद्योतयितुंतुशब्दः । सर्वमात्मैवाभूदित्यस्यार्थआ त्मात्मकमित्यादि । एवशब्देनश्रुतिरात्मभिन्नदेहेंद्रियाणिव्यवच्छिनत्ति । अस्मिन्नर्थेसामानाधिकरण्यप्रयोगस्यसाक्षादैक्यार्थक त्वेनौपचारिकत्वानंगीकारादत्यंतफलस्वारस्यंद्रष्टव्यं । अनुकूलविभक्त्यानुवृत्तेतरपदार्थकथनंबाह्येनेति । बाह्यार्थंकं बाह्यार्थं । अत्राप्यनुवृत्तेतरपदार्थकथनंबाह्येति । बाह्यं अप्राकृतादितरमर्थमित्यर्थः । प्राकृतदेहस्यसर्वथाऽभावादितराभावः । गेहादीनांतु

लक्ष्म्यात्मकत्वादप्राकृतेतरत्वाभावः । मुक्तावपिकेषांचिच्छुद्धप्राकृतानांसत्त्वेपिप्राकृतेंद्रियगणस्यसर्वथाऽभावात्केनेतरेणचेतरंप श्येज्जिघ्रेत् । किंतुस्वरूपचक्षुर्घ्राणादिनैवपश्येज्जिघ्रेदित्यादियोजनाद्रष्टव्या । अनेनसंसारेप्राकृतेंद्रियैरपिविषयान्भुंक्ते मुक्तौचस्व रूपेंद्रियैरेवसकलविषयभोगइतिस्वरूपाविर्भावाख्यमहिम्नःप्रतिपादनेश्रुतेस्तात्पर्यमित्युक्तंभवति ॥ ३०७ ॥ श्रुतेःपरोदीरितसर्वै क्यरूपार्थेमुक्तिप्रतिपादकबहुश्रुतिविरोधश्चस्यादित्याह ॥ यथोदमित्यादिना ॥ उदमुदकं । यथोदकंशुद्धेशुद्धमासिक्तंतादृगेव

यथोदंशुद्धमासिक्तंशुद्धेस्यात्तादृगेवहि ॥ एवंमुनेर्जानतश्चशुद्धोप्यात्मापरात्मनि ॥
प्रविष्टस्तादृगेवस्यान्नतदात्मेतियाश्रुतिः ॥ ३०८ ॥ परमंसाम्यमेवेतिब्रह्मणासहचेतिवा
क् ॥ उपसंक्रम्यचेत्युक्तिरुपसंक्रामतीतिवाक् ॥ ३०९ ॥ साक्षाज्ज्ञानफलंमोक्षंशंसंत्य
स्तत्रतत्रहि ॥ कथंघटेरन्सर्वैक्येबह्व्योर्थांतरवर्जिताः ॥ ३१० ॥ ॥ ॥

भवति । एवंमुनेर्विजानतआत्माभवतिगौतमेतिश्रुतिरनेनसंगृहीता ॥ ३०८ ॥ परमंसाम्यमेवेत्यनेन यदापश्यःपश्यतेरुक्मवर्णंक र्तारमीशंपुरुषंब्रह्मयोनिं । तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैतीतिश्रुतिस्संगृहीता । ब्रह्मणासहचेतिवागित्यनेन योवेदनिहितंगुहायांपरमेव्योमन् । सोश्नुतेसर्वान्कामान्सहब्रह्मणाविपश्चितेतिश्रुतिर्गृहीता । उपसंक्रम्यचेत्युक्तिरित्यनेन परं ज्यो तिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते । सतत्रपर्येतीतिश्रुतिस्संगृहीता ।एत मानंदमयमात्मानमुपंसक्रम्येत्यारभ्यकामान्नीकामरूप्य नुसंचरन्नित्यंताभृगुवल्लीश्रुतिश्च । उपसंक्रामतीतिवागित्यनेन एतमन्नमयमात्मानमुपसंक्रामतीत्यादिरूपाब्रह्मवल्लीश्रुतिर्गृहीता । एवंमुनेर्विजानतः तदाविद्वान् योवेदेत्यादिरूपेणज्ञानिनामेवतत्रतत्रोक्तफलश्रवणात्साक्षाज्ज्ञानफलमित्युक्तं मोक्षं । परममोक्षमि त्यर्थः । उपलक्षणंचैतत् । दृष्टांतेआधाराधेययोरुभयोरप्युदयोश्शुद्धत्वोक्त्यादार्ष्टांतिकेपि । नचवाच्यमन्नमयादीनांकोशत्वात्क थंतत्प्राप्तिर्मोक्षइति । कामान्नीकामरूप्यनुसंचरन्नित्युक्ततज्ज्ञानफलस्यमुक्तेरन्यत्रासंभाविततयामौक्तफलत्वावश्यंभावेनतत्साध कान्नमयादीनांब्रह्मत्वापरिहारात् । स्थानद्वयेऽन्नमयादिपंचकेष्वन्नमयमात्मानमुपसंक्रामतीत्यादिरूपेणैतमन्नमयमात्मानमुपसंक्र

यदिजीवन्मुक्तिपरासर्वापीयंममश्रुतिः ॥ यत्रत्वस्येतियावाक्तेतर्हिसुप्तिपरास्तुसा ॥ ३११ ॥
यत्रजागरणेनानापदार्थद्वैतवन्नृणां ॥ तज्ज्ञानंचभवेत्तर्हिस्यादन्योन्यनिरीक्षणं ॥ ३१२ ॥ यत्र
सर्वंचकरणमात्मसाक्ष्येवकेवलं ॥ बाह्यानांमनआदीनांयदाह्युपरतिस्तदा ॥ ३१३ ॥ ॥

म्येत्यादिरूपेणचदुर्जनदंतभंगायदशधाश्रुत्यैवान्नमयादीनांपंचानामप्यात्मत्वोक्तेश्च । अतएवकोशत्ववादिनउपसंक्रामत्युपसंक्र म्येतिचपदयोरतिसंक्रामत्यतिसंक्रम्येतिचयदनानुभविकार्थकथनंतदपिगर्भस्रावेणैवगतं । आत्मातिक्रमणस्यस्वमतेप्रयोगात् । नहिकोप्युपनयनशब्दस्यविप्रसमूहमतिक्रम्यबहिर्नयनमर्थंब्रूते ॥ ३०९ ॥ ३१० ॥ यत्रत्वस्येतिवाक्यस्यपुनरप्यर्थांतरं वक्तुं मंदाशंकामुत्थापयति ॥ यदीति ॥ ३११ ॥ ३१२ ॥ सुप्तौस्वाज्ञानसद्भावाद्विज्ञातारमरेकेनविजानीयादित्यस्यकोर्थइत्यत

आह ॥ स्वद्रष्टारमिति ॥ स्वंसुप्तं स्वद्रष्टारंजाग्रत्पुरुषं । तं परमात्मानं । ससुप्तः ॥ ३१३ ॥ ३१४ ॥ सुखरूपेंद्रियादिकमित्य नेन कशब्दस्यसुखवाचित्वात्केनसुखरूपेणचक्षुषा कंसुखरूपंजीवांतरं । केन सुखरूपेणघ्राणेन कं सुखरूपगंधयुक्तंनारीमुखं केन सुखरूपेणसाक्षिणेत्यादियोजनिकां सूचयति । कर्माणिविज्ञानमयश्चआत्मापरेऽव्ययेसर्वएकीभवंतीतिश्रुतेरर्थमाह ॥ एकीभवंतीति ॥ क्षीरेनीरमेकीभूतमितिवन्मुक्तानांहर्युदरेप्रवेशेनपृथगदर्शनादेकीभवंतीतिप्रयोगइतिभावः ॥ ३१५ ॥ अर्थांतरमप्याह ॥

तत्रसुप्तौकेनकिंवापश्येज्जिघ्रेच्चकंतदा ॥ स्वद्रष्टारंचकंपश्येदज्ञानावरणात्तदा ॥ येनेदमखिलं वेदजानीयात्तंचकेनसः ॥ ३१४ ॥ अथवाप्राहसामुक्तौसुखरूपेंद्रियादिकं ॥ एकीभवंतिचपरे मुक्ताश्चक्षीरनीरवत् ॥ ३१५ ॥ प्रविष्टत्वात्तदुदरेसर्वेषांस्वपतांहृदि ॥ अर्थोऽप्येवमभूत्स्वस्थः क्लिष्टार्थोनास्तिकश्चन ॥ पुनरावृत्तिरेवासीत्त्वद्बद्त्त्वद्वचनस्यच ॥ ३१६ ॥ ममवाक्यानिनपुनरा वर्ततेकदाचन ॥ तेषुतेषुप्रकरणेष्वनुक्त्यान्यफलस्यहि ॥ ३१७ ॥ ॥ ॥

प्रविष्टत्वादिति ॥ हृदितदुदरे हृदयस्थस्यप्राज्ञनामकस्यतस्यहरेरुदरे । सतासौम्यतदासंपन्नोभवति । प्राज्ञेनात्मनासंपरिष्वक्तो नबाह्यंकिंचनवेदेत्यादिश्रुतेस्सुप्तानामपिहर्युदरप्रवेशादितिभावः । तद्वत् मुक्तियोग्यस्यतवमुक्तिंजिगमिषतोपियथापुनरावृत्तिरेव भवति तथामुक्तिप्रतिपादकत्वेनाभिमतमिदंवाक्यंचसुप्तिप्रतिपादनायपुनरावृत्तिमदभूदितिविनोदोक्तिः ॥३१६॥ आवर्तंते परममु क्तिप्रतिपादनं विहायजीवन्मुक्तिप्रतिपादकतयानयोजयितुंशक्यंत इत्यर्थः । अन्यफलस्य तत्रोक्तफलादन्यफलादस्य । तदाहीदं

कामान्नित्वादिकंजीवन्मुक्तिस्थफलंस्याद्यदितत्रैवप्रकरणेपरममुक्तिस्थफलांतरमुच्येत। नचतदस्ति। एकस्यांशाखायांसाधनमुक्त्वा शाखांतरेफलकथनस्यस्वोक्तमोक्षसाधनेफलंप्रदर्श्यरतिमुत्पादयंत्याश्श्रुतेरसंगतत्वात्। अतस्तत्रतत्रोदितमेवफलंपरममुक्तिस्थमे वफलमितिभावः। उपलक्षणंचैतत्। जीवन्मुक्तस्यैवोषस्तेदुर्वाससःपरंप्रत्यन्नप्रार्थनदर्शनेनकामान्नत्वादेर्जीवन्मुक्तावसंभवाच्चेत्य पिद्रष्टव्यं ॥ ३१७ ॥ युक्त्यंतरंचाह ॥ मुमुक्षोरिति ॥ मोक्षेच्छोर्मोक्षेतरफलकथनस्यआम्रान्पृष्टःकोविदारानाचष्टइतिवदसंग

मुमुक्षोस्त्वस्यकेनेदंफलंवक्त्यनपेक्षितं ॥ अन्यत्रहिविरक्तास्तेसर्वविद्याविशारदाः ॥ ३१८॥ अज्ञाना
ख्यांजनच्छेदःपुण्यपापविमोचनं ॥ सर्वकामाशनंचैवस्वरूपव्यक्तिरेवच ॥ जीवन्मुक्तौकर्मफलेकथं
स्याद्धीमतांमते ॥ ३१९ ॥ यदिकामाशनंतेषांममंथुःक्षीरसागरं ॥ यज्ञाशनार्थंकलहस्तत्रतत्रकथंवद
॥ ३२० ॥ त्वगस्थिमात्रगात्राणांवातपर्णोदकाशिनां ॥ सदाशरीरसंतापतपस्यासक्तचेतसां ॥ ३२१ ॥
मुनीनांनारदादीनांसाक्षात्कृतपरात्मनां ॥ जीवन्मुक्तिदशास्थानांकथंकामान्नितावद ॥ ३२२ ॥

तत्वाच्चेतिभावः ॥३१८॥ एतच्छ्रुत्युक्तफलस्यजीवन्मुक्तावसंभावितत्वाच्चपरममुक्तिस्थमेवेदंफलमित्याह ॥ अज्ञानेति ॥३१९॥ तेषां जीवन्मुक्तानां। जीवन्मुक्तावपिकामान्नित्वसर्वकामाशनादिसद्भावेऽपरोक्षज्ञानितयाजीवन्मुक्तानामेवदेवानाममृतार्थसमुद्र मथनं यज्ञाहुत्यर्थंरुद्रादीनांकलहश्चनिर्निबंधनएवस्यादितिभावः ॥ ३२० ॥ नकेवलंजीवन्मुक्तौसर्वकामाशनमसंभावितं प्रत्युत विरुद्धमित्याह ॥ त्वगस्थीत्यादिना ॥ तपस्यासक्तचेतसां शरीरस्यसंतापोयस्यांसातस्यांतपस्यायामासक्तचेतसां ॥३२१॥३२२॥

यु० म० १०४

आवर्तंते मुक्तिकथनादन्यत्रावर्तंते ॥ ३२३ ॥ ३२४ ॥ ब्रह्मणासहसर्वान्कामानश्नुतइत्यस्य मुक्तोपिब्रह्मतादात्म्यंप्राप्यपशुपक्ष्या
दिनानाजीवात्मकब्रह्मणाभुज्यमानान्सर्वान्भोगान्सहयुगपदश्नुतइतिमायावादिनोवदंति तदत्यंतपरिहास्यमित्याह॥सर्वीभूयेति॥
तद्ब्रह्मरूपेण तच्चतद्ब्रह्म तस्यसर्वात्मकब्रह्मणोरूपेण ॥ ३२५ ॥ क्रमिकभोगा न्दिनेदिनेक्रमेणजायमानभोगान् । अयंमुक्तः ।

अतोनिरवकाशानिवचनान्यखिलानिमे ॥ ब्रूयुर्मुक्तिमनावृत्तिंनावर्ततेकथंचन ॥ ३२३ ॥ यस्स
मीपाप्तिसाहित्यसाम्यानिचविभिन्नयोः ॥ ततःपरममोक्षेचभेदोयंसुस्थिरोभवत् ॥ ३२४ ॥
सर्वीभूयपरंब्रह्मसर्वान्कामान्किलाश्नुते ॥ मुक्तस्तद्ब्रह्मरूपेणभुंक्तेतानखिलान्किल ॥ ३२५ ॥
सहशब्दोयौगपद्यंवदेदात्मेच्छयाकिल ॥ तस्यक्रमिकभोगांश्चभुंक्तेऽयंयुगपत्किल ॥ येप्राहु
रित्थंश्रुत्यर्थमनर्थंकिंनतेविदुः ॥ ३२६ ॥ तुषान्नंकंटकान्नंचमलंनारकभोजनं ॥ नानायोनिस्थ
जीवानांहीनाहीनाशनानिच ॥ ३२७ ॥ इमेसर्वात्मकब्रह्मकामामुक्तस्यचेत्तव ॥ मुक्तिर्नबंधा
त्तर्ह्येषामुक्तिर्मुक्तेरभूदहो ॥ तस्मादीदृग्विधव्याख्याप्रत्याख्यामुक्तिसंपदः ॥ ३२८ ॥ ॥

सहशब्दयौगपद्यार्थस्यक्रमिकभोगानांयुगपद्भोजनस्यचासंभावितत्वेनानुवादसमयएवदृश्यमानदोषत्वादत्यंतपरिहास्यं ॥ ३२६ ॥
तुषान्नं रासभेनभुज्यमानं । कंटकान्नमुष्ट्रेणभुज्यमानं । मलंशुनाभुज्यमानं । नारकभोजनं नरकेऽनुभूयमानदुःखभोजनं । इमे
कामा उक्तकामाः । उपलक्षणंचैतत् । सर्वमुक्तामुक्तकामानामप्यभावात्पुनरर्थायोगश्चद्रष्टव्यः ॥ ३२७ ॥ ३२८ ॥



॥३२९॥३३०॥३३१॥३३२॥ इत्युपनिषदितिसंबंधः । तस्यब्रह्मणः । अयमंतःप्रवेशः ॥ ३३३ ॥ ३३४ ॥ जातिभेदोंतःप्रवि-
ष्टशरस्थशरत्वजातिवल्लक्षीभूतपुरुषस्थपुरुषत्वजातिवच्चब्रह्मणिब्रह्मत्वजातिः अंतःप्रविष्टजीवेजीवत्वजातिश्चेतिजातिभेदः । पुरुष

कथंचपरमंसाम्यंजीवन्मुक्तौहिदुःखिनां ॥ निर्दुःखब्रह्मणासाकमितिचिंत्यंविवेकिभिः ॥
॥ ३२९ ॥ इदंज्ञानमपाश्रित्यममसाधर्म्यमागताः ॥ सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच
॥ ३३० ॥ इतिगीतासुयत्स्पष्टंस्वसाधर्म्यंहरिर्जगौ ॥ सर्गप्रलयशून्यानांमहामोक्षस्थदेहिनां
॥ ३३१ ॥ जीवन्मुक्ताश्चजायंतेम्रियंतेचतदातदा ॥ अतःपरममुक्तस्यप्रशंसेयंनसंशयः
॥ ३३२ ॥ तथान्योपनिषत्प्राहशरवत्तन्मयोभवेत् ॥ इतिमुक्तिप्रकरणेशरवन्मुक्तचेतनः
॥ ३३३ ॥ लक्षवद्ब्रह्मतस्यांतःप्रवेशःक्षीरंनीरवत् ॥ इदमेवास्यसायुज्यंमयटोर्थोप्ययंकिल
॥ ३३४ ॥ जातिभेदोवर्णभेदोमुक्तभेदोस्तितत्रच ॥ भेदेनादर्शनादेवतदेकीभाववाक्छ्रुतौ ॥
अदृष्टांतोक्तितोयस्मात्सदृष्टांताबलीयसी ॥ ३३५ ॥ ॥ ॥

स्यमहाकांतिवदयोमयशरीरस्याल्पकांतिवज्जीवब्रह्मणोर्वर्णभेदः । मुक्तभेदएकशरीरप्रविष्टबहुशरीरभेदवद्ब्रह्मणिप्रविष्टमुक्तानांप
रस्परभेदोमुक्तभेदः । तत्रमुक्तौ । अदृष्टांतोक्ति र्नविद्यतेदृष्टांतोक्तिर्यस्यांसाऽदृष्टांतोक्तिस्तस्याःसदृष्टांताउक्तिः ॥ ३३५ ॥

युक्ति- यंभेदं । सैव शरवत्तन्मयोभवेदितिप्रतिपादयंत्येवाथर्वणोपनिषत् । जीवेश्वरभेदंपुनरित्यनेनमुक्तिकालीनभेदस्यैवप्रतिपादिकावा मल्लिका
द्वासुपर्णेतिश्रुतिरितिसूचयति । जीवपक्षोक्तस्वाद्वशनस्यमुक्तावेवसंभवात् । अस्मिन्नर्थे मुक्तावपिजीवेश्वरभेदरूपार्थे ॥ ३३६ ॥
॥ ४२ ॥ तत्प्रेम राज्ञःप्रेम भावयेत्स्वस्मिन्भावयेत् ॥ ३३७ ॥ ३३८ ॥ नन्वेवमनुभवश्रुतिविरुद्धता कथंतर्हिमायावादिनामुक्तितयोक्तेति फलसौ०

कथंजीवेशभेदोनयंमुक्तोपिनमुंचति ॥ द्वासुपर्णेतिसैवाहपुनस्तद्भेदमंजसा ॥ तस्माद्भेदां
तवाक्यानामस्मिन्नर्थेमहान्भरः ॥ ३३६ ॥ त्वमेवाहमितिप्रोक्तोभृत्यस्तत्प्रेमभावयेत् ॥
अतोमुक्तैक्यवाक्यंचमुक्तस्यात्यासतापरं ॥ ३३७ ॥ ममात्माभद्रसेनोयमित्युक्तिर्द्वैष्टि
किंद्वयं ॥ एकीभूताइतिप्रोक्तेकिंगवामद्वितीयता ॥ ३३८ ॥ द्वेषांधायवनेवासोयोषा
त्यागोपिरोचते ॥ नचेद्वितीयशून्यत्वमोक्षाययततेकथं ॥ ३३९ ॥ चोरस्याभाषणंलिं
गमस्पर्शनमदर्शनं ॥ कथंमोक्षमशिक्षंतनचेदेतादृशींदशां ॥ ३४० ॥ ॥

चेत्सत्यं । भगवतिप्रद्वेषाद्वाश्रुत्यर्थतस्करत्वाद्वेत्याह ॥ द्वेषेति ॥ द्वेषांधायस्वकलत्रादौद्वेषेणांधायपुरुषाय । सहिसर्वंत्यक्त्वावने
गुहायांस्थातुमिच्छति तथासकलजगत्कर्तुर्भगवतोमहिमानमसहमानएवेदृशींमोक्षदशामाचष्टेतिभावः ॥ ३३९ ॥ एतादृशीं भा ॥ ६३ ॥
षणस्पर्शनदर्शनादिव्यापारशून्यांदशां । चोरोपिहियस्यकस्यापिपुरुषस्यदर्शनस्पर्शनादिकंयथानभवतितथाक्वचित्तमसिनिलीन

स्स्थातुमिच्छति । एवं विश्वंसत्यं द्वासुपर्णेत्यादिश्रुत्यर्थतस्करत्वात्केवलंतन्निर्वाहायैवेदृशींमोक्षदशामाचष्टेतिभावः ॥ ३४० ॥
मत्तोपिजात्वपिनवक्तीतिसंबंधः । अद्वितीयत्वंमोक्षइतिवदन्वादीमत्तादप्यधिकोभ्रांतइतिभावः । कुतइत्यतआह ॥किमिति॥
इत्याद्युक्तीरित्यादिश्रुतीः । स मुक्तावद्वितीयत्ववादी । तस्मादेकाकीनरमतइत्यादिस्पष्टश्रुतिविरुद्धमेकाकित्वमंगीकुर्वन्पूर्वोत्तर
विरुद्धभाषित्वान्महोन्मत्तइतिभावः ॥ ३४१ ॥ आदिपदोक्ताश्श्रुतीस्स्मारयति ॥ ज्योतिरिति ॥ ३४२ ॥ नीतिविरुद्धत्वाच्च

पूर्वोत्तरविरुद्धोक्तिंमत्तोवक्तिनजात्वपि ॥ किमेकाकीनरमतइत्याद्युक्तीस्सनात्यगात् ॥ ३४१ ॥
ज्योतिःप्राप्यसपर्येतिस्त्रीज्ञात्यज्ञातिसंयुतः ॥ सहाश्रुतेसर्वकामानित्याद्यामौक्तिकोक्तयः ॥३४२॥
राजन्निगडबद्धस्यतन्मुक्तस्यचराड्भवान् ॥ यथाबद्धगतिःकृष्णोमुक्तानांपरमागतिः ॥३४३॥ स्वाधी
नंस्वसमंकर्तुंनोत्सहस्वकदाचन ॥ सारूप्यदोपिकिंश्रीशोदत्तेश्रीवत्सकौस्तुभौ ॥३४४॥ सदासेव्य
पिनाकांक्षेदंगनालिंगनंप्रभोः ॥ इच्छंत्यच्छहृदोमुक्तावपिनैक्यंतदीशितुः ॥ ३४५ ॥ हृष्टोपिरा
जानस्वीयांजायांदिशतिकस्यचित् ॥ प्रपन्नायप्रसन्नोपिस्वात्मैक्यंनदिशेद्धरिः ॥ ३४६ ॥ ॥

भगवान्स्वेनैक्यंमुक्तानांनदिशति । ततएवभक्तास्तेमुक्ताः नतदाकांक्षंतेचेत्याह ॥ राजन्नित्यादिना ॥ दृष्टांतैःप्रतिवाक्यमेवप्र
माणमपिभूयादितिभावेनमुक्तानांपरमागतिरितिसहस्रनामस्थपुण्यनाम्नैवभगवानुद्दिष्टः ॥ ३४३ ॥ ३४४ ॥ तत्तस्मात् भृत्यानां
भर्तुरंगनालिंगनस्यगुरुतल्पगत्वरूपमहापापत्वात् ॥ ३४५ ॥ यथाराजानदिशति तथाहरिरपिनदिशेदितियोजना ॥ ३४६ ॥

युक्ति- तत्तस्मा द्भृत्यानाराजसिंहासनारोहादेरनुचितत्वात् ॥ ३४७ ॥ सुरेश्वरौ शेषगरुडौ । शेषशायित्वस्यगरुडवाहनत्वस्यचकदाप्य मल्लिका
॥ ४३ ॥ पायाभावात्सर्वत्रसर्वदेत्युक्तं । मुक्तौ मुक्तिंगतौ । तौगरुडशेषौ ॥ ३४८ ॥ इदानींवैकुंठलोकस्यलक्ष्मीमयत्वंभागवतवाक्येनपंच
रात्रवाक्येनचसाधयति ॥ नयत्रेत्यादिना ॥ किमुतेतिवदन् अपरे मायाजन्यकामक्रोधादयोनेतिकिमुतेतिवदन्नित्यर्थः । यो फलसौ०

नराजवाहनंकांक्षेन्नतत्सिंहासनंभटः ॥ गरुडारूढताशेषशायितातत्कदापिन ॥ ३४७ ॥
सुरेश्वरौहरेस्सेवापरौसर्वत्रसर्वदा ॥ नरोल्पकःकथंमुक्तौतौमुक्तावारुरुक्षति ॥ ३४८ ॥
नयत्रमायाकिमुतापरइत्याखिलेशितुः ॥ पुरेकामक्रोधपूर्वकार्यस्याभावमंजसा ॥ ३४९ ॥
किमुतेतिवदन्योगीमायाऽभावाख्यहेतुना ॥ कारणाभावरूपेणसाधयामासयौक्तिकः
॥ ३५० ॥ ईषन्मायावशेषंचदाषसेमंनुतेमुनिः ॥ सिद्धेश्वरस्यकिंखोक्तहेत्वसिद्धिर्मनः
प्रिया ॥ चंडालांगुलिसंगेपिचंडालस्पर्शएवहि ॥ ३५१ ॥ ॥ ॥

गीशुकः । मायाभावाख्यहेतुना यत्रवैकुंठेमायानेतिपूर्ववाक्योक्तमायाभावाख्यहेतुना ॥ ३४९ ॥ ३५० ॥ सः मायाख्यकार
णाभावेनतत्कार्यकामक्रोधाद्यभावेकैमुत्यंवद न्मुनिश्शुकः । ईषन्मायास्पर्शेपिमायास्पर्शएवेत्यत्रदृष्टांतमाह ॥ चंडालेति ॥ हि ॥ ६२१ ॥
यस्मात्तस्मादीषन्मायास्पर्शोपिमायास्पर्शएव । अतोमायालेशासद्भावेपिमायाराहित्याख्यहेतोरसिद्धिस्स्यादितियोजना ॥३५१॥

असौ नेतिकिमुतेत्युक्तस्सर्वथाकार्याभावः ॥ ३५२ ॥ मायात्यंताभावस्थानी मायात्यंताभावाधारभूतोवैकुंठलोको नित्यमुक्ततां
चिद्रूपत्वंचनलेभेकिं लेभएव । ननुमायायास्सर्वथाऽभावात्अस्तुनित्यमुक्तता चिद्रूपत्वंतुकुतइत्यतआह ॥ जडमिति ॥ तेमते
॥ ३५३ ॥ तत्तस्मात् । सवैकुंठलोकः । यद्यस्मात् । लये प्रलये । सालक्ष्मीः । ब्रह्मलयेप्यलीनायालक्ष्म्याएवनित्यमुक्तचैतन्य
त्वसंभवान्नित्यमुक्तचैतन्यात्मकोलोकोलक्ष्म्यात्मकएवभवेदितिभावः । तत्पतिर्लक्ष्म्याःपतिः । पुरोवैकुंठपुर्याः । यद्यपिनित्यमु

कार्याभावस्यचांजस्यंसर्वथाऽभावएवयत् ॥ अतोसौकारणस्यापिसर्वथाऽभावमाक्षिपेत् ॥३५२॥
एवंचमायात्यंताभावस्थानंनित्यमुक्ततां ॥ चिद्रूपत्वंनकिंलेभेजडंमायामयंहिते ॥ ३५३ ॥ तल्ल
क्ष्म्यात्मकलोकोपिसोभूयन्नित्यमुक्तचित् ॥ लयेप्यलीनासैवैकातत्पतिर्यत्पुरःपतिः ॥ ३५४ ॥ एवं
चयुक्तितोवैकुंठादिलोकाश्चिदात्मकाः ॥ लक्ष्म्यात्मकास्सत्यरूपानित्याश्चासन्नसंशयः ॥ ३५५ ॥
वैकुंठंनामलोकंतद्दिव्यंषड्गुणसंयुतं ॥ अवैष्णवानामप्राप्यंगुणत्रयविवर्जितं ॥ ३५६ ॥ ॥

क्तचेतनत्वंहरेरप्यस्ति । तथापितस्यवैकुंठपतिरित्येवश्रवणान्नवैकुंठरूपत्वं । किंतुवैकुंठपतेस्तस्यपत्न्यालक्ष्म्याएवतद्रूपत्वमुचितमि
तिभावः ॥ ३५४ ॥ युक्तित स्स्मृतिमूलयुक्तितः । अत्रैतेप्रयोगाः । विमतोवैकुंठलोकश्चिदात्मकोभवितुमर्हति । मायामायाम
ययोरन्यतरत्वरहितत्वाद्ब्रह्मवत् । विमतोवैकुंठलोकस्सत्योनित्यश्चभवितुमर्हति चिद्रूपत्वाद्ब्रह्मचैतन्यवज्जीवचैतन्यवद्वा । विम
तोवैकुंठलोकोलक्ष्म्यात्मकोभवितुमर्हति भगवद्भिन्नत्वेसतिनित्यमुक्तचैतन्यात्मकत्वाद्व्यतिरेकेणजीववद्बद्धवद्वा ॥ ३५५ ॥३५६॥

युक्ति- ॥ ३५७ ॥ ३५८ ॥ ३५९ ॥ चतुर्वक्त्रस्तोत्रेषु चतुर्वक्त्रैः कृतस्तोत्रचतुष्टयेषु ॥ ३६० ॥ षड्गुणोवैकुंठलोकःशक्तिमानभूदितिसंबं मल्लिका
॥४४॥ धः ॥ ३६१ ॥ ३६२ ॥ एतद्विशेषणत्रयं षड्गुणसंयुतत्वाप्राकृतत्वसुरवंद्यत्वाख्यं ॥ ३६३ ॥ पठन्धूर्जटिरितिसंबंधः । यंलोकं फलसौ०

नित्यसिद्धैस्समाकीर्णंत्व(चि)न्मयैःपांचकालिकैः ॥ सभाप्रासादसंयुक्तंवनैश्चोपवनैश्शुभं ॥ ३५७ ॥
वापीकूपतटाकैश्चवृक्षषंडैश्चमंडितं ॥ अप्राकृतंसुरैर्वंद्यमयुतार्कसमप्रभं ॥ ३५८ ॥ प्रकृष्टसत्वराशि
त्वात्कदाद्रक्ष्यामिचक्षुषा ॥ इत्थंवैकुंठनगरीमस्तौषीच्चतुराननः ॥ ३५९ ॥ पंचरात्रेचतुर्वक्त्रस्तोत्रेष्वा
द्यमिदंकिल ॥ ३६० ॥ ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसश्श्रियः ॥ ज्ञानविज्ञानयोश्चैवषण्णांभगइती
रणा ॥ इत्युक्तेषड्गुणःपूर्णज्ञानविज्ञानशक्तिमान् ॥ ३६१ ॥ संयुतत्वोक्तितश्चाभूत्सम्यग्युक्तोहितै
र्गुणैः ॥ अप्राकृतासुरैर्वंद्योलोकोसौनह्यचेतनः ॥३६२॥ विशेषणत्रयंह्येतच्छ्रियश्श्रीशस्यचोचितं ॥
अतोपिश्रीपतेर्लोकश्श्रीरूपोयंभवेद्ध्रुवं ॥ ३६३ ॥ पठन्सहस्रनामानिशंभुब्रह्मोर्ध्वधामगः ॥ इति
यंधूर्जटिस्स्तौतिकिंतद्धामविचार्यतां ॥ ३६४ ॥ शंभुब्रह्मोर्ध्वताधाम्नस्ताभ्यामुत्तमतैवहि ॥ अहंका
रात्मकाच्छंभोर्ब्रह्मणोमहदात्मकात् ॥ नहिवैकुंठपूरूर्ध्वंतद्गुणैरेवसोपरि ॥ ३६५ ॥ ॥

॥६२२॥

स्तौति शंभुब्रह्मणोरूर्ध्वत्वेनस्तौति ॥ ३६४ ॥ ताभ्यां शंभुब्रह्मभ्यां । ननुशंभुब्रह्मभ्यामूर्ध्वभागेस्थितत्वादेवोर्ध्वत्वमस्तु । उत्त

मत्वंकुतइत्यतआह ॥ अहंकारात्मकादिति ॥ तत्तस्मात् । सा वैकुंठपुरी ॥ ३६५ ॥ ब्रह्मादयोबहुतिथमित्यनेन ब्रह्मादयो बहुतिथंयदपांगमोक्षकामायथोक्तविधिनाभगवन्प्रपन्नाः । साश्रीस्स्ववासमरविंदवनंविहाययत्पादसौभगमलंभजतेनुरक्तेतिभाग वतवाक्यंसंगृह्णाति । भगवन्निातिधर्मप्रतिधरायास्संबुद्धिः । अस्मिन्हिश्लोकेब्रह्मादिभ्योलक्ष्म्याउत्तमत्वंप्रतिपाद्यते । तस्याश्चना रायणस्य । अतश्शंभुब्रह्मोर्ध्वत्वेनोच्यमानंवैकुंठाख्यंधामलक्ष्म्यात्मकमेवेतिभावः ॥३६६॥ अस्तुवैकुंठस्यमायातिदूरत्वं लक्ष्म्या

ब्रह्मादयोबहुतिथमितिभागवतोक्तितः ॥ ब्रह्मादिभ्योगुणैरुच्चायच्छ्रीरेवहरेःप्रिया ॥ एवंच
लक्ष्मीरूपत्वंलोकस्यनक्थंवद ॥ ३६६ ॥ हरेरनुव्रताएवमुक्तास्तत्रापितेकिल ॥ सर्वेचतुर्बाहव
श्श्यामकोमलमूर्तयः ॥ ३६७ ॥ मणिप्रवेकाभरणानिष्ककंठास्सुवर्चसः ॥३६८॥ श्रीवत्सकौ
स्तुभाभावात्पूर्णशक्त्याद्यभावतः ॥ विलक्षणाःपरंसर्वेप्याकारेसदृशाःकिल ॥ ३६९ ॥ जग
द्व्यापारवर्जंचविनाश्रीवत्सकौस्तुभौ ॥ इतिसूत्रेभागवतेचोक्त्याविष्णोर्विलक्षणाः ॥ ३७० ॥

त्मकत्वंच । तथापिप्रकृतेकिमायातमित्यतआह ॥ हरेरिति ॥ अनेन नवर्ततेयत्ररजस्तमस्तयोस्सत्वंचमिश्रंनचकालविक्रमः । नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः । श्यामावदाताश्शतपत्रलोचनाःपिशंगवस्त्रास्सुरुचस्सुपेशसः । सर्वेचतुर्बाह वउन्मिषन्मणिप्रवेकनिष्काभरणास्सुवर्चसः । प्रवालवैडूर्यमृणालवर्चसांपरिस्फुरत्कुंडलमौलिमालिनां । भ्राजिष्णुभिर्यःपरितोवि राजतेलसद्विमानावलिभिर्महात्मनां । विद्योतमानप्रमदोत्तमाभिस्सुविद्युदभ्रावलिभिर्यथानभः । श्रीर्यत्ररूपिण्युरुगायपादयोःक

रोतिमानंबहुधाविभूतिभिः । इतिभागवतश्लोकानर्थतस्संगृह्णाति ॥ ३६७ ॥ ३६८ ॥ ३६९ ॥ ३७० ॥ एवंचभागवतोक्तंसंसा
रदशायां । श्रीवत्सकौस्तुभौविनाविद्यमानैष्षोडशकलाभिर्विमानिभिर्मुक्तदेवैरुपासीनमित्युक्त्या मुक्तस्वरूपनिरूपकसूत्रेमुक्तानां
जगत्सृष्ट्यादिव्यापारशून्यत्वोक्त्याचानुभूयमानत्वात् ज्ञानैकसाध्यंशुकवामदेवादीनांजीवन्मुक्तिदशायांचनसाधारणान्यस्वयोग्य
बहुतरभगवद्धर्माकारसादृश्याख्यसारूप्यमेवगीतोक्तंसाधर्म्यमपि । नतुसर्वधर्मसाधर्म्यमितिभावेनाह ॥ इदंज्ञानमिति ॥ एते

इदंज्ञानमपाश्रित्यममसाधर्म्येमागताः ॥ सर्गेपिनोपजायंतेप्रलयेनव्यथंतिच ॥ इतिगीतासु
येप्रोक्तास्तएतेयोगिनःकिल ॥ ३७१ ॥ एवंचजननाभावान्मरणाभावतस्तथा ॥ जडदेहाद्य
भावाच्चदुःखाभावाच्चसर्वदा ॥ ३७२ ॥ ज्ञानानंदमयाकारानित्यंचसुखभुक्त्वतः॥ मुक्तिर्विल
क्षणाबंधाज्जीवास्सर्वेद्वयोस्समाः ॥ त्रिविधास्संतिसंसारेशुद्धाएवविमुक्तिगाः ॥ ३७३ ॥ अ
श्वोमान्योगजोमान्योधेनुर्मान्यादिवौकसां ॥ वृक्षःकल्पतरुर्मान्यस्सर्पोमान्योहरेःप्रियः ॥ ३७४ ॥

भागवतोक्ताः । अतएवगीतायामपिसर्वसादृश्यंनेतिसूचनायस्वयोग्यभगवद्धर्मसदृशधर्मांतरोपलक्षणतयासर्गप्रलयाभावयोरेवनि
रूपणं ॥ ३७१ ॥ एतदेवदर्शयति ॥ एवंचेति ॥ इदंचचतुर्बाहुत्वाद्याकाराभरणादिसादृश्यस्याप्युपलक्षणं । द्वयोर्बंधमोक्षयोः ।
इयांस्तुविशेषइत्याह ॥त्रिविधाइति॥ त्रिविधाः मुक्तियोग्यास्तमोयोग्यानित्यसंसारिणश्चेति । शुद्धाःशुभजीवाः॥३७२॥३७३॥
पशुपक्ष्यादियोनीनांहीनयोनित्वंस्वर्गस्थजगत्पूज्यपशुपक्ष्यादिनिदर्शनेनपरिहरन्वैकुंठपुरेपिपुरोचितप्राकृतज्ञानानंदात्मकनानाजी



वसद्भावमनुभवारूढंकरोति ॥ अश्वइत्यादिना ॥ अश्वउच्चैश्श्रवाः । गजऐरावतः । धेनुःकामधेनुः । सर्पश्शेषः ॥ ३७४ ॥
लोकःअमरावत्याख्योलोकः। अर्थ्यते यज्ञादिभिःप्रार्थ्यते ॥ ३७५ ॥ श्रुतः यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसावि
त्यादिश्रुतिप्रतिपादितः । स्वर्गलोकस्थितेपश्वादौ ॥ ३७६ ॥ यदाश्यामशबलाख्यौश्वानावपिवैश्वदैविकेकर्मण्यद्यापिगृहस्थैर्देव

पक्षीविष्णुरथोमान्योलोकोमान्योह्यर्योर्थ्यते ॥ स्त्रियश्चाप्सरसोमान्याःश्वानावपिचनाकिनां
॥ ३७५ ॥ मान्यौकिलश्यामनामाशबलाख्यश्चयश्श्रुतः ॥ भूलोकेस्थितपश्वादेस्स्वर्गलोकेस्थिते
यदा ॥ ३७६ ॥ पूज्यताप्राकृतेप्यर्थेतदाविष्णोस्त्रिधामसु ॥ स्थितानांशुद्धसत्वानांज्ञानानंदस्व
रूपिणां ॥ श्रुतिस्मृतीतिहासाद्यैस्स्तुतानांकिंनपूज्यता ॥३७७॥ उत्तरोत्तरवस्तूनामुत्तमोत्तम
तोचिता ॥ मुकुंदनगरीस्थानांमुक्तैवगुणोचिता ॥ ३७८॥ दिव्यादिव्यतटाकेषुदिव्यादिव्यव
नेषुच ॥दिव्यादिव्यनगर्यांचदिव्यज्ञानसुखात्मकाः॥३७९॥ मत्स्याद्यामृगपक्ष्याद्याहस्त्यश्वरथपू
र्वकाः ॥अर्थास्तत्तदलंकारामत्स्यकूर्मादिरूपिणः॥ विष्णोराकृतिवत्स्वस्थास्संतिचेत्संतुकिंतव ॥३८०॥

तापङ्क्ताववपूज्येते तदाकिमुवक्तव्यंस्वर्गस्थयोन्यंतरपूज्यतेतिभावेनोक्तंपूज्यताप्राकृतेप्यर्थइति । प्राकृते हीनप्रकृत्यंशनिर्मिते ।
अर्थे श्वानाख्यार्थे ॥ ३७७ ॥ ३७८ ॥ तत्तदलंकारा स्तत्तद्वनसरोवराद्यलंकाराः । मत्स्यकूर्मादिरूपिणोमत्स्यकूर्माद्यवतारवतः

॥ ३७९ ॥ ३८० ॥ पूः पुरी । वनोपवनसरोवरगृहगोपुराद्याक्रांतवैकुंठनगरीतिश्रुतिपुराणादौप्रसिद्धं । एतादृशीचनगरीतत्तदुचितसकलवस्तुभिःपरिपूर्णैवभवेत् । अन्यथाशून्यनगरीत्वप्रसंगात् । तानिचवस्तूनि । मत्स्यकूर्मवराहशिंशुमारादिरूपिणोहरेस्सकलजगत्पूज्यचिदानंदमयदिव्याकारवज्ज्ञानानंदमयदिव्यरूपाणिचतिकाहानिरितिभावः ॥ ३८१ ॥ उक्तार्थेऽनुमानानिरचयति ॥ पूर्णेत्यादिना ॥ संप्रतिपन्ना अमरावती । शून्यपुरव्यवच्छेदायसुपुरत्वादित्युक्तं । दिव्यपुर्यापरमशोभनवस्तुलाभायपु

श्रुत्यास्मृत्याचयावर्ण्यासाशून्यापूर्नवैष्णवी ॥ ३८१ ॥ पूर्णापुरोचितैस्सत्वैस्सुपुरत्वाद्धरेःपुरी ॥
यथासंप्रतिपन्नेतिकिंनस्यादनुमाभम ॥ ३८२ ॥ ससत्वराशिर्मुक्तत्वव्याकोपस्यनकारकः ॥ प्रकृ
ष्टत्वाद्यथाविष्णोर्मत्स्याद्याव्यक्तिराशयः ॥ ३८३ ॥ प्रकृष्टश्चससंसारदूरत्वात्तद्वदेवहि ॥
दुःखमेवहिसंसारेततःक्वानुपपन्नता ॥ तच्चमायात्ययस्थानस्थत्वात्तद्वत्प्रसिद्ध्यति ॥ ३८४ ॥
भिन्नामिथःपरेशाच्चमुक्ताविसदृशत्वतः ॥ सत्वराशिर्यथात्रत्योयथावाराजतद्भटौ ॥ ३८५ ॥

रोचितैरित्युक्तं ॥ ३८२ ॥ सः वैकुंठपुर्याविद्यमानः । सत्वराशिः प्राणिसमूहः ॥ ३८३ ॥ सःसत्वसमूहः । तद्वत् भगवदवतारराशिवत् । ततो दुःखरूपसंसाराभावात् । त द्दुःखाख्यसंसारदूरत्वं । मायात्ययस्थानस्थत्वा न्मायात्यंताभावस्थानेवैकुंठेस्थितत्वात् । विरजानद्यांजीवबंधकलिंगशरीरादिसंसारध्वंसनियमेनमायाध्वंसोचितस्थानस्थितत्वाद्वा । तद्वद्वैकुंठस्थभगवद्रूपवत् ॥ ३८४ ॥ विसदृशत्वहेतुनावैकुंठस्थपशुपक्ष्यादिजीवानांपरस्परभेदसाधनेऽत्रत्यस्सत्वराशिर्दृष्टांतः । तेनैवहेतुनातत्रापिजीवपर

योर्भेदसाधनेराजंतद्वदौदृष्टांताविितिविवेकः । वैकुंठस्थानामेकजातीयानांमृगमीनमनुष्यादीनामन्योन्यसमानाकाराणांबाह्यवैसा
दृश्याभावेपिस्वस्वरूपानंदस्यस्वेनस्वेनैवानुभूयमानत्वलक्षणांतरवैसादृश्यात्तेषामपिपरस्परंभेदोनुमातव्यः ॥ ३८५ ॥ तद्वैकुंठ
स्थसत्वराशीनांप्रकृष्टत्वस्योक्तपंचरात्रवाक्येनैवसिद्धत्वात् । विमतस्सत्वराशिः प्राकृतोभवितुमर्हति सत्वराशित्वात्सांसारिकस
त्वराशिवदित्यादिकुतर्केभ्यो ब्रह्मातिरिक्तंकिमपिनास्तीत्यादिकुत्सितवादिवाक्येभ्यश्च । पंचरात्रस्यकृत्स्नस्यवक्तानारायणस्स्वयं ।
ज्ञानेष्वेतेषुराजेंद्रसर्वेष्वेतद्विशिष्यतइतिभारतोक्त्यापंचरात्रस्यसर्वप्रमाणज्येष्ठत्वेनतदुक्तार्थस्यत्यागायोगादितिभावः ॥ ३८६ ॥

प्रकृष्टसत्वराशित्वादित्याहस्मृतिरेवयत् ॥ प्रकृष्टस्सत्वराशिश्चयस्यासौहितथाभिधः ॥३८६॥
तत्कुतर्ककुवाक्येभ्योनबिभ्यत्यनुमाइमाः ॥ अतोनुमानमालेयंतामलंकुरुतेपुरीं ॥३८७॥ श्रीरे
वलोकरूपेणविष्णोस्तिष्ठतिसर्वदा ॥ अतोहिवैष्णवालोकानित्यास्तेचेतनाअपि ॥ ३८८ ॥
पशुपक्ष्यादिरूपेणजीवाएवपृथक्स्थिताः ॥ संसृतौव्यत्ययस्तेषांमुक्तौतत्तत्स्वरूपता ॥ ३८९ ॥

॥ ३८७ ॥ उक्तेर्थेस्पष्टंप्रमाणांतरवचनद्वयमप्याह ॥ श्रीरेवेति ॥ अतश्श्रीरूपत्वात् । वैष्णवालोका विष्णुसंबंधित्वेनप्रसिद्धा
वैकुंठानंतासनश्वेतद्वीपाख्यलोकाः । त्रिधामेतिहिभगवतःपुण्यनाम ॥ ३८८ ॥ व्यत्ययोबाह्यपश्वादिरूपेणव्यत्ययः । तेषांपशु
पक्ष्यादिरूपाणांजीवानांचिदात्मकस्वाभाविकतादृशरूपाभावेघटपटस्तंभकुड्यादिषुजडेषुनियमेनादृष्टंपशुपक्षिवृक्षलतामानुषादि
रूपंस्थिरचरात्मकजीवेष्वेवकुतोनियमेनदृश्यतेऽतोजीवास्स्वभावतोपितादृशाइतियुक्तिमपिसूचयितुंसंसृतौव्यत्ययइत्युक्तं । तत्त

युभ० १०५

त्स्वरूपता तेनतेनाकारेणस्वरूपंयेषांतेतत्तत्स्वरूपास्तेषांभावस्तत्तत्स्वरूपता ॥ ३८९ ॥ इत्यादिमानैरित्यादिप्रमाणवचनैःप्रोक्तो र्थः । तत्तस्मा द्वचनमूलत्वाद्वचनानुग्राहकयुक्तिबुभुत्सयाचर्चा नतुशुष्कचर्चेतिभावः ॥ ३९० ॥ तच्चातुरींश्रुतिचातुरीं ॥३९१॥ श्रुत्यर्थंवक्तुंप्रकारांतरेणतदनुग्राहकयुक्तिस्मृत्यादिकंदर्शयति ॥ सुरधेन्वित्यादिना ॥ यथापूर्वोक्तन्यायेनस्वर्गेसंति सर्वजनपूज्या श्चभवंति । तथामौक्ताः मुक्तौविद्यमानाश्चसंतिचेत्ततःकिंगतं नकिमपीत्यर्थः ॥ ३९२ ॥ प्राक्सामान्येत्युक्तंविशिष्यानुवदन्नाह

इत्यादिमानैस्तत्प्रोक्तेचर्चायुक्तिबुभुत्सया ॥ अतोयुक्तियुतंश्रौतंसर्वैमान्यमितिस्थितं ॥ ३९० ॥
स्पष्टाश्रुतिश्चार्थमेनंवक्तितच्चातुरीशृणु ॥ ३९१ ॥ सुरधेनुद्रुमाहींद्रवींद्रनद्यादिरूपिणः ॥ मुक्ता
श्चपशुपक्ष्याद्यास्संतिचेत्किंततोगतं ॥ ३९२ ॥ निर्दुःखानंदचिद्रूपामुक्तास्तेचित्रयोनयः ॥ मत्स्य
कूर्मवराहाद्याइवीनर्दोषमूर्तयः ॥ ३९३ ॥ ब्रह्मलोकाप्तचंडालाद्यशेषप्राणिसार्थपः ॥ इतिनामा
र्थतत्वज्ञामुक्तौचेत्थंप्रचक्षते ॥ स्वर्नीतगर्दभश्वादिरितिनामांतरंकिल ॥ ३९४ ॥ ॥

॥ निर्दुःखेति ॥ ३९३ ॥ ब्रह्मलोकंपरब्रह्मलोकं विष्णुलोकमित्यर्थः । आप्तास्स्वसहायेनप्राप्तायेचंडालाद्यशेषप्राणिनः । आदि शब्देनपश्वादिकंगृह्यते । तेषांसार्थसमूहंपातीतिब्रह्मलोकाप्तचंडालाद्यशेषप्राणिसार्थपश्श्रीरामचंद्रः । आप्तेत्यतीतार्थकप्रत्ययांत प्रयोगबलादाप्त्यनंतरमपिचंडालादिजातिविभागोस्तीतिज्ञायते । इत्यनेनप्रकारेणयोवासुदेवसहस्रनामस्थनाम्नोर्थस्तंजानंतीतित थोक्ताः । इत्थं निर्दुःखानंदस्वरूपपशुपक्षिचंडालादिनानाजात्याक्रांतत्वप्रकारेण आदिपदस्यार्थंस्पष्टतयाज्ञापयितुंरामस्यैवनामां ॥ ६२५ ॥

तरंवासुदेवसहस्रनामस्थंपठति ॥ स्वर्नीतेति ॥ स्वश्शब्दब्रह्मलोकशब्दयोरेकस्मिन्नेवप्रयोगाद्विष्णोरेवायंलोकः । श्वेतद्वीपंप्रति गच्छतारामेणसहैवपशुपक्ष्यादीनामपिगमनप्रसिद्धिश्च ॥ ३९४ ॥ ननुज्ञानानंदस्वरूपत्वेपिदृश्यमानाकारविकारसद्भावात्कथंनदोष इत्यतस्तत्रदृष्टांतमाह ॥ विषवृक्षेति ॥ कृत्रिमा कृतप्रतिमा ॥ ३९५ ॥ ३९६ ॥ तत्तस्माद्दुःखरूपत्वाद्दुःखदायकत्वाच्चदुःखहेतुर्दुः खहेतुभूतप्राकृतदेहादिकंच । मुक्ते मोचनंप्राप्तेमुक्तसमुदाये । यद्यस्मात् ॥ ३९७ ॥ तच्चित्रतायां पशुपक्ष्यादिरूपेणदेहचित्रता

विषवृक्षफलाकाराशर्कराकृतकृत्रिमा ॥ धत्तेकिंतिक्ततादोषंमुक्तास्तेतद्वदेवहि ॥ ३९५ ॥ मुक्तेरमु
क्तितातुस्याद्दुःखेसत्येवनान्यथा ॥ देहादिर्दुःखहेतुत्वाद्दुःखमित्युपचर्यते ॥ ३९६ ॥ तद्दुःखंदुःखहेतु
श्चदुःखान्मुक्तेनशोभते ॥ यद्दुःखात्यंतविच्छेदंमोक्षमाहुर्विचक्षणाः ॥ ३९७ ॥ निर्दुःखानंददेहस्तु
यदिस्यात्परमात्मवत् ॥ तच्चित्रतायामपिचकिंवित्तंतवनश्यति ॥ ३९८ ॥ पुरुरूपस्यतस्येमेप्रतिरूपाः
किलाखिलाः ॥ श्रुतिसिद्धंततोजीवनानारूपंनसंशयः ॥ ३९९ ॥ ॥ ॥

यां । हीनापियोनिर्नयोनित्वेनदूषणं । विष्णोर्मत्स्यादिषुयोनिषुतददर्शनात् । किंतुदुःखदत्वेनैव । मौक्तिकहीनयोनिष्वपिनास्त्ये वतदितिभावः ॥ ३९८ ॥ अधुनाजीवस्वरूपेवैचित्र्यसाधिकायारूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय। इंद्रोमायाभिःपुरु रूपईयतेयुक्ताह्यस्यहरयश्शतादशेतिश्रुतेरर्थमाह ॥ पुरुरूपस्येति ॥ अयंसमुदायार्थः । इंद्रः परमैश्वर्यसंपन्नःपरमात्मा । प्रकृ तिबंधस्यकैरप्यनंगीकारान्निर्गुणःपुरुरूपत्वाभावाच्चविष्णुरेवेंद्रः । मायाभिस्स्वेच्छाभिस्स्वलक्ष्मीरूपैस्सहवापुरुरूपः पुरूण्यनंता

निनानाविधानिचरूपाणियस्यपरमात्मनस्सतथोक्तः । ईयते प्रतिपाद्यते श्रुतिपुराणादौ । अस्यपरमात्मनः । हरयोदुरितहरणशी
लत्वाद्धरिनामानः शता नारायणादिशतमूर्तयः । दश मत्स्यकूर्मादिदशमूर्तयश्च । युक्ताह्याकारवैचित्र्येणायुधवैचित्र्येणचयुक्ता
हि । अतःपुरुरूपतयोक्तइंद्रःपरमात्मैव । तस्यैवदशरूपत्वशतरूपत्वसिद्धेः । सर्वाण्यपिरूपाणिस्वपरमैश्वर्यसामर्थ्यादेवाविर्भूता
नि नतुकर्मजानिस्वयंचपरमैश्वर्यसंपन्नानीतिसूचनायेंद्रइत्युक्तं । अतएवमायाचेच्छाश्रीर्वात्रविवक्षिता । नतुपराभिमताऽविद्या ।
परमैश्वर्यशक्तिविरोधात् । परमतेऽविद्यायाएकत्वेनबहुवचनविरोधात् । हरिशब्दोक्तानिष्टहरणसामर्थ्यविरोधाच्च । स्वच्छंदो
पात्तदेहाय तस्येच्छयात्तवपुषःकुतएवबंधइत्यादिप्रमाणवचनैर्भगवदवताराणांतत्तत्कालाविर्भूतस्वभक्तब्रह्मसुरभूप्रह्लादाद्यनिष्टप
रिजिहीर्षयास्वभक्ताभीप्सितपुरुषार्थादित्सा देवरिरक्षा दैत्यजिघांसादिरूपेच्छामूलंरूपस्य तांरुग्मिणींश्रियमनन्यगतिंनिरीक्ष्यया
लीलयाधृततनोरनुरूपरूपेतिवचनानुसारेणस्वावतारैस्सहावतीर्णबहुतरश्रीरूपसहितत्वस्यन्याय्यत्वात् । लीलयेत्युक्त्याकुतएवबं
धइतिबंधप्रतिषेधेनचबंधकाविद्यामूलत्वस्यबाधितत्वाच्च । दुर्गेतिभद्रकालीतिविजयीवैष्णवीतिच । मायानारायणीवैष्णवीत्युक्त
श्रीरूपदुर्गानामधेयपद्येपठितत्वात् । महामायेत्यविद्येतिनियतिर्मोहिनीतिच । प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यतइतीच्छानाम
धेयपद्यौपठितत्वाच्च । मां संपद्रूपलक्ष्मीं मां रमांवायापयतीतिव्युत्पत्त्योभयत्रापिमायाशब्दस्ययोगसंभवाच्च । मयनिर्मितत्वेनमय
संबंधितयामायाशब्दवाच्यैंद्रजालिककुविद्यायामायायुद्धविशारदेषुदैत्येषुसंभवेन तस्मादप्यादौविद्यमानेपुरुषे विज्ञानास्त्रेणतांमा ॥ ६२६ ॥
यामपास्यनिमिषांतरइतिवचनान्मायानिर्हरणसमर्थविज्ञानशक्तियुक्तेभगवत्ययोगाच्च । पुरुषस्यतस्यपरमात्मनःरूपंरूपंप्रति अस्ये

त्यत्रोक्तोजीवःप्रतिरूपः प्रति रूपंयस्येतिव्युत्पत्त्यातद्रूपसमानरूपतयाप्रतिरूपपदवाच्यःप्रतिबिंबोबभूव । तद्बिंबभूतंभगवद्रूपं अस्यजीवस्य प्रतिचक्षणायापरोक्षज्ञानाय । मोक्षसाधनीभूतापरोक्षज्ञानंबिंबभूततद्रूपविषयकमेवभवेदित्यर्थः । पुरुरूपस्यहरेरूपाणिशतदशेतिप्रस्ताव्य रूपंरूपमितिवीप्सयामत्स्यादिभगवद्रूपाणामपिप्रतिरूपजीवसिद्ध्याजीवानामपिमत्स्यकूर्मवराहनरसिंहशिंशुमाराद्याकारवत्त्वसिद्धिरितिभावः । पुरुरूपस्यपूर्णानेकरूपस्यतस्यपरमात्मनः इमेजीवाःप्रतिरूपास्समानरूपाः ॥ ३९९ ॥ तद्रूपं

शतादशेतितद्रूपंयच्छ्रुत्यैवविवेचितं ॥ अतस्स्वरूपमात्रंनरूपंमत्स्यादयोहिते ॥ ४०० ॥
कथंस्वरूपमात्रस्यशततादशतातव ॥ तत्पुरुत्वंनपूर्णत्वंबहुतैवभवेद्ध्रुवं ॥ ४०१ ॥ रूपंरू
पंचेतिवीप्साजुगुप्साचनचेद्भवेत् ॥ मत्स्यकूर्मादिरूपाणांप्रतिरूपाश्चतादृशाः ॥ कथंन
वाच्याधीमद्भिःप्रतिशब्दार्थवेदिभिः ॥४०२॥ तत्तद्रूपापरोक्ष्येणमोक्षस्तेषांभवेत्किल ॥
प्रतिप्रत्यापरोक्ष्यंहिप्रतिचक्षणमुच्यते ॥ ४०३ ॥ तदस्येतिश्रुतौप्रोक्तंजीवस्यपरमस्यच ॥
द्रष्टृदृश्यात्मकंरूपद्वयंतत्पारमार्थिकं ॥ यन्मोक्षदप्रमारूपसाक्षात्कारस्यगोचरः ॥४०४॥

बिंबभूतरूपं । यद्यस्मात्तेरूपपदोदिताः ॥ ४०० ॥ तवमतेब्रह्मणएकत्वांगीकारादितिभावः । तत्तस्मात् ॥ ४०१ ॥ तादृशाः मत्स्यकूर्मादीनामाकारसदृशाकारवंतः ॥ ४०२ ॥ अन्यथाप्रतिपदवैयर्थ्यस्यात् ॥ ४०३ ॥ तत्तस्मात् । एतदेवविवृणोति ॥ यदिति ॥ यद्यस्मात् ॥ ४०४ ॥ प्रतिचक्षणपदेनप्रतिचक्षणमित्युक्तेपिमोक्षस्यकथंलाभइत्यतोयोग्यतयेत्याह ॥ ॥ ॥

॥ मोक्षमिति ॥ तच्छ्रुत्युक्तं । यथार्थज्ञानविषयत्वेनापिद्रष्टृदृश्यरूपयोस्सत्यत्वंप्रतिचक्षणपदार्थपर्यालोचनयैवायास्यतीत्याह ॥
अर्थमिति॥४०५॥प्रकारांतरेणापिसम्यग्ज्ञानमानयति ॥ उद्देश्येति ॥४०६॥ अत इंद्रपदवाच्यस्याप्यस्यैश्वर्यादिगुणभरितत्वात्
मायायाःपरमतेनिर्गुणचिन्मात्राश्रितत्वाच्च । अस्येंद्रपदवाच्यनारायणस्य । माहात्म्यपदमिच्छालक्ष्म्योरप्युपलक्षणं । मयटःप्राधा

मोक्षंप्रत्यपरोक्षंचयतस्तत्प्रतिचक्षणं ॥ अर्थंप्रत्येवदृष्टिश्चयतोभूत्प्रतिचक्षणं ॥ अतोयथार्थे
ज्ञानार्थाप्रतिचक्षणवागियं॥४०५॥उद्देश्यताकथंनोचेदनुद्देश्यभ्रमेसतां॥तादर्थ्येहिचतुर्थी
यमनर्थेसाकथंवद ॥ ४०६ ॥ ऐश्वर्यवान्किलेंद्रोसौसद्गुणोनतुनिर्गुणः ॥ अतोमायापदं
चास्यमाहात्म्यान्येवशंसति ॥ ४०७ ॥ बहुत्वार्थविभक्त्यर्थोमायैकातेकथंवद ॥ कथंमा
याख्यदोषस्स्यात्परमेश्वरताश्रये ॥ नहिमायामयंरूपंप्रमागोचरतांव्रजेत् ॥ ४०८ ॥ ॥
शतादशेतिकथनादिंद्रोनायंपुरंदरः ॥ परमेश्वरतामुख्यानयन्नश्वरसंपदि ॥ ४०९ ॥ युक्ताही
तिसुयुक्तीनांविद्वत्सिद्धेश्चकीर्तनात् ॥ संशयोस्मिन्समस्तेऽर्थेकार्योनार्यैःकदाचन ॥ ४१० ॥

न्येऽनुशासनान्महिमापिमायेतिभावः ॥ ४०७ ॥ पराभिलषितमायायाअग्रहणेनिमित्तांतरंचाह ॥ बहुत्वेति ॥ इतोपिनमाया
ऽविद्येत्याह ॥ कथमिति ॥ प्रतिचक्षणपदोक्तप्रमागोचरत्वाद्ययोगाच्चनमायामयंतद्रूपमित्याह ॥ नहीति ॥ ४०८ ॥ इंद्रपद ॥ ६२७॥
स्यप्रसिद्धेंद्रपरत्वायोगेयुक्तिद्वयमाह ॥ शताइति ॥ ४०९ ॥ हिशब्देनविद्वत्प्रसिद्धेरितिद्रष्टव्यं ॥ ४१० ॥ मायातिदूरवैकुंठ

पतौश्रूयमाणमाया माहात्म्यादिकमेव नाविद्येत्याह ॥अमुक्तेति॥ अनुनिनीषयाअनुनेतुं विनयोक्त्यारंजयितुमिच्छया ॥४११॥
भगवतआकरणमपिमायातिदूरत्वंसमर्थयितुंवैकुंठपुरस्थ भगवद्रूपंवर्णयति ॥ विनतातनयांसस्थइत्यादिना ॥ ४१२ ॥

अमुक्तागम्यभूर्याहिसासाक्षान्मुक्तिरेवहि ॥ तत्रापिभगवद्भाग्यमुक्तंभागवतेबहु ॥ यदागात्सनका
दीन्स्वान्मुनीननुनिनीषया ॥४११॥ विनतातनयांसस्थश्श्रियादेव्यासमन्वितः ॥४१२॥ चार्वंघ्रिजंघा
जानूरुकटिकुक्षिवलित्रयः॥ निम्ननाभिस्फुरन्मध्यविशालोरस्स्थलोज्ज्वलः ॥४१३॥ कंबुग्रीवोवृत्तपी
नदीर्घबाहुचतुष्टयः ॥ अमंदसांद्रसौंदर्यमंदिरास्येंदुमंडलः ॥ ४१४ ॥ चार्वक्षिफालनासास्यकर्णगंडा
रुणाधरः ॥ मंदस्मितप्रभामिश्रसुंदरोष्ठारुणद्युतिः ॥ ४१५ ॥ किरीटहारग्रैवेयरत्नकुंडलकौस्तुभः ॥
कांचीकिंकिणिमंजीरनूपुराद्यैर्विराजितः ॥ ४१६ ॥ करस्थकमलंधुन्वन्करुणालोललोचनः ॥ छत्रचा
मरवादित्रगीतनृत्ताक्षतांकुरैः ॥ ४१७ ॥ व्यजनैर्धूपदीपैश्चपुष्पैर्नीराजनैस्स्तवैः॥ अर्च्यमानःप्रतिपदं
मुक्तसंसारबंधनैः ॥ ४१८ ॥ सुरैरसंख्यैःपरितोमुक्तक्लेशैःकृतोत्सवः ॥ तत्रायात्किलसर्वेशोयत्रते
सनकादयः ॥४१९॥ जीवन्मुक्तैश्चमुनिभिरगम्यासाहरेःपुरी ॥ आसीत्परममुक्तानामास्थान्येवविवे
किनां ॥ ४२० ॥ नचेदंतःपुरंसर्वान्प्रवेश्यानंदयेद्धितान् ॥ कृपालुर्भक्तिभरितांस्ततोनामुक्तभूरसौ ॥४२१॥

॥४१३॥४१४॥४१५॥४१६॥४१७ ॥ ४१८ ॥ ४१९ ॥ मुनिभिस्सनकादिभिः ॥४२०॥ तान्सनकादीन् । असौवैकुंठपुरी

॥ ४२१ ॥ ४२२ ॥ ४२३ ॥ वैकुंठांतःपुरस्थमुक्तभोग्यान्नपायसादीनांनित्यत्वमुपपादयति ॥ पक्वइति ॥ भिक्षो र्भिक्षार्थमाग
तस्यभोजनार्थेरक्षश्शक्त्यापक्वीभूतस्यपाचकस्यराक्षसस्यशक्त्या तत्क्षणेवातापेआगच्छेतील्वलोक्तिक्षणे । किलेत्यनेनइल्वला
ख्योज्येष्ठोसुरस्स्वतपस्सामर्थ्येनस्वकर्मनिष्ठस्यवातापेःकरचरणाद्यंगंसर्वंछित्वानानाशाकादिरूपपाकंचकृत्वास्वगृहंप्रत्यागतानति
थीन्भोजयति । तदनंतरमरेवातापेआगच्छेत्याह्वानेकृतेसतितदुदरंनिर्भिद्यतत्तद्भुक्तमांसैरेवपूर्ववत्संपन्नाकारस्सन्यथापूर्वंस्वज्येष्ठ

तत्राप्युक्तप्रमाणेनप्रभुस्साकारएवसः ॥ श्रीश्चदिव्यमनोज्ञांगीभृत्यास्तेदिव्यमूर्तयः ॥
अनंतास्तेचसेवंतेसेव्यस्तैस्सर्वदाप्रभुः ॥ ४२२ ॥ हर्म्याणिरत्नभवनान्युद्यानोपवनानि
च ॥ वापीकूपतटाकानिसंतितत्रगृहेगृहे ॥ ४२३ ॥ पक्वोवातापिदेहोपिभिक्षोश्शाका
दिरूपतः ॥ रक्षःशक्त्यायथापूर्वंलक्ष्यतेतत्क्षणेकिल ॥ ४२४ ॥ अतोमौक्तंसमस्तं
चवस्तुभुक्तंचतैःपुनः ॥ तथैवतिष्ठेत्तन्नित्यंस्याच्चाजंलिंगदेहवत् ॥ ४२५ ॥ सर्वस्सर्वे
शशक्त्यैवश्रुत्युक्तार्थस्समर्थ्यते ॥ अन्यैरघटितंयोसौघटयेदणुगोमहान् ॥ ४२६ ॥

समीपेतिष्ठति । पुनस्तेषांसर्वभूतशरीरस्थमांसंस्वयंभक्षयति । अनेनप्रकारेणदिनेदिनेबहुब्राह्मणवधेकृतेसतिकुपितोऽगस्त्यमुनि
रागत्यपूर्वातिथिवदेवभुक्त्वापुनराह्वानेजीर्णोवातापिरितिस्वोदरेसंस्तभ्यतंतत्रैवमारितवानितिपौराणिकप्रसिद्धिंसूचयति ॥४२४॥
अतश्छिन्नभुक्तदेहस्ययथापूर्वमवस्थानदर्शनात्। अजं जननरहितं ॥ ४२५ ॥ यःपरमात्मा अणुगः परमाणौस्थितः । महांस्त

त्रापिब्रह्मांडाधारविग्रहवान् । अल्पकासुरशक्त्यानष्टस्यपुनरुत्थानेऽघटितघटकभगवच्छक्त्यामौक्तपदार्थानामनाद्यनंतत्वंभोज्य त्वादिकंचसुतरांघटयितुंशक्यमितिभावः ॥ ४२६॥ एवंसतिस्वाघटितघटकशक्त्यास्वस्यजीवैक्यंनिर्गुणत्वंचकुतोभगवान्नघटयती त्यतआह ॥ ऐक्यमिति ॥ शक्तोपिभगवांच्छ्रुत्यादिप्रमाणसिद्धमेवार्थंघटयेत् । नत्वप्रामाणिकंशशशृंगमपिघटयेत् । ऐक्यादि कंचशशशृंगवदप्रामाणिकंप्रमाणविरुद्धंचातस्तदपिनघटयतीतिभावः ॥ ४२७ ॥ युक्त्यंतरंचाह ॥ रुणद्धीति ॥ यदैक्यादिकं घटकशक्तीशत्वे अघटितघटकशक्तिमीशत्वंरुणद्धीतिसंबंधः । अर्थं स्वशक्तीशत्वनाशकमैक्यनिर्गुणत्वादिकं नीचजीवैक्यघट

ऐक्यंचनिर्गुणत्वंचनश्रौतंनापियुक्तिमत्॥४२७॥रुणद्धियद्धिघटकशक्तीशत्वेमहाप्रभोः ॥ घट
येन्नेदृशानर्थकरमर्थंसबुद्धिमान् ॥ ४२८ ॥ दुःखंसंधित्सतोयत्साशक्तिःप्रच्यवतेबहिः ॥ ४२९ ॥
यस्सर्वैश्वरताशुस्थ्यैसेहेविप्रपदाहतिं॥ स्वमहिम्निमहांस्तस्यभरस्स्तोत्रर्थकारिणः ॥ ४३० ॥

नेकृतेसतिस्वस्यापिनीचत्वापत्त्येशत्वहानेः निर्धर्मकत्वरूपनिर्गुणत्वघटनेचाघटितघटकशक्तिरूपधर्मस्यैवलोपप्रसंगात्तदुभयंनघट यतीतिभावः ॥ ४२८ ॥ अतएवस्वात्मनिदुःखमपिनघटयेदित्याह ॥ दुःखमिति ॥ यद्यस्माच्छक्तश्चदुःखीचेत्यस्यपरस्परंविरुद्ध त्वादघटितघटकोपिभगवान्स्वमहिमाऽघातकं किंतुसुतरांस्वमहिमसंपादकंचयद्भवतितदेवघटयेत् । नतुस्वानर्थकरमैक्यादिकं । नहिरिपूदरविदारणसमर्थनखरोनरहरिस्स्वोदरविदारणंकुरुते ॥ ४२९ ॥ स्वमहिमानंभगवान्कदापिनजहातीत्येतद्भगवच्चरित्रेणै वानुभावयति ॥ यइति ॥ विप्रपदाहतिं भृगुमुनेःपादघातं । स्तोत्रर्थकारिणइतिहेतुगर्भविशेषणं । स्वमहिम्नितात्पर्याभावेस्वस्तो

तृणामोक्षादिपुरुषार्थंकुतोदत्तइतिभावः ॥ ४३० ॥ सा या सनकादिभिरगम्या । तेपिभगवत्परिचर्यांकुर्वतः ॥ ४३१ ॥ तस्मा
त्परममोक्षस्थल्यामपिहरेर्मुक्तसेव्यत्वमनोहराकारवत्त्वादिमहिमदर्शनात् । अज्ञत्वमज्ञानावृतत्वं । यदैक्यादिकं ॥४३२॥४३३॥

सायोध्याख्याहरिपुरीरत्नगोपुरमंटपा ॥ श्रीरेवनगराकारासेवतेस्वपतिंकिल ॥ भक्ताःपरममुक्ता
स्तेनित्यमुक्तोहरिःप्रभुः ॥४३१॥ तस्माज्जीवेश्वराभेदोजीवाभेदोऽद्वितीयता ॥ निराकारत्वमज्ञत्वं
निर्गुणब्रह्मयत्तव ॥ ४३२ ॥ अप्रामाणिकमेवेदंसर्वमासीन्नसंशयः ॥ उक्तेपरममोक्षेस्मिन्यन्नाभू
त्कुत्रतद्भवेत् ॥ ४३३ ॥ अतोदुराशांसंत्यज्यभजकृष्णपदांबुजं ॥ गर्तेवापतमध्येतेस्थितिर्लज्जा
तुरस्यन ॥ ४३४ ॥ एवंचसुखरूपेणचक्षुषासुखरूपिणां ॥ मुक्तंपश्यतिमुक्तोन्यस्सुखरूपेणजिघ्रति
॥ ४३५ ॥ घ्राणेनसुखरूपत्वाद्घ्रेयमेवंसुखात्मना ॥ मनसैवविजानीयाद्विज्ञातारंहरिंप्रभुं
॥ ४३६ ॥ इत्येवयत्रत्वस्येतिश्रुतिस्स्वार्थमुपाददे ॥ यतस्सुखंकमित्याहुश्शब्दतत्वविशारदाः
॥ ४३७ ॥ अन्यार्थस्यमहामोक्षेप्येतास्मिन्वैष्णवेपदे ॥ उक्तरीत्याबाधितत्वादयोग्यंतज्जहौश्रुतिः
॥४३८॥ विस्तरस्त्वस्यसर्वस्यमूलशास्त्रमहार्णवे ॥ द्रष्टव्यश्चित्तशुद्ध्यर्थमेतावचर्चितंमया ॥४३९॥
अतोयोग्योरुसौभाग्यापेक्षीमुक्तोनुमीयते ॥ मुक्तत्वान्नित्यमुक्तोसौयथास्वानंदनिर्भरः ॥ ४४० ॥ ॥६२९॥

गर्तेंऽधंतमसि ॥ ४३४ ॥ ४३५ ॥ ४३६ ॥ ४३७ ॥ तत्तस्मात् ॥ ४३८ ॥ ४३९ ॥ मुक्तस्यस्वयोग्यसकलसौभाग्योपेतत्वेऽनु

मानमप्याह ॥ अतइति ॥ असौ भगवान् ॥ ४४० ॥ तस्माद्युक्तिविरुद्धत्वात् । अनाकांक्षितमोक्षाया नपेक्षितमोक्षप्रतिपाद
नायेत्यर्थः । विरक्तंप्रतिवाणिज्योपदेशवदनाकांक्षितबोधकस्यवाक्यस्यपरंप्रत्यप्रामाण्यप्रसंगात् ॥ ४४१ ॥ ४४२ ॥ भेदकार्य

तस्माच्छून्यत्वमोक्षायनाकांक्षाजायतेनृणां ॥ अनाकांक्षितमोक्षायनपरोक्ताभवेच्छ्रुतिः ॥४४१॥ तस्मा
च्छुभजनाकीर्णादिव्यभोगवतीस्थितिः ॥ मुक्तिरुक्तश्रुतिशतैरप्यामानादितिस्थितं ॥४४२॥ यत्रमुक्तौ
मुक्तवर्गाद्धरेर्द्वैतमिवप्रभोः ॥ द्वैतोपमोविशेषश्चभवतिस्वगुणादिना ॥४४३॥ मुक्तानांचमिथस्सर्वेशा
च्चद्वैतमिवांजसा ॥ द्वैतोपमोविशेषश्चभवतिस्वगुणादिभिः ॥ ४४४ ॥ तत्रैवमोक्षेवैकुंठपूर्वकेस्वंविजा
नते ॥ परान्जानंतिभोगांश्चभुंजतेनुभवंतिच ॥४४५॥ स्वानंदमपितेबहीभवंत्येकीभवंतिच ॥ यानैश्चरंति
श्लिष्यंतिक्रीडंतिचहसंतिच ॥४४६॥ यत्रमोक्षेसर्वमात्मैवाभूदन्यन्नकिंचन ॥ नद्वैतंनविशेषोवातत्रज्ञातृ
त्वमेवन ॥ ४४७ ॥ दूरेभूद्वोकृतातस्मादविद्यास्तमयोनसः ॥ विद्यास्तमयएवाभूत्स्वज्ञानंचयतोस्यन
॥ ४४८ ॥ नापिदुःखस्यविध्वंसस्सुखस्यध्वंसएवसः ॥ एकाकीरमतेनासौकथंकामांश्चसोश्नुते ॥ ४४९ ॥

कारित्वेनभेदोपमोयोविशेषस्तत्समर्थनपरतयापियत्रत्वस्येतिवाक्यंयोजयति ॥ यत्रेति ॥ ४४३ ॥ ४४४ ॥ ४४५ ॥ ४४६ ॥
॥ ४४७ ॥ समोक्षःअस्यमुक्तस्य ॥ ४४८ ॥ सुखध्वंसमेवोपपादयति ॥ एकाकीति ॥ अनेन तस्मादेकाकीनरमतइतिश्रुतिंसू

चयति। सोऽश्नुतेसर्वान्कामानितिश्रुतिसूचनायसोऽश्नुतइत्युक्तं ॥ ४४९ ॥ यतो वैकुंठलोकात् । यत्रनारायणस्साक्षाद्यतोनावर्त
तेयतिरितिवाक्यसूचनायेत्थमुक्तं । किंचनास्तिविष्णोःपरंस्थानं नास्तिविष्णोःपरंध्यानंनास्तिमोक्षोह्यवैष्णवइतिवासुदेवसहस्र
नामस्थरुद्रवाक्येनविष्णुसंबंधरहितमोक्षस्यदूषिततयातत्संबंधेसकलसंपत्समेतवैकुंठस्यैवपरममोक्षत्वाद्यत्रत्वस्येतिवाक्यमुक्तविध
याविशेषसमर्थनपरतयायोजनीयं ॥ ४५० ॥ अपिचओंनमोभगवतेहृषीकेशायसर्वविशेषवीक्षितात्मनआकूतीनांचित्तानांचेत

इत्याक्षिपंतीशून्यत्वमोक्षंसर्वानपेक्षितं ॥ वैकुंठाख्यंमहामोक्षंयत्रद्वैतमिवेतिवाक् ॥ निरणीनयदेवे
यंयतोनावर्ततेयतिः ॥ ४५० ॥ विशेषवीक्षितात्मेतियतोभागवतेरमा ॥ विशेषाणांचाधिपतिंगृणी
तेस्वपतिंस्फुटं ॥ ४५१ ॥ अतोहरौविशेषोस्तितन्नियम्यश्चदेहिषु ॥ कथंनाभूद्विशेषोयंयोविशिष्यै
वगीयते ॥ अतोद्वैतमिवेत्युक्तोद्वैतप्रतिनिधिर्हिसः ॥४५२॥ सारूप्यंचैवसालोक्यंसामीप्यंयोगएव
च ॥ मुक्तिश्चतुर्विधाप्रोक्ताभेदापेक्षाहिसाऽखिला ॥ ४५३ ॥ ॥ ॥

सांविशेषाणामधिपतयइतिभागवतस्थरामवाक्येस्पष्टंभगवतिविशेषस्यसमार्थितत्वात्तत्परैवेयंश्रुतिरित्याह ॥ विशेषेति ॥ विशे
षवीक्षितात्मा विशेषबलेनेत्यर्थः। वीक्षितःस्वरूपभूतवीक्षणकर्ताऽऽत्मास्वरूपंयस्यसतथोक्तः ॥ ४५१ ॥ अत स्स्पष्टस्मृतिसिद्ध
त्वात्। योविशेषः ॥ ४५२ ॥ अधुनासायुज्यशब्दस्यशब्दशक्त्यैवैक्यपरतांनिराकर्तुंसायुज्यस्थानेयोगशब्दप्रयोगोपेतस्मृतिवा
क्यस्यार्धमेवपूर्वार्द्धंकुर्वंश्चिकीर्षितंप्रतिजानीते ॥ सारूप्यमिति ॥ ४५३ ॥ ॥ ॥

दृश्यंद्रष्टुंयोग्यं । सायुज्याख्यां सायुज्यशब्दं ॥ ४५४ ॥ धातुमेवपठन्शब्दनिष्पत्तिंदर्शयति ॥ युजिर्योगइति ॥ इह संबंधा र्थकतयासर्वजनप्रसिद्धधातुनिष्पन्नशब्दे ॥ ४५५ ॥ तत् ऐक्यपदं । अतस्सायुज्यपदस्यैक्यपदस्यचभेदार्थकत्वात् ॥ ४५६ ॥ इह संसारे । अंगगाः विश्वरूपस्यहरेर्हस्तपादाद्यवयवाश्रिताः । यद्यस्मात् । यच्छब्दबलादेवतस्मादितिलभ्यते । इदमे

कुचोद्यकृदवद्यार्थीदृश्यमर्थंनपश्यति ॥ किंयोगार्थकधातूत्थांसायुज्याख्यांविदुःखलाः ॥ ४५४ ॥
युजिर्योगेसहयुजौसयुजौशब्दविन्मते ॥ तयोर्भावश्चसायुज्यंकथमैक्यमिहोच्यते ॥ ४५५ ॥ उक्तं
पुरैवयद्यासिंवक्तयैक्यपदमित्यपि ॥ मुख्यत्वान्यत्वार्थकंचतत्किलातोहतोस्यहो ॥ अतस्सयुक्ततै
वासीत्सायुज्यंनत्वभिन्नता ॥ ४५६ ॥ इहाच्युतांगगादेवायन्मुक्तौचतदंगगाः ॥ सारूप्यंचैवसामी
प्यंसालोक्यंचहरेर्बहिः ॥ सदाहर्यंगसंगस्तुसायुज्यमितिसिद्ध्यति ॥ ४५७ ॥ नित्यमुक्तापियस्यश्री
र्नित्यंवक्षसिलक्ष्यते ॥ अनित्यमुक्तःकोमुक्तोतदैक्यंप्राप्नुयाद्वद ॥ ४५८ ॥ प्रलयेनलयोयस्याःप्रोद्भवे
चास्तिनोद्भवः ॥ प्रकृतिःकिलयादेवीनित्यमुक्ताकथंनसा ॥ ४५९ ॥ ॥ ॥

वपदद्वयमावर्तयित्वासारूप्यमित्यादियोजनाकर्तव्या ॥ ४५७ ॥ मुक्तानांभगवदैक्याभावेकैमुत्यंदर्शयति ॥ नित्येति ॥ वक्षसिलक्ष्यतेनत्वैक्यंप्राप्तेतिभावः ॥ ४५८ ॥ लक्ष्म्यानित्यमुक्तत्वमुपपादयति ॥ प्रलयइति ॥ यस्यालक्ष्म्याः । अस्यजगतः ।

युक्ति- प्रकृतिः प्रलयेप्युर्वरितप्रकृत्यभिमानित्वात्प्रकृतिपदवाच्या ॥ ४५९ ॥ आद्यसर्गांतिमप्रलययोःप्रतिपादकशब्दार्थपर्यालोचनया मल्लिका

॥ ५३ ॥ पिब्रह्मणएवप्रलयोनतुरमारमेशयोरित्याह ॥ आद्यइति ॥ प्रथमंब्रह्मणएवोत्पत्तिमत्त्वाद्ब्राह्मसंज्ञः । यद्यस्मात् । ब्रह्मप्रलयोत्र फलसौ०

ह्मप्रलयनामकोलयोमहाप्रलयः । अतो ब्रह्मणएवसर्गप्रलयावधिभूतत्वात् ॥ ४६० ॥ संतौविद्यमानौ । अंतोनाशः । अतःप्रल

आद्यःकल्पोयतोब्राह्मोयद्ब्रह्मप्रलयोलयः ॥ अतोरमारमेशौद्वौसर्गप्रलयवर्जितौ ॥ ४६० ॥
यौहिसर्वलयेसंतौतयोरंतोनयौक्तिकः ॥ अतःप्रागसतस्सत्तासंबंधश्चनयौक्तिकः ॥ ४६१ ॥
ययोस्सृष्टिश्चनष्टिश्चनश्रुतानापियौक्तिकी ॥ लक्ष्मीनारायणौतौद्वौनित्यमुक्तौनसंशयः ॥४६२॥
अतस्त्वांशब्दमर्यादाबाधतेबुधसंसदि ॥ उक्तरीत्यार्थमर्यादाप्यनर्थंकुरुतेवद ॥ ४६३ ॥ प्रागु
क्तश्रुतयश्चत्वांनिघ्नंत्यज्ञपदेपदे ॥ अतोमुक्ताश्रयोब्रह्मरुद्राद्युत्कृष्टचेतनः ॥ ४६४ ॥ ॥

येपिविद्यमानत्वात् ॥ ४६१ ॥ ४६२ ॥ शब्दमर्यादा सायुज्यादिशब्दमर्यादा । अर्थमर्यादा नित्यमुक्तलक्ष्म्याअप्यैक्याभावरू

पार्थमर्यादा ॥ ४६३ ॥ प्रागुक्तश्रुतय स्सहब्रह्मणेत्यादिश्रुतयः । श्रुतयइत्युपलक्षणं । भेजेखगेंद्रध्वजपादमूलमित्यादिस्मृतयो ॥ ६३१ ॥

पिग्राह्याः । उपसंहारव्याजेनद्विप्रकारकसहस्रनामस्थभगवन्नामद्वयंमुक्तावपिभेदेप्रमाणयति ॥ अतइति ॥ मुक्ताश्रयइत्यनेन

मुक्तानांपरमागतिरितिनामसूचितं । ब्रह्मरुद्राद्युत्कृष्टचेतनइतिवासुदेवसहस्रनामस्थनाम ॥ ४६४ ॥ द्वितीयाद्वैभयंभवतीतिश्रु

तेस्स्वाभिमतार्थंवदन्पराभिमतार्थंतयैवदूषयति ॥ द्वितीयादिति ॥ अस्यगोर्द्वितीयेनभवितव्यमित्युक्तेस्सदृशोगौरेवानीयतेना

श्वोनगर्दभइतिवचनेनद्वितीयशब्दस्यसदृशेप्रयोगात् प्रतिगजादिनायुद्धादिजनितदंतभंगादिभयदर्शनाच्चेतिभावः । नचे दुक्त

श्रुत्यर्थोनचेत् । स्वस्य स्वतोद्वितीयमात्रस्यभयजनकत्वंवदतोवादिनइत्यर्थः । यद्यस्मात् । एकाकीनरमतइत्यनेनैतत्प्रकरण

द्वितीयाद्वैभयमितिसदृशाद्भीतिरुच्यते ॥ नचेद्द्वितीयाद्वचनाद्भीस्स्वस्यैवभवेद्ध्रुवं ॥ यदेकाकी
नरमतइत्यस्त्यन्यार्थशून्यवाक् ॥ ४६५ ॥ द्वितीयादाश्रमान्नृणांभयंस्याद्गृहसंसृतेः ॥ अतस्तृ
तीयंतुर्यंवाप्रथमादाश्रमाद्व्रजेत् ॥ ४६६ ॥ इतिवासाश्रुतिर्वक्तिपुण्यपापाख्ययोर्द्वयोः ॥ द्विती
याद्भिभयंदुःखंनरकाद्यंततस्सुधीः ॥ प्रथमंधर्ममेवैकंभजेद्द्वंद्वसहोन्वहं ॥ ४६७ ॥ ॥

स्थितंतस्मादेकाकीनरमतइतिवाक्यंगृह्णाति । अन्यार्थशून्यवा गर्थांतरेऽवकाशशून्यवाक् । अनेननिरवकाशैतद्वचनानुसारेण

सावकाशत्वद्वचनस्येत्युक्तएवार्थइतिसूचयति ॥ ४६५ ॥ एवंचद्वितीयाद्वैभयंभवतीतिश्रुतेरनभिमतार्थस्यापितयैवश्रुत्यादूषणा

दपिचमत्कारायश्रुतेरर्थद्वयमुक्त्वापुनश्चसर्वानुभवसिद्धान्द्वितीयपदस्वारस्येनैवलब्धांश्चश्रुतेश्चतुर्दशार्थानाह ॥ द्वितीयादित्या

दिना ॥ आश्रमाद्गृहस्थाश्रमात् । संसृतेः पुत्रकलत्रवित्तगेहादिरूपसंसारान्निमित्तात् । तृतीयंवानप्रस्थाश्रमं तुरीयंयत्याश्रमं ।

उभयोरपिधर्महेतुत्वादितिभावः ॥ ४६६ ॥ ४६७ ॥ मोक्षकारणंसत्संगं शंसंतीस्तुवंती । सदसतोस्सत्संगासत्संगयोरित्यर्थः ।
द्वितीयादसत्संगात् ॥ ४६८ ॥ द्वितीयाज्जगतो ब्रह्मरुद्रादिजगतः । तल्लोकभूलोकादिजगतश्च मृत्युर्भयं मृत्युरूपभयमित्यर्थः ।
मर्त्योमृत्युव्यालभीतइतिवचनात् । तत्तस्माद्विष्णोरन्येषांमृत्युनिवारकत्वाभावात् । विष्णोरेवप्रथमत्वोपपादनायपुरुषोत्तममि
त्युक्तं । सामान्यवाक् विशेष्यावधिभूतंकंचित्पदार्थमनुक्त्वातूष्णींद्वितीयादितिवागित्यर्थः । ततश्चावधेरूह्यत्वाद्यथासंभवमूहेउ

इतिवावक्तिसत्संगंशंसंतीमोक्षकारणं ॥ द्वयोस्सदसतोर्नॄणांद्वितीयाद्वाभयंजगौ ॥ ४६८ ॥ एवंद्वितीया
ज्जगतोभयंमृत्युर्यतोनॄणां ॥ तन्मृत्युभयभंगायप्रथमंपुरुषोत्तमं ॥ ४६९ ॥ भजेदनन्यभक्तस्सन्नितिवाशा
स्तिसज्जनान् ॥ इतिसामान्यवाग्वक्तिमोक्षहेतुपरंपरां ॥ ४७० ॥ नचेद्वितीयाद्वचनात्स्वस्याभयमितीरितं
॥ ४७१ ॥ एकद्वितीयतोभीतासातिभीतेतिमेमतिः ॥ बहूनांभेदवाक्यानांयुक्तीनांचपराक्रमात् ॥४७२॥
चिदचिद्रूपजगतासर्वेणैक्यंयदीष्यते ॥ द्वितीयतोभयंतर्हिद्वितीयार्थोचपूर्वभीः ॥ ४७३ ॥ ॥

क्तार्थलाभइतिभावः ॥ ४६९ ॥ ४७० ॥ विपक्षेप्रागुक्तंबाधकंसूचयति ॥ नचेदिति ॥ द्वितीयात्स्वापेक्षयाद्वितीयात्स्वविरुद्धा
र्थकाद्वावचनादेकाकीनरमतइतिवचनात् । स्वस्या द्वितीयाद्वैभयंभवतीतिश्रुतेरेवेत्यर्थः । भयं परस्परविरोधाख्यभयं । नकेव
लमेतावत्किंतुभेदप्रतिपादकद्वासुपर्णेत्यादिश्रुतिभ्यश्श्रौतयुक्तिभ्यश्च ॥ ४७१ ॥ जात्येकवचनतयाद्वितीयशब्दवाच्येभ्योबहुभ्यो ॥ ६३२॥
भयंचस्यादित्याह ॥ एकेति ॥ ४७२ ॥ श्रुतितात्पर्यविषयतयापराभिमतैक्येप्यनयैवश्रुत्याविरोधमाह ॥ चिदचिदिति ॥

द्वितीयादचिद्रूपजगतः । मिथ्याभूतजडस्यब्रह्मणैक्यानंगीकारादितिभावः । द्वितीयार्थात् प्रथमोक्तार्थादुपरिकथितार्थात् द्विती यात् एकाकीनरमतइतिद्वितीयवाक्यात् पूर्वभीः प्रथमोक्तस्यचिद्रूपजगदैक्यस्यापिभीस्स्यादितियोजना । चेतनैकाकित्वस्यस्व समानजातीयचेतनांतरेसत्येवपरिहारात् । नहिघटंगर्दभंवाऽऽदायगच्छन्देवदत्तोनैकाकीतिभावः ॥ ४७३ ॥ अर्थद्वये स्वरूपैक्य स्वव्यतिरेकेणाभावरूपार्थद्वये । द्वितीयार्था त्स्वव्यतिरेकेणाभावरूपार्थात् । विरम्यव्यापाराख्यभयंस्यादितिभावः ॥ ४७४ ॥ मुच्यमानाणुजीवेन । अनीदृशि नित्यमुक्तेव्याप्तेब्रह्मण्युच्यमानैक्यं । अस्मा न्मुच्यमानाणुजीवात् । उक्तविधयाविलक्षणात्त

अर्थद्वयेद्वितीयार्थाद्विरम्यव्यापृतिर्भयं ॥ ४७४ ॥ मुच्यमानाणुनाचैक्यमुच्यमानमनीदृशि ॥

द्वितीयातेभयंद्यात्तस्मादस्माद्विलक्षणात् ॥ ४७५ ॥ सत्रैविध्यंयदिष्टंतेद्वितीयाद्वैभयंतदा ॥

स्यादाद्यब्रह्मणोनोचेद्द्वितीयाद्वादिनोभयं ॥ ४७६ ॥ इत्थंरज्जुभ्रमात्सर्पग्राहीत्वंहाहतोस्यहो ॥ ४७७ ॥

स्माद्ब्रह्मरूपाद्द्वितीयाद्द्वितीयवारोक्तात् । तेमायावादिनस्तव भयं विरोधरूपभयंद्यादितियोजना ॥ ४७५ ॥ इष्टं विश्वसत्यत्व प्रतिपादकश्रुतिविरोधपरिहारायाभिमतं । द्वितीयाद्व्यावहारिकसत्यत्वेनांगीकृताज्जगतः । भयं ब्रह्मसत्यत्वप्रतिपादकश्रुतीनाम पिव्यावहारिकसत्यत्वपरत्वसंभवेनब्रह्मणएवाभावाख्यभयं । आद्यब्रह्मणः पारमार्थिकत्वेनांगीकृतब्रह्मणः । नोचेत्सत्रैविध्यंनो चेत् । द्वितीयाद्वादिनो विश्वंसत्यमित्यादिश्रुतिबलेनजगत्सत्यत्वंवदतोवादिनस्सकाशात् । भयं तंप्रतिप्रत्युत्तराभावरूपभयं ॥ ४७६ ॥ रज्जुभ्रमा द्वस्तुगत्यासर्पेरज्जुरियमितिभ्रमात् । उक्तरीत्याविचार्यमाणेविरुद्धार्थायांश्रुतावापातरमणीयार्थमादाय

युक्तिं- स्वानुकूलेतिभ्रमादित्यर्थः । सर्पग्राही सर्पवत्स्वाभिलषितविरुद्धार्थश्रुतिग्राही । हत स्सर्पेणहतपुरुषवदुक्तरीत्यागृहीतश्रुत्यैवहतः मल्लिका
॥ ४७७ ॥ तेनकारणेन तं देहगेहादिकंपदार्थंत्यजेत् । तत्राभिमानंत्यजेदित्यर्थः । दृगर्थिभिरपरोक्षज्ञानार्थिभिः ॥ ४७८ ॥
॥ ५५ ॥ द्वितीया द्बंधोच्छित्त्यर्थहेतुतयाद्वितीयवारकथितात् । संसृतेर्भयं ध्वंसाख्यभयं । एवंचपराभिलषितैक्यमिथ्यात्वादिकंदूषयितुं फलसै०
स्वमते मोक्षस्यपरंपरासाधनंसाक्षात्साधनं मोक्षंचप्रतिपादयितुमेवश्रुतिरियंप्रवृत्तेतिभावः ॥ ४७९ ॥ अबिभंदिति ॥ सोबि

द्वितीयाद्देहगेहादेर्भयंस्यात्तेनतंत्यजेत् ॥ इत्येवार्थश्श्रुतेर्वाच्योबंधोच्छित्त्यैदृगर्थिभिः ॥ गुरुमे
वाभिगच्छेदित्यादिवाक्यार्थवेदिभिः ॥ ४७८ ॥ द्वितीयाद्ब्रह्मविज्ञानाद्भयंभवतिसंसृतेः ॥
इत्यर्थोवात्रतच्छ्लाघ्यस्समित्पुस्तकपाणिभिः ॥४७९॥ किंचाबिभदितिब्रह्मभयमुक्त्वापुनश्श्रु
तिः ॥ तेनैकाकीबिभेतीतितत्रकारणमाहच ॥ ४८० ॥ तस्मादेकाकितायांचभीत्युक्त्यातांच
संत्यज ॥द्वितीयमैच्छदितिचवचोहंतितवेप्सितं॥४८१॥ अनुकूलंद्वितीयंतच्छ्रुतिश्चनानिषेधति॥
रक्षोभूतपिशाचादिद्वितीयंभयदंजगौ ॥ कस्माज्न्वहंबिभेमीतिभीषकाभाववाङ्गकिं ॥ ४८२ ॥

भदितिश्रुत्या ब्रह्मभयं चतुर्मुखब्रह्मणोभयं । तेनैकाकीबिभेतीत्युत्तरवाक्ये । तत्र भये । कारण मेकाकित्वरूपकारणं
॥ ४८० ॥ तामेकाकितां । द्वितीयमैच्छदितिवच स्सद्वितीयमैच्छदितिवचइत्यर्थः ॥ ४८१ ॥ तत्तस्मात् ब्रह्मणा ॥ ६३३ ॥
स्वसहायभूतद्वितीयस्याकांक्षितत्वात् । जगौ द्वितीयाद्वैभयंभवतीतिश्रुतिर्जगावित्यर्थः । कस्माज्न्वहंबिभेमीतिश्रुतिः भीषकाभा

ववा ग्भयकारणीभूतराक्षसाद्यभाववाक् । एवंचभयकारणीभूतद्वितीयस्यैवद्वितीयाद्वैभयंभवतीतिश्रुतिरपिनिषेधिका । नतुस
हायभूतद्वितीयस्य । तथासतिसद्वितीयमैच्छदितिश्रुतिविरोधात् । स्वसहायभूतद्वितीयमपेक्षमाणेनकस्मान्न्वहंबिभेमि द्वितीया
द्वैभयंभवतीतिनिषिध्यमानंद्वितीयंस्वविरोध्येवेतिभावः ॥ ४८२ ॥ सः एकाकित्वेनभीतोब्रह्मा ॥ ४८३ ॥ प्रकरण मेकार्थप्रति
पादकबहुवाक्यसमुदायः । वादरणं वादाख्ययुद्धं । उक्तविधयात्वदभिलषितार्थस्यप्रकरणविरुद्धत्वादिमांश्रुतिंपुरस्कृत्यकथंवा

एकाकीचेन्नरमतेतेनैच्छत्सद्वितीयकं ॥ इतिवागुपसंहर्त्रीसंहर्त्रीतवदुर्धियः ॥ ४८३ ॥
अतःप्रकरणंमंदहंतिवादरणंतव ॥ जिह्वारूपंप्रकृष्टंतेकरणंवानिहंत्यहो ॥ भयंद्वितीया
द्वचनादित्युक्तंसूक्तमेवतत् ॥ ४८४ ॥ स्वाखंडवादखड्गेनमृतमृत्यैनमेकृतिः ॥ स्वयूथ्या
नांमनस्तृह्यैभक्त्यैमुक्त्यैचकेवलं ॥ ४८५ ॥ ॥ ॥ ॥

दंकरोषीतिभावः । तेजिह्वारूपं प्रकृष्टकरणंनिहंतीतियोजना । प्रकरणस्यप्रकरणघातित्वमेवन्याय्यमितिभावेनेदमुदितं । तत्त
स्मात्प्रकरणस्थवाक्यैरपिविरुद्धत्वात् ॥ ४८४ ॥ किंचैक्यनिर्गुणत्वजगन्मिथ्यात्वादिप्रतिपादकतयाभिमतस्वसकलवाक्यानाम
पिब्रह्मस्वरूपमात्रपरत्वरूपाखंडार्थनिष्ठत्वंवदतापरेणस्वापेक्षिताशेषार्थप्रतिपादकत्वाभावस्योक्तत्वान्नास्माभिःप्रयतितव्यमित्याह
॥ स्वाखंडेति ॥ मृतमृत्यै मृतस्यमायावादिनोमारणाय । कृतिर्ग्रंथरूपाकृतिः । किंतर्हितस्याःप्रयोजनमित्यतस्तदतिरिक्तप्रयो

जनमित्याह ॥ स्वयूथ्यानामिति ॥ ४८५ ॥ ४८६ ॥ ४८७ ॥ ४८८ ॥ ४८९ ॥ अत स्स्वनिष्ठनित्यमुक्तत्वस्य कदाचिन्मु
क्तेजीवेप्रयत्नशतेनापिदानायोगादैक्येप्रमाणाभावाच्च । सम मैक्यसाम्यश्रुत्योर्बलात्सर्वधर्माणामभावभावत्वाभ्यामविरुद्धंनकु
र्यात् । ततो नित्यमुक्तत्वकदाचिन्मुक्तत्वाभ्यांजीवब्रह्मणोर्मुक्तिदशायामपिविरुद्धत्वादैक्येप्रमाणाभावाच्चैक्यंनेतियोजना । त

सामानाधिकरण्याद्धानानात्वक्षेपतोपिवा ॥ ऐक्यसिद्धिस्त्वखंडार्थवादेनाभ्भूत्तवैवहि ॥ ४८६ ॥ सर्वज्ञाल्प
ज्ञयोरैक्यंनास्त्येवेतितुयोवदेत् ॥ ऐक्यस्यब्रह्मरूपत्वाद्ब्रह्मवागैक्यवागिति ॥ कथंतंप्रत्युत्तरंस्यान्निर्मूलोस्ति
नवैतरुः ॥ ४८७ ॥ अन्यथाशशश्रृंगस्यचिद्रूपत्वाच्चिदुक्तितः ॥शशश्रृंगंचसकथंत्वांप्रत्येवनसाधयेत्॥४८८॥
ऐक्यस्यब्रह्मरूपत्वंमायावादीवदेदपि ॥ परंप्रत्यैक्यसिद्ध्यर्थंनैवमाहसुधीर्ह्यसौ ॥ ४८९ ॥ अतस्सर्वगुणैर्वि
ष्णुर्मुक्तंकुर्यात्कथंसमं ॥ ततोपिनैक्यंसाम्यंतुकिंचित्साम्यमितीरितं ॥ ४९० ॥ किलामृतस्यैषसेतुर्मुक्ता
नांपरमागतिः ॥ सोमृतस्याभयस्येशःकृष्णोमुक्तैःकिलेज्यते ॥ ४९१ ॥ इतिश्रुतिपुराणानिसेतिहासानिस
र्वतः ॥ गर्जंत्यन्येमहित्वंतेनाश्नुवंतीतिहिश्रुतिः ॥ अप्यवाग्वृत्तयोयस्यमहित्वेस्वभुवादयः ॥ ४९२ ॥ ब्रह्मे
शानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरिः ॥ ४९३ ॥ ॥

त्त्यागेमुक्तेरेवाभावप्रसंगात् ॥ ४९० ॥ पुनरपिमुक्तौभेदप्रतिपादकश्रुतिस्मृतीराह ॥ किलामृतस्येत्यादिना ॥४९१॥४९२॥
यत्कैवल्य मनाद्यनंतकालेषुजडदेहजराद्यमिश्रत्वरूपनित्यमुक्तत्वं । यत्स्वभावो यस्यपरमात्मनस्स्वभावस्स्वतएवभवति नत्वन्य

प्रेरणयेतिस्वभावः । केवलः केवलोनिर्गुणश्चेत्यादिश्रुतौकेवलपदोदितः ॥ ४९३ ॥ तद्भावंतदैक्यं ॥ ४९४ ॥ सावकाशोएकी भवंतीत्याद्या ॥ ४९५ ॥ उपसंहारवाक्येपिप्रमाणंसूचयितुंभूतभव्यभवत्प्रभुरितिसहस्रनामस्थंनामैवोक्तं । भव्याः परांतकालेभ विष्यंतोमुक्ताः ॥ ४९६ ॥ ग्रंथस्यश्रीकरत्वद्योतनायग्रंथांतेसकलवाङ्मनसदेवतांलक्ष्मीमपिस्तुवन्भगवदैक्यंवदन्मातृगामीस्यादि तियुक्तिंचसूचयति ॥ याधात्रिति ॥ ग्रंथस्यपरमंमंगलत्वद्योतनायमंगलदेवतेत्युक्तं ॥ ४९७ ॥ उपरिमध्वकथांप्रस्तावयितुंतंच

इतिभागवतोक्त्याचब्रह्माद्यैर्नैवलभ्यते ॥ यस्यस्वभावस्तद्भावंमर्त्यःकोगंतुमर्हति ॥ ४९४ ॥
गिरोनिरवकाशायास्सावकाशाहिकिंकरी ॥ अतस्तदध्वनैवासौगच्छेन्नतुकदध्वना ॥ ४९५ ॥
तस्मात्सर्वेश्वरोविष्णुर्भूतभव्यभवत्प्रभुः ॥ मुक्तामुक्तजगन्नाथोभक्त्याराध्यइतिस्थितं ॥४९६॥
याधात्रादिजगद्धात्रीख्यातातैर्वेदिताचिंता ॥ मुक्तामुक्तजगन्मातासाश्रीर्मंगलदेवता॥४९७॥
जयतिश्रीरमाकांतोजयतिश्रीश्चतत्प्रिया॥श्रीश्रीशभक्तोजयतिमध्वोविध्वस्तसाध्वसः॥४९८॥
षष्ठेऽष्टकेंऽतिमाध्यायद्वयमारभ्यसप्तमे ॥ पवमानःपूयमानस्सोमश्चोक्तःपदेपदे ॥ ४९९ ॥ ॥

स्तौति ॥ श्रीश्रीशभक्तइति ॥ ४९८ ॥ षष्ठेऽष्टके अष्टाष्टकात्मकऋग्वेदस्यषष्ठाष्टके । अष्टाध्यायात्मकएकोभागषष्ठाष्टक मित्युच्यते । अंतिमाध्यायद्वयं पंचदशवर्गेभ्यउपरिस्वादिष्ठयेत्यादिसप्तममध्यायं संपूर्णमष्टमंचाध्यायमित्यर्थः । सप्तमेऽष्टके पंचवर्गोनाध्यायपंचके । मिलित्वाऽऽदावंतेचकिंचिदूनाध्यायसप्तकइत्यर्थः । वायोर्गमनं तस्यकर्तापवमानः । पूयमानःपवि

त्रीकरणसमर्थः । वायुर्वह्निश्शुचिश्श्रेष्ठइतिस्मृतेः । अतएवहि पांसवोस्मान्पुनंत्विति शुद्धिप्रार्थना । जाग्रत्स्वप्नसुप्त्याख्याव स्थासुदेहिनांदेहेश्वासरूपेणसत्त्वात्सोमः । निरुक्तत्वादाधिकारिकवर्गेषुवायोरतिशयेनोत्तमत्वज्ञापनार्थंवाकारस्याकाराख्यवर्णवि कारः । द्वौचापरौवर्णविकारनाशाविति निरुक्तलक्षणेकथनात् । सु प्रसवैश्वर्ययोरितिधातोरौणादिकेमप्रत्ययेगुणेचकृतेसति जग त्प्रसवितृत्वादैश्वर्यवत्त्वाद्वासोमः । पितरतुलगुरो पीठेरत्नोपक्लृप्तेरुचिररुचिमणिज्योतिषासन्निषण्णमितिवचनात् ॥ ४९९ ॥
तत्रपूयमाने । यद्यस्मात् । मारुती मरुत्संबंधिनी। समध्वइत्यनेन सपूर्व्यःपवतेयंदिवस्परिश्येनोमथायदिषितस्तिरोरजः । समध्व

समध्वइतितत्रैवपवमानस्यमध्वता ॥ यत्स्पष्टंश्रूयतेतस्मान्मध्वाख्यामारुतीतनुः ॥ ५०० ॥
वेविजानःपृथक्कुर्वन्समध्वःपंचधाजगत् ॥ पृथग्भावातिशयवाग्विजेरूपमिदंयतः ॥ ५०१ ॥

आयुवतेवेविजानइत्कृशानोरस्तुर्मनसाहबिभ्युषा । तेनःपूर्वासउपरासइंदवोमहेवाजायधन्वंतुगोमते । ईक्षेण्यासोअह्यो३नचारवो ब्रह्मब्रह्मयेजुजुषुर्हविर्हविरितिऋग्द्वयंगृह्णाति । अयमस्यार्थः । सर्वेषांजीवानांपूर्व्यः पूर्वविद्यमान स्सर्वजीवज्येष्ठइत्यर्थः । वंद्यंचं द्रेंद्ररुद्रद्युमणिफणिवयोनायकाद्यैरिहाद्येतिवचनात् । सपवमानः पवते श्वासरूपेणपवनंकरोति । यंपवनं दिवोद्युनामकवैकुंठ लोकस्यपरिपरितोवदंति । आनंदान्मंदमंदाददतिहिमरुतइतिवचनात् । श्येनः शी निरवधिकसुखवान्नारायणआसमंतादिनःप्रभुर्य स्यसतथोक्तः । त्रातायस्यत्रिधामेतिवचनात् । इषितस्सज्जनानामिष्टः । भ्रातरिष्टेतिवचनात् । यःपवमानो रजोरजोगुणनिर्मितं



तदुपलक्षिततमोगुणनिर्मितंचदुश्शास्त्रंतिरस्तिरस्कृत्य दुर्भाष्यंव्यस्यदस्योरितिवचनात् । मथाय द्वेदशास्त्राख्यसमुद्रस्यविचारा ख्यमंथनंकृतवान् । असुकरमकरोर्ब्रह्मसूत्रस्यभाष्यमितिवचनात् । सः दुश्शास्त्रमधःकृत्यसच्छास्त्रंप्रवर्तयन्पवमानो मध्वो मध्व नामा वेविजानः ईशजीवजडात्मकप्रपंचस्यविशेषेणपृथग्भावंकुर्वन् । सर्वथातिरोहितस्यपुनस्समर्थनमपिकरणमित्येवोच्यते । पंचभेदस्थापनंकुर्वन्नित्यर्थः । विजृपृथग्भावइतिधातोः । आयुवते समंतात्सज्जनेषुसर्वदामिश्रितोभवति । भेदशास्त्रमुपपादयं स्तेषुकृपांकरोतीत्यर्थः । सज्जनान्मोदयंतमितिवचनात् । दुर्जनेष्वमिश्रितश्चभवति । तदभिमतमद्वैतंखंडयित्वातत्रापिभेदस्यैव स्थापनात्तेषामसह्योभवतीत्यर्थः । दैत्यानामार्तिमंधेतमसिविदधतामितिवचनात् प्रमददसुधियांमोहकद्वेषभाजामितिवचनाच्च । युमिश्रणामिश्रणयोरितिधातोः युतइतिवक्तव्येयुवतइतिबहुवचनंसकलसज्जनानांहृदिस्थरूपबाहुल्यापेक्षया तत्रस्थितदुर्जनानांप राभावनायगृहीतरूपबाहुल्यापेक्षयाच व्यत्ययोबहुलमितिवचनाद्वा । वायोर्दिव्यानिरूपाणिपद्मत्रययुतानिचेत्यादिवचनात् । स्वामिन्सर्वांतरात्मन्नित्यादिवचनाच्च । इदित्थंमध्वरूपवदेव । कृशानोर्ब्रह्मप्रलयकालेजलावरणोपरितेजोरूपावरणतयास्थिताग्नेः अस्तुर्निरसनशीलः । असुक्षेपणइतिधातोरौणादिकेतुन्प्रत्ययः । तेजसोवायौविलयस्यशास्त्रसिद्धत्वात् । तेजोरूपावरणसंहर्तावा युरूपावरणस्थोवायोस्संहारकरूपविशेषइत्यर्थः । बिभ्युषाभयंकरेणमनसासंहारकमूर्तित्वाद्भयंकरचित्तेनसहितइत्यर्थः । आयुवते विष्वगूर्ध्वमधश्चविद्यमानेआवरणरूपवायौ । तत्रतत्रत्यतेजस्संहारायबहुमूर्तिभिर्मिश्रितोभवति । अत्रापिरूपबाहुल्यविवक्षयाब हुवचनं । दंष्ट्रोग्रकरालवदनानांतेषांरूपाणामाश्चर्यकरत्वाद्धेत्युक्तं अहोइत्यर्थः । अभेदिबभ्रेबभूवे । येनभ्रूविभ्रमस्तइत्यादिवच

नात् । नोस्माकंपूर्वासः उपदेष्टृतयाप्रेरकतयाचज्ञानोदयात्पूर्वंविद्यमानाः । इंदवः इष्टदानशीलास्तेवायोरवताराः उपरासो मोक्ष प्रापकतयातदुपयुक्तसंहारकर्तृतयाचज्ञानोदयादुपरिविद्यमानास्तेवायोरवताराश्च । आविष्कर्तुंकामं । पितरतुलगुरो । तत्वज्ञान्मुक्तिभाजस्सुखयसिहिगुरवित्यादिवचनात् । गोमतेज्ञानवते महेमहते महेपंचपर्वाद्युत्सवेवा । वाजायान्नाय होतॄणांव्याख्यातॄणां चपोषणोपयुक्तान्नाय यज्ञसाधनाययज्ञोपयुक्तान्नायचेत्यर्थः । धन्वंतु धनदाभवंतु । धनधान्यइतिधातोः । भूरिमेभूतिहेतुरिति वचनात् । ये उक्ताद्विविधाअपिवायोरवताराः । अह्योऽहिसंबंधिन्यःरत्नप्रभाःनइव ईक्षेण्यासईक्षणीयाः । वरेण्यपदवदौणादिकंण्यप्रत्ययादिपदंद्रष्टव्यं । रत्नप्रभावद्द्योतनाद्दिव्यदेहाइत्यर्थः । निजरुचिनिकरव्याप्तलोकावकाशः । भूमिभूषामणिः । प्रोद्यद्विद्यानवद्यद्युतिमणिकिरणश्रेणिसंपूरिताशइत्यादिवचनात् । चारवोऽगण्यलावण्ययुक्ततयामनोहराश्चसंतः । संद्रक्ष्येसुंदरमिति वचनात् । ब्रह्मब्रह्मादेहिनांदेहेदेहेविद्यमानंपरमात्मानं युगेयुगेरामकृष्णव्यासादिरूपेणावतीर्णपरमात्मानंच । जुजुषुस्सिषेविरे । जुषीप्रीतिसेवनयोरितिधातोः । जुष्टिंमातरिश्वाजगाम । आसेवोद्यद्दयार्द्रः । याभ्यांशुश्रूषुः । भक्तिमद्यापिरामइतिवचनात् । हविः यज्ञेयज्ञेयाज्ञिकैर्वायवेस्वाहेतिदत्तंस्वंहविःहविः भोक्तृभिर्वैदिकैःप्राणादिपंचकरूपेणदत्तंहविर्हविः भीमरूपेणैकचक्रानगरेगृहेगृहेबकायचदत्तंहविर्हविः मध्वरूपेणभिक्षादातृभिर्दत्तंहविर्हविश्चजुजुषुःप्रीत्याबुभुजिरइति । इममेवार्थंमनसिनिधायाह ॥ वेविजानइति ॥ पृथग्भावातिशयवाक्पृथग्भावातिशयकर्तृत्ववाक् । भेदस्यपारमार्थिकत्वाख्यातिशयसूचनार्थमेवंप्रयोगः । अत्यंत भेदसूचनार्थंवा । विजेर्विजृपृथग्भावइतिधातोरिदंवेविजानइतिपदं ॥ ५०० ॥ ५०१ ॥ ॥ ॥

द्वयोर्मिश्रणामिश्रणयोःप्रतीपोविरोधः ॥५०२॥ यद्यस्मादर्थेप्रयोजनेसत्येकस्यैवरूपस्यबहुतास्ति यतश्चव्यत्ययो विभक्तिवचनादी नांव्यत्यासोवेदेस्ति ततस्तस्मात्कारणात्सआयुवतइतियुक्तमितिहृदयं ॥५०३॥ उपरासइत्यस्यतात्पर्यकथनमपरासइति। पूर्वपदसम भिव्याहारसामर्थ्याद्वर्णव्यत्यासतोवाऽपरासइत्युक्तं ॥५०४॥ इदिपरमैश्वर्यइतिधातोःपरमैश्वर्यतोवेंदवइत्युक्तं। इंद्रशब्दवदत्राप्य

मिश्रोऽमिश्रश्चभवतिसदासुजनदुर्जनैः ॥ युमिश्रणामिश्रणयोरितिधात्वर्थताद्वयोः ॥ सख्यं
नावैष्णवैर्यस्यप्रतीपोनैववैष्णवे ॥५०२॥ इत्थंकृशानोरसनशीलोस्तुःप्रलयेसति ॥ मनसाभी
षकेणोग्रोवायावायुवतेसह ॥ सत्यर्थेबहुतैकस्यैवास्तियद्व्यत्ययस्ततः ॥ ५०३ ॥ तेवायोरवता
रानःपूर्वासोगुरुतांगताः ॥ उपरासोपरासश्चप्रलयेमुक्तिदायकाः ॥५०४॥ इंदवश्चेष्टदातृत्वात्प
रमैश्वर्यतोपिवा॥ महेतिमहतेवाजायान्नायज्ञानगोमते ॥ धन्वंतुधनदास्संतुधनधान्यइतीरणा
त् ॥५०५॥ प्रसिद्धिंलौकिकींसौत्रींचाहरूपद्वयेस्यहा ॥ इत्यर्थौत्रयतस्स्पष्टंदृश्यतेपदसंपदा ॥ ५०६ ॥

नुस्वारइतिभावः। वाजायअन्नंवैवाजमितिश्रुतेरन्नपदवाच्याय। ज्ञानगोमतेज्ञानाख्यगोमते ॥५०५॥ रूपद्वयेउपदेशकरूपे संहारक रूपेच। अहाअहेत्यव्ययशब्दः। आद्यरूपेपंचभेदव्यापकत्वस्यालौकिकीप्रसिद्धिः द्वितीयरूपेतेजस्संहारकत्वस्यविपर्ययेणतुलयइ तिसौत्रीप्रसिद्धिरितिभावः।आश्चर्यार्थस्याप्युपलक्षणमेतत्। अस्मदुक्तार्थंचद्वयार्थस्यापिसूचकमिदं ॥५०६॥ पवमानेतिसोमेत्यनेन

अजीतयेऽहतयेपवस्वस्वस्तयेसर्वतातयेबृहते। तदुशंतिविश्वइमेसखायस्तदहंवश्मिपवमानसोमेतिश्रुतिंसंगृह्णाति। अयमर्थः। हेसोमसो मनामक पवमानमुख्यवायो। त्वंपवस्व इतस्ततोगमनंकुरु। तवपवनंविश्वेसर्वेइमेसखायोममभित्रभूतावैष्णवाः। अजीतये जीतिरसुरे भ्योस्मज्जयस्तदभावाय। अहतये तेभ्यएवास्मद्धननाभावाय। स्वस्तयेऽस्माकंक्षेमाय तुभ्यंचक्षेमदेभ्यइतिवचनात्। सर्वतातये सर्वत्रविस्तारवतेसर्वाभीष्टकरायवा। बृहते सर्वगुणपूर्णायसर्वोत्तमायचपरमात्मनेतत्सेवार्थमित्यर्थः। उशंतीच्छंतिच । त्वत्पव नमुक्ताजीत्यादिफलायवश्मिवच्मीच्छामिच । तवहनुमदवतारेराममूढ्वासुग्रीवंप्रतिपवनेन सीतान्वेषणार्थंमेरोर्दक्षिणभागेसर्वत्रप वनेन लंकायांप्रतिपवनेन युद्धेसंजीवनार्थंपवनेन रथस्थरावणंप्रतिराममूढ्वैवेतस्ततःपवनेन। भीमावतारेचकारागृहाद्युधिष्ठिरादी

पवमानेतिसोमेतिप्राक्प्रस्ताव्यैवयंश्रुतिः॥ सोमःपवतइत्याहससो
मोमारुतोध्रुवं॥ पवतेयस्सकिंनाभूत्पवमानोविदांमते॥ ५०७॥

नूढ्वागुहायांपवनेन एकचक्रानगरेबकवधार्थंपवनेन कृष्णेनसहजरासंधवधार्थंपवनेन वनवासेसौगंधिकानयनार्थंपवनेन युद्धेगदां गृहीत्वेतस्ततःपवनेनचसाधूनांराक्षसेभ्यः अहतिस्वस्तिरूपफलस्यरामकृष्णरूपिणोहरेस्सेवारूपफलस्यचदर्शनात्। मध्वावतारेच बाल्येविमानगिरींद्रान्मातृगृहंप्रतिपवनेन गोरक्षणार्थंपवनेन रामसेवार्थंप्रतिपवनेन ज्ञानदानार्थंदेशेदेशेपवनेन द्वारकापुरादागत कृष्णानयनार्थंज्ञानदृष्ट्यैवदृष्ट्वाविप्रैस्सहसमुद्रंप्रतिपवनेनच दुर्मतप्रवर्तकेभ्योदैत्येभ्यस्तवावतारप्रतिपादकसाधूनामज्ञानहत्याख्य फलस्यसत्यत्वस्थापनेनप्रपंचस्यसत्त्याख्यफलस्यमोक्षसाधनज्ञानात्परमस्वस्तिरूपमोक्षाख्यफलस्य सूत्रापव्याख्याप्रत्याख्यानेन



यथावस्थितार्थप्रतिपादकभाष्यकरणेनहरेर्मूलरूपेसर्वावतारेषुचनिर्दोषत्वव्याप्तत्वसर्वगुणपूर्णत्वसर्वोत्तमत्वस्थापनेनचभगवत्सेवारू पफलस्यचदर्शनात्। एतदर्थप्रतिपादकरामायणभारतवचनात्। द्वैपायनस्यसेवार्थंबदर्यांतुकलौयुगे । वायुश्चयतिरूपेणकृत्वादु श्शास्त्रखंडनमित्यादिवायुपुराणवचनात्। प्राक्पंचाशत्सहस्रैर्व्यवहितममितंयोजनैःपर्वतंत्वं । मुष्टिरिष्टंप्रदेष्टुंकिंनेष्टे । देव्यादे शप्रणोतीत्यादिवचनात्। जघ्नेनिघ्नेनविघ्नः। क्ष्वेलाक्षीणाट्टहासंतवरणमरिहन्नुद्गदोद्दामबाहो। गच्छन्सौगंधिकार्थंपथि । बह्वीः कोटीरटीकः। ब्रह्माहंनिर्गुणोहंवितथमिदमितिह्येषपाषंडवादः। तद्युक्त्याभासजालप्रसरविषतरूद्दाहदक्षप्रमाणज्वालामालाधरो ग्निः॥ स्वच्छस्वच्छंदमृत्युस्सुखयसिसुजनंदेवकिंचित्रमत्र । पारिव्राज्याधिराजःपुनरपिबदरींप्राप्यकृष्णंचनत्वाकृत्वाभाष्याणी

प्रसेनानीरितिश्रुत्यायद्भीमहनुमत्कथा॥ स्पष्टंनिरूपितात्रैवतत्सोमस्सोमवंशजः॥ ५०८॥

त्यादिवचनाच्च। मुख्यप्राणस्यपवनप्रार्थनमितिभावः। अस्त्वस्यामृचिसोमेतिपवमानस्यप्रार्थनं । तथापिप्रकृतेकिमायातमित्यत आह॥ प्राक्प्रस्ताव्येति॥ यंपवमानं॥ ५०७॥ प्रसेनानीरित्यनेन प्रसेनानीश्शूरोअग्रेरथानांगव्यंनेतिहर्षतेअस्यसेनाः। भद्रा न्कृण्वन्निंद्रहवांत्सखिभ्यआसोमोवस्त्रारभसानिदत्तइतिश्रुतिंसंगृह्णाति। अयमर्थः। शूरश्शौर्यवान्। गव्यन्रथंविहायगविभूमौ पादचारेणैवगच्छन्। इदंचभीमासाधारणधर्मत्वाद्भीमसेनत्वज्ञापकः। सेनानीः पांडवसेनानायकोभीमसेनइत्यर्थः। भीमासेना यस्येतिव्युत्पत्त्याभीमसेनपदस्यसेनानीपदस्यचसमानार्थकत्वात्। स्कंदाख्यसेनान्याःपूयमानेप्रस्तावायोगात्। गव्यत्पदोक्तपदा

चारयुद्धायोगाच्चभीमसेनएवायंसेनानीः । रथानांप्रतिसेनास्थितरथिकरथानामग्रएतियुद्धार्थंगच्छति । तदाऽस्यभीमसेनस्यसेना प्रहर्षते । भीमपराक्रमंदृष्ट्वाप्रकर्षेणहर्षंकरोति । इंद्रहवानिंद्रेणाहूयंतइतिव्युत्पत्त्याकवींद्रस्यवेदव्यासस्ययादवेंद्रस्यचाप्रतिमोयंपरा क्रमइत्याह्वानयोग्यान्भद्राञ्शोभनपराक्रमान्कृण्वन्कुर्वन्सोमस्सोमकुलोत्पन्नोभीमोधर्मराजस्यराज्याभिषेकेयुवराजसंपदमनुभव न्नाऽऽसमंतादागतेभ्यस्सखिभ्योवैष्णवेभ्योरभसानिनोदरादिसंभ्रमवंतिवस्त्रेषुरचितचित्रप्रतिमादिसंभ्रमवंतिच । अर्शआदिभ्यो जितिमतुबर्थेऽच्प्रत्ययः । वस्त्रावस्त्राणि । उपलक्षणमेतत् । धनभूम्याभरणादीनिचदत्तइत्येकोर्थः । शूरत्वादिसकलविशेषणवा

अग्नेरथानांसेनानीश्शूरोसौभुवियस्तदा ॥ एतिप्रहर्षतेभीमसेनसे
नातदाकिल ॥ भीमसेनोह्यसौसेनानीत्वंयत्तस्यशोभते ॥ ५०९ ॥

न्सेनानीःकपिसेनानायकोहनूमांश्च । रथानांराक्षसरथानामग्रएतितदास्यसेनाप्रहर्षते । इंद्रहवान्सीताप्रतिकृतिस्थितदेवेंद्रस्यस्तु तिरूपाह्वानयोग्यान्भद्रान्समुद्रलंघनवनभंगलंकादाहादिशोभनपराक्रमान्कृण्वन्सोमोहनुमदाख्योवायुरासमंतात्स्थूलस्वपुच्छवेष्ट नायदैत्यजनैर्दत्तानिरभसानिवस्त्राणि । सखिभ्योवायोरग्निसखत्वात्पुच्छदत्ताग्निनास्वस्यक्लेशोनास्तीतिसूचनायसखिभ्यइत्युक्तं । दत्तस्वपुच्छेप्रक्षिप्ताग्निस्थितविष्णोराहुतितयादत्तवानित्यर्थः । परकृतानिष्टमपितस्यहरिसेवाख्यपुण्यहेतुरेवाभूदितिभावः । इम मेवार्थंप्रपंचयन्नाह । प्रसेनानीरितिश्रुत्येत्यादिना । यद्यस्मात्तत्तस्मात् ॥ ५०८ ॥ यद्यस्मादसौभीमसेनः । हि तस्माद्धेतो स्से

नानीत्वंतस्यशोभतइतिसंबंधः ॥ ५०९ ॥ सुरराड्देवेंद्रः ॥ ५१० ॥ ५११ ॥ ५१२ ॥ ५१३ ॥ तत्कृतेऽग्न्यर्थे ॥ ५१४॥५१५॥
अस्मि न्पक्षे ॥ ५१६ ॥ सोमःपवतेजनितामतीनांजनितादिवोजनितापृथिव्याः । जनिताग्नेर्जनितासूर्यस्यजनितेंद्रस्यजनितोतवि

कवींद्रयादवेंद्राह्वानोचितान्सुरराट्स्तुतान् ॥ भद्रान्पराक्रमान्कुर्वन्युवराजपदेस्थितः ॥ ५१० ॥
सखिभ्योविष्णुभक्तेभ्योवस्त्रावस्त्राणिसंभ्रमाः ॥ युतानिचसमंतात्सदत्तेकिलदिनेदिने ॥ ५११ ॥
इतिभीमंस्तौतिसैवहनूमंतंचशंसति ॥ एकप्रकारकार्यत्वादेकरूपत्वतोपिवा ॥ ५१२ ॥ भद्रान्कु
र्वन्कवींद्रस्यराघवेंद्रस्यवाप्रभोः ॥ आह्वानार्हान्निजगुणान्सखिभ्योर्थेरिपोःपुरीं ॥ गत्वावस्त्राणि
चादत्तेरभसानिकिलद्विषां ॥ ५१३॥ स्वबालासक्तवस्त्राणिसखिभ्योग्निभ्यएववा ॥ आसमंताद्वि
भुर्दत्तेप्रागादत्तेचतत्कृते ॥ ५१४ ॥ द्विट्पुरीदाहपूर्वांश्चसीतास्थेंद्रस्यतोषदान् ॥ भद्रान्परा
क्रमान्कुर्वन्वनभंगादिकान्प्रभुः ॥ ५१५ ॥ अग्रेरथानामित्यादियोज्यमस्मिंश्चपूर्ववत् ॥ ससो
मःपवमानोस्मद्धनूमान्वाभविष्यति ॥ ५१६ ॥ मतीनांजनिताविष्णोर्जनितायश्श्रुतौश्रुतः ॥
विप्राणामृषिरित्युक्तस्समध्वइतिचश्रुतः ॥ ५१७ ॥ ॥ ॥ ॥

ष्णोः । ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां । श्येनोगृध्राणांस्वधितिर्वनानांसोमःपवित्रमत्येतिरेभन्निति श्रुतिद्व
यार्थपर्यालोचनयापिमध्वस्यैवात्रोक्तसोमत्वंघटतइत्याह ॥ मतीनांजनितेत्यादिना ॥ अयमर्थः । उपदेशादिनामतीनांबुद्धीनां

युक्ति- जनिता । अयमिहसुमतिंवायुदेवोविदध्यादितिवचनात् । जीवजडात्मकप्रपंचस्यमिथ्यात्वप्रतिपादनेननष्टप्रायस्यसत्यत्वस्थापनेन मल्लिका
॥ ६१ ॥ पुनःप्रसवाद्द्युभ्वादीनामिंद्रपर्यंतानांजनिता । उन्मथ्यातथ्यमिथ्यात्ववचनवचनानुत्पथस्थानितिवचनात् । ब्रह्मादेवानामित्यव्य
वहितोत्तरस्यामृचिदेवानांमध्येब्रह्मेतिवायोरेवचतुर्मुखब्रह्मत्वकथनाद्द्वाविपूर्वगत्यावाय्वादीनांजनिता । ब्रह्माणंभाविनंत्वामितिव फलसौ०
चनात् । अथवासाभ्रोष्णाभीशुशुभ्रप्रभमभयनभइत्यादिवचनात् वायुनावैगौतमेतिश्रुतेश्चमहत्तत्वाभिमानिनोवायोरप्यहंकारा
दितत्वस्रष्टृत्वसद्भावात्स्वमूलरूपापेक्षयैवमध्वेपिदिवोजनितेत्यादियोजनीयं । सर्वोत्तमत्वादिमहिम्नोज्ञापनाद्विष्णोर्जनिता । यस्ता

एकएवभवेद्विष्णुर्मतिंविप्रेषुयोदिशत् ॥ विष्णोःप्रमापनाल्लोकेसविष्णोर्जनिताश्रुतः
॥ ५१८ ॥ यस्ताविजानात्सपितुःपितेत्यस्तियतश्श्रुतिः ॥ देशकालगुणव्यासविष्णोर्ज
न्मेदमेवहि ॥ यतःप्रागसतस्सत्ताकालव्यासेनशोभते ॥ ५१९ ॥ ॥

विजानात्सपितुःपितेतिश्रुतेः । अजस्रसेवानुवृद्धप्राज्ञात्मज्ञानधूतेत्यादिवचनात् । सोमस्सोमनामकोवायुस्सोमवच्छांतमूर्तिर्मध्वा
ख्योवायोरवतारोवापवते हंसमंत्रजपादिमहिम्नोज्ञापनाद्धरिसेवार्थंपवते । देवानांमध्येब्रह्मा । विप्राणांमध्येऋषिर्ज्ञानोपदेष्टागुरु
रित्यर्थः । मृगाणांमध्येमहिषोबलदेवतात्वात् बलदायकतयामहिषेस्थितः । गृध्राणांमध्येश्येनोबलदायकतयाश्येनेस्थितः । वना
नांछेदेस्वधितिर्बलदायकतयापरश्वधेस्थितः । द्वयोःकुठारस्स्वधितिःपरशुश्चपरश्वधइत्यमरः । रेभन्गर्जनंकुर्वन् । भशब्दइतिधा ॥ ६३९ ॥
तोः । सोमश्शैत्यदायकतयासोमेस्थितस्सोमनामकोवायुः कवीनांज्ञानिनांमोक्षंप्रतिगंतॄणांपदवीर्मार्गान्मोक्षमार्गभूतार्चिरादिवि

द्युदंतदेवतालोकान्पवित्रंज्योतिश्चक्रंचात्येत्यतिक्रम्यवर्तते । सर्वस्मादुपरितनलोकाधिपतिरितिभावः । तत्पुरुषोमानवस्सएनान्ब्र
ह्मगमयतीतिश्रुतेः । ज्वलतिनिजपदेवैदिकाद्याहिविद्याइतिवचनात् । इममेवार्थंप्रपंचयितुंमतीनांजनितेत्यादि ॥५१७॥५१८॥
॥ ५१९ ॥ योमध्वस्तं ॥ ५२० ॥ त द्वाक्यं । संबंधस्सन्निधानादिकं । आदिपदेनसादृश्यंगृह्यते ॥ ५२१ ॥ दिवोजनितेत्यादे
रसयुक्तिकमर्थांतरंवक्तुमाह ॥ अथवेति ॥ तेनपवनेन । ततो वायोर्गमना च्छ्वासोच्छ्वासादिरूपेणपवनेनजीवनहेतुतैवस्यान्नतुज

द्यावापृथिव्यादिजन्महेतुत्वंब्रह्मणोगुणं ॥ ऐक्याद्घटयितुंब्रह्मादेवानामितितंजगौ ॥ ५२० ॥
बाधाभावेतुवाक्यानामर्थोवाच्योयथाश्रुतः ॥ बाधितार्थंतुयद्वाक्यंतत्संबंधादिकंवदेत् ॥५२१॥
अथवापवनंनाममरुतोगमनंकिल ॥ मतीनांजन्मकिंतेनदिवोजन्मभुवश्चकिं ॥ विष्णोर्ज
न्मततःकिंस्यात्तत्रतत्रोपदेशनात् ॥ ५२२ ॥ मध्वाख्यदिव्यरूपेणमतीनांजनकोप्यभूत् ॥
द्युभ्वादेर्जनकश्चाभून्मिथ्यात्वप्रविमोचनात् ॥५२३॥ नीचैक्यनिर्गुणत्वादेर्निराकरणतःप्रभोः ॥
विष्णोश्चजनकोप्यासीद्द्वयत्रातापिताकिल ॥५२४॥ ॥ ॥

न्महेतुता । द्युभ्वादिलोकेषुश्वासोच्छ्वासादेरप्यभावादितिभावः । किंतर्हिजन्मेत्यतआह ॥ तत्रतत्रेति ॥ ५२२ ॥ ५२३ ॥
किलेत्यनेन जनिताचोपनीताचयस्तुविद्यांप्रयच्छति । अन्नदाताभयात्राताापंचैतेपितरस्स्मृताइतिवचनंसूचयति । सर्वोत्तमेसर्वगु
णपूर्णेचहरौनीचैक्यनिर्गुणत्वादेर्भयरूपत्वात्सत्यस्यजगतोमिथ्यात्वस्यापिभयरूपत्वात्तन्मोचकोमध्वोहरेर्जगतश्चत्रातृतयापितेति

भावः ॥ ५२४ ॥ अस्मिन्पक्षे ब्रह्मादेवानामित्युत्तरश्रुतेःकासंगतिरित्यतआह ॥ स्वस्येति ॥ समध्वः ॥ ५२५ ॥ तान्विप्रान् ।
यद्बला द्यस्यसन्निहितपवनस्यबलाद्बलिनां महिषश्येनकुठारादीनांबलं सएववायुरेवबलदेवोभूदितियोजना ॥ वायोर्बलाधिदेवत्व
समर्थनायश्येनोगृध्राणामित्यादिकमुक्तमितिभावः ॥ ५२६ ॥ यद्यस्मात्षोडशः पंचदशमोक्षमार्गस्थानेभ्यउपरितनस्थानेविद्यमा
नइत्यर्थः । उत्क्रांतस्तुशरीरात्स्वाद्गच्छत्यर्चिषमेवतु । ततोतिवायोःपुत्रंचयोसौनाम्नातिवाहिकः । ततोहःपूर्वपक्षंचाप्युदक्संवत्स

स्वस्यस्वजगतश्चेत्थंस्थापनात्परितुष्यता ॥ सत्यलोकाधिपत्येचदत्तेब्रह्मापिसोभवत् ॥ ५२५ ॥
विप्राणामृषिरप्यासीद्यस्तानित्थमशिक्षयत् ॥ सएवबलदेवोभूद्यद्बलाद्बलिनांबलं ॥५२६॥ अ
त्येतिमोक्षपदवीर्यन्मोक्षाध्वसुषोडशः ॥ कालचक्रंचसेत्येतियतस्सर्वोच्चलोकगः ॥ सरे
भन्मेघगंभीरनादीयत्प्रतिगर्जति ॥ ५२७ ॥ एवंप्रत्युक्तिसद्रत्नमालालंकुरुतेगुरुं ॥
इतिवावाक्यसंदर्भस्यार्थोयौक्तोभविष्यति ॥ ५२८ ॥ पवमानःपूयमानोवायुस्सर्वस्यसंमतः ॥
तत्सूक्तेसहतेनोक्तस्सोमोन्योनपदेपदे ॥ समानाधिकृतत्वंयद्बस्त्वैक्यस्यप्रमापकं ॥ ५२९ ॥

रंतथा । तटितंवरुणंचैवप्रजापंसूर्यमेवच । सोमंवैश्वानरंचेंद्रंध्रुवंदेवींदिवंतथा । ततोवायुंपरंप्राप्यतेनैतिपुरुषोत्तममितिब्रह्मतर्कवा
क्येवायुलोकस्यषोडशत्वकथनात्षोडशइत्युक्तं । कालचक्रंकालप्रवर्तकज्योतिश्चक्रं । सवायुः ॥ ५२७॥ श्रुत्युक्तसद्रत्नमाला श्रु
त्युक्तमहिमाख्यसद्रत्नमाला ॥ ५२८ ॥ तत्सूक्ते पवमानपूयमानसूक्ते । तेनपवमानादिनाम्ना । अन्योवायोरन्यः । यद्यस्मात्

॥ ५२९ ॥ वायोस्तृतीयावतारेवादिविवादपरिहारायतमेवावतारंपुनरपिश्रुतिस्तौतीत्याह ॥ प्रावीविपदितिश्रुत्येति ॥ अनेन प्रावीविपद्वाचऊर्मिंनसिंधुर्गिरस्सोमःपवमानोमनीषाः । अंतःपश्यन्वृजनेमावराण्यातिष्ठतिवृषभोगोषुजानन्निति श्रुतिंसंगृह्णाति।अय मर्थः । गिरः क्षणेक्षणेस्वमुखान्निस्सरत्तरंगोपमवाक्यसमुदायस्य । जात्येकवचनत्वादयमर्थोलभ्यते । अन्यथासिंधुत्वस्यासंबद्ध त्वप्रसंगात् । सिंधुस्समुद्रइवविद्यमानः । सद्योरचनपटुमथापाद्यविद्यासमुद्रेतिवचनात् । यथापरिसस्तरंगाणासमुद्रआधारएवम

प्रावीविपदितिश्रुत्याप्येषोर्थस्स्पष्टमीर्यते ॥ गिरस्सिंधुस्समध्वाख्योमनीषाश्चमतोरमाः ॥ ५३० ॥
वाचश्चोर्मिनोर्मिमिवसोमस्सोमाभिमानवान् ॥ पवमानोमुख्यवायुरवतीर्णोमहीतले ॥ ५३१ ॥
प्रावीविपद्विशेषेणप्रावर्तयदितिस्फुटं ॥ अर्थःप्रतीयतेसर्वैःप्रवृत्त्यर्थोयतोविपिः ॥ ५३२ ॥ गोषुवि
द्यासुसर्वासुयानीमान्यवराणिच ॥ जनैस्सर्वैस्सबहुशोवृतत्वाद्वृजनानिच ॥ ५३३ ॥ राजसानि
कुशास्त्राणितामसान्यपिसर्वशः ॥ जानंस्तदर्थदोषंचपश्यन्सुजनचेतसां ॥ ५३४ ॥ ॥

नंतवेदवाक्यानांसकलविद्योपदेष्टृत्वादयमप्याधारइत्यर्थः । सोमस्सोमनामकः पवमानो मध्वरूपीवायुः मनीषा मनसामिष्टाः वाचो वेदब्रह्मसूत्रादिवाचः ऊर्मिंनोर्मिमिवप्रावीविप त्सकलसज्जनेषुप्रकर्षेणावर्तयत् । विपप्रवर्तनइतिधातोः । मध्वाख्यसमुद्रेवा क्यतरंगोद्बोधनायसोमरसप्रसवितृत्वेनसोमशब्दवाच्यचंद्रस्यासमर्थत्वात्सकलसच्छास्त्रप्रसवितृत्वात्सोमोप्ययमितिभावेनसोमइ त्युक्तं । भगवद्दत्तसामर्थ्येनैवगिरामुद्बोधकइतिभावः । दुश्शास्त्ररूपवाचांव्युदासायमनीषाइतिविशेषणं । त्वद्व्याख्यासिंहनादेस

पदिदद्दशिरेमायिगोमायवः । वैदिकाद्याहिविद्यास्सेवंतइत्यादिवचनात् । अस्यचब्रह्मसूत्रोपनिषदांभाष्यकर्तरिवैष्णवमतप्रवर्तके मध्वरूपेवायावेवसंभवात्समध्वइतिप्राक्प्रस्ताविततोमध्वएवात्रापिस्तूयतइतिभावः । गोषु विद्यासु । वृजना याद्दशताद्दशजनैर्वृतानि नतुसज्जनवृतानि । इमानि सुपांसुलुगितिसूत्रेणेडादेशः । अवराण्यनुत्तमानि मध्यमान्यधमानि पुराणशास्त्रादीनि । गोष्विति निर्धारणसप्तमीबलादत्रापिविद्यानामेवसंग्रहः । अवरत्वोक्त्याचदुर्विद्यात्वमपिज्ञातव्यं । जान न्मध्यमतयाचसंग्राह्याणीतिजानन् । अतस्तेषांशास्त्राणामंतःपश्य न्पूर्वोत्तरविरोधादिदोषंपश्यन् । अंतःपश्य न्स्वहृदयकमलेपरमात्मानंचपश्यन् । वृषभस्सक

अंतरातिष्ठतिहरिंपश्यंश्चवृषभःकिल ॥ वागूर्मितावाक्प्रदत्वंबुद्धिदत्वादयोगुणाः ॥ ५३५ ॥

सारासारविवेकश्चयद्गुरुत्वप्रमापकाः ॥ अतःप्रागुक्तमध्वाख्यरूपवागेववागियं ॥ ५३६ ॥

लाधिकारिवर्गाणांश्रेष्ठोमध्वाख्यःपवमानआतिष्ठति समंतात्सकलहृदयेषुतत्तच्छुभबुद्धिप्रेरकतयाचतिष्ठति । अतएवपूर्वार्धेपिमनीषाइत्युत्तमविद्यानामेवसंग्रहार्थंविशेषणं । पूर्वोत्तराविरुद्धैवहिविद्याविद्वन्मनसामिष्टानतुविरुद्धा । एवंचमनीषापदंसद्विद्यानामेवप्रापकं । इममेवार्थमभिप्रेत्याह ॥ गिरइत्यादिना ॥ ऊर्मिनेत्यस्यार्थकथनमूर्मिमिवेति । सोमाभिमानवा न्सोमलताभिमानवान् ।अभिमन्यमानशब्दस्याभिमानिन्येवमुख्यत्वात्सोमइत्युक्तमितिभावः। अनेनकर्ममीमांसात्मकवाचामपिप्रवर्तकइतिसूचयति ॥५३०॥५३१॥५३२॥५३३॥५३४॥ अंतः आतिष्ठतीतिपदच्छेदः॥५३५॥ यद्यस्माद्रूपवाग्रूपप्रतिपादकवाक्॥५३६॥ अंतरातिष्ठती



त्यस्यभावकथनायोक्तं ॥ हृदंतरिति ॥ प्राणरूपस्यनियामकरूपस्य ॥५३७॥ उन्मध्वइत्यनेन उन्मध्वऊर्मिर्वननाअतिष्ठदपोवसानो महिषोविगाहते । राजापवित्ररथोवाजमारुहत्सहस्रभृष्टिर्जयतिश्रवोबृहदितिश्रुतिंसंगृह्णाति । अयमर्थः । वसानस्सत्यलोकादागत्य भूमौनिवासंकुर्वन् । ऊर्मिःउउत्कर्षेणोरुरुर्वी मिर्मितिर्यस्यसतथोक्तः । निरुक्तत्वादुकारनाशः । अथवासर्वेभ्यऊर्ध्वमिर्मतिर्यस्यसऊर्मिः । अप्यदश्चसाम्यान्निब्रूयादितिवचनात् । इयइत्यस्योर्ध्वमित्यप्यर्थसंभवात् । महिषस्सकलाधिकारिवर्गेषुश्रेष्ठःमध्वः । वनना वननीयाभजनीयाइत्यर्थः । वनसंभक्तावितिधातोः । कृत्यलुटोबहुलमितिवचनादर्हार्थेल्युट् । अथवावन्यतेसेव्यतेभगवानाभिरिति

हृदंतःप्राणरूपस्यबहिश्चगुरुरूपिणः ॥ पवमानस्यचरितंश्रुतिरित्थमबोधयत् ॥ ५३७ ॥

उन्मध्वइतिचान्यावाक्सूक्तेस्मिंस्तौतिमद्गुरुं॥ वसानोभूतलेमध्वोमहिषःसर्वतोमहान् ॥

ऊर्मिरुत्कृष्टमतिमानूर्मिवद्वासदोन्नदन् ॥ ५३८ ॥ ॥ ॥

वननाःअपः आपर्यंतिज्ञापर्यंतिपरमात्मानमितिव्युत्पत्त्याऽप्पदवाच्याऋगादिविद्याःअपइवविगाहते । सकलविद्यास्वपिस्वमनश्चारयित्वाविचारयतीत्यर्थः । पवित्रनामकसुदर्शनचक्रमेवरथोरथइवयस्यसतथोक्तः। चक्रोपरिस्थितइत्यर्थः। चक्रस्थितंचक्रिणमष्टबाहुमितिवचनात् । सहस्रभृष्टि श्चक्रसहस्रदलेषुसहस्रधाव्याप्तस्वकरचरणशिरोरुहादिज्वालामालइत्यर्थः । भ्रस्जपाकइतिधातोर्भृष्टयःपरदहनसमर्थकिरणाः । मध्याह्नसूर्यप्रतिमप्रकाशमितिवचनेनसुदर्शनाख्यहरेरग्निवज्जाज्वल्यमानसर्वावयवत्वादितिभावः । यस्यराजा । सर्वेषांस्वामीसुदर्शनरूपीनारायणः । दुष्टसंहारकर्ताभक्तरंजकतांदर्शयितुमिदंविशेषणद्वयं । बृहत्स

युक्ति- ॥ ६४ ॥

वेभ्यउत्कृष्टं वाज मन्नवदतिप्रियंश्रवः मध्वाचार्यैस्साक्षाद्भगवन्मुखाच्छ्रुतवेदपंचरात्रादिश्रवणमारुहत् सदाविषयतयातत्रसं
निहितोभवदित्यर्थः । जयत्युत्कृष्टोवर्तते परानभिभावयतिच । स्वकृतश्रवणपरितुष्टसुदर्शनकृपयामध्वस्यपूर्वार्धोक्तसकलविद्यो
द्धारणसामर्थ्यविरोधिभूतसकलदुर्मतनिवारणसामर्थ्यंचभगवन्मुखादेवश्रुतश्रवणबलाच्छ्रवणपरितुष्टदुष्टसंहारकसुदर्शनात्मकात्यु
ग्रभगवत्कृपयाचेतिदर्शयितुमुत्तरार्धंप्रवृत्तं । दुर्मतप्रवर्तकदैतेयमुखभंगस्यसुदर्शनस्थहरिणैवकर्तव्यत्वात् । अतएवारुहज्जयतीति

वननाभजनार्हत्वादपोज्ञानप्रदत्वतः ॥ ऋगादिविद्याःसरितइवविद्वान्विगाहते ॥ ५३९ ॥
यस्मादुदस्थापयत्तास्तस्मात्सोतिष्ठयत्प्रभुः ॥ अन्यार्थेपातनंपातस्स्वस्वार्थेप्राक्षिरुत्थितिः ॥५४०॥
यस्यराजापवित्राख्यसुदर्शनरथोहरिः ॥ सहस्रारेषुयद्भृष्टिज्वालाचाग्नेस्सहस्रधा ॥ ५४१ ॥
सहस्रभृष्टिस्सबृहच्छ्रवश्श्रवणमात्मनः ॥ कृतंवाजंस्वेष्टदत्वादन्नमन्नसमंसदा ॥ ५४२ ॥ आरु
हद्विषयीभूयसदातत्रैवसंस्थितः ॥ जयत्यखिलदुर्वृत्तांस्तस्यासाध्यंनकिंचन ॥५४३ ॥ यस्यश्र
वणसंपत्त्याविष्णुःप्रीतोभवत्प्रभुः ॥ नापूर्वोनिगमोद्धारस्तस्येतिहृदयश्रुतेः ॥ ५४४ ॥ ॥

क्रियाद्वयंचेतिभावः । एतत्सर्वमभिप्रेत्याह ॥ वसानइत्यादिना ॥ ५३८ ॥ ५३९ ॥ अतिष्ठयदुदतिष्ठयदित्युच्यतइत्यर्थः
॥ ५४० ॥ यस्यमध्वस्य सहस्रारेषु सहस्रदलेषु यद्भृष्टिर्यस्यहरेर्भृष्टिः । भृष्टिपदार्थमाह ॥ अग्नेर्ज्वालेति ॥ अग्ने रग्निवज्जाज्व
ल्यमानतयाग्निशब्दवाच्यस्य ॥ ५४१ ॥ तस्यमध्वस्य ॥ ५४२ ॥ ५४३ ॥ यस्यमध्वस्य ॥ ५४४ ॥ सप्तस्वसॄरित्य

मल्लिका फलसौ० ॥ ६४२ ॥

नेन सप्तस्वसॄररुषीर्वावशानोविद्वान्मध्वउज्जभाराद्दशेकं। अंतर्यैमेअंतरिक्षेपुराजाइच्छन्वव्रिमविदत्पूषणस्येतिश्रुतिंगृह्णाति। अयमर्थः। वावशानोतिशयेनदीप्यमानः। वशकांताविितिधातोर्यङ्लुगंतस्येदंरूपं। दीप्तांगुष्ठइत्यणुमध्वविजयवचनात्। कमानंदरूपंपरमात्मानं। कंब्रह्मखंब्रह्मेतिश्रुतेः। श्रुतोपनिषत्कगत्यभिधानादितिसूत्राच्च। विद्वान्साक्षात्पश्यन्सकलवेदार्थतयापश्यंश्चमध्वः। अरुषीः रोषविरोधिभूताश्शांत्यादिगुणदायकाइत्यर्थः। वर्णव्यत्यासेनप्रलयेभगवतोतिरिक्तऋषिरहितावा। अकारवाच्यहयग्रीवाख्यऋषिसहितावा। स्वसॄस्स्वतएवार्थोपलब्धिपूर्वककर्तारंविनानित्यत्वात्स्वसामर्थ्यादेवस्वतंत्रभगवतोमुखात्सृस्सृतानिस्सृताइत्यर्थः। नित्यावेदास्समस्ताश्चशाश्वताविष्णुबुद्धिगाः। सर्गेसर्गेमुनैवेतउद्गीर्यंतेततथैवचेतिवचनात्। स्वतंत्रभगवतोमुखात्सृष्टाश्च। पंचरात्रस्यकृ

सप्तस्वसॄरितिश्रुत्यामध्वःप्रस्तूयतेस्फुटं॥ ५४५॥

त्स्नस्यवक्तानारायणस्स्वयं। अष्टादश पुराणानांकर्तासत्यवतीसुतः। कोह्यन्यःपुंडरीकाक्षान्महाभारतकृद्भवेदितिवचनाच्च। सप्तऋगादिचतुष्टय पंचरात्रपुराणभारतभेदेनसप्तसंख्याकाविद्याः। द्दशेज्ञानायोज्जभारोर्ध्वंजहार। हृग्रहोर्भश्छंदसीतिसूत्राद्धकारस्यभकारादेशः। अप्रमाणत्वपौरुषेयत्वमिथ्यात्वावेदकत्वादिनाऽधःपतिताःप्रमाणत्वादिस्थापनेनोद्धृतवानित्यर्थः। ज्ञानार्थमुद्धृतत्वात् सप्तस्वसारोअभिसंनवंतेयत्रगवांनिहितासप्तनामेतिश्रुतिसमाख्ययाचविद्याएवसप्तस्वसारः। अभिअभितःसंनवंतेस्तुवंति। यत्रयासुसप्तस्वसृषु गवांविद्यानां सप्तनामनामानि संज्ञाः निहितानिहितानि व्यत्ययोबहुलमितिवचनात् बहुवचनस्थानएकवचनं। एवंचात्रसप्तस्वसॄणां विद्यात्वेनस्पष्टमुदितत्वादत्रापिविद्याएवसप्तस्वसारः। केनसामर्थ्येनकिमर्थंचोद्धृतवान् उद्धृत्यचकिंकृतवानितिशं

यु०म० १०८

कापरिहारायोत्तरार्धस्यप्रवृत्तिः । पूषणस्य पू पूर्णौषणौबलनियमनेबलानंदौवायस्यसतथोक्तः । तस्यपरमात्मनः अप्यक्षरसाम्यान्नि ब्रूयात् षकारो बलं णकारःप्राणआत्मा णश्चनिर्वृतिवाचकइत्यादिवचनात् । उणादयोबहुलमितिसूत्रात् पॄपालनपूरणयोरितिधातोः औणादिक उप्रत्ययांतोवापूशब्दः । अस्यांव्युत्पत्तौखलप्वादितिवत् पौपूर्णौषणौयस्येतिविग्रहः । पुषपुष्टावितिधातोःपूषापूर्णःआनं दोयस्येतिवा । वव्रिःवरणमंगीकारंप्रसादमित्यर्थः । वृञ्वरणइतियुवर्णातद्धातोरादृगमहनजनःकिकिनौलिट्चेतिसूत्रात्किप्रत्यये लिट्भावेचकृतेसतिचक्रिमितिवत् वव्रिमितिशब्दोद्रष्टव्यः । इच्छन्मध्वः । निखिलमखभुजंतर्पयामासिथासावितिवचनात् । अंत रिक्षेपुराजाः जगत्सृष्टेःपूर्वजाताः। अपौरुषेयविद्यात्वेनकर्तुरभावादशरीरवाणीवदाकाशजाइत्युक्तं । आकाशाभिमानिन्यांदुर्गायांवा

वावशानोतिशयितकांतियुक्तस्सुखात्मकं ॥ कंब्रह्मपरमंविद्वान्मध्वोज्ञानदृशेसतां ॥ ५४६ ॥
ऋगाद्यास्सप्तसद्विद्यास्स्वतंत्रेशस्मृतत्वतः ॥ स्वसृस्स्वतःपूर्वजावापरमात्ममुखांबुजात् ॥ ५४७ ॥

पूर्वजाताः । प्रलयावसानेप्राक्दुर्गयावेदैर्भगवतस्स्तोत्रकरणस्यप्रमाणसिद्धत्वात् । अंतःईक्षतेसर्वमितिव्युत्पत्त्याअंतरिक्षेपरमा त्मनिवापूर्वजाताः। प्रागुक्तवेदादिविद्याः अविदत् स्वयंज्ञातवान् उपक्रमादिलिंगबलेनतत्तत्वार्थंसम्यग्ज्ञातवानित्यर्थः। अंतः सा धूनांहृदयांतःस्थित्वा ताएवविद्याएव येमे न्ययमयत् प्रेरयामासेत्यर्थः । स्वामिन्सर्वांतरात्मन्निति श्रावयास्मांश्चकिंचिदितिवच नात् । सकलवेदपुराणादीनांतत्वज्ञानवत्त्वाद्विष्णुप्रीत्यर्थंवेदादीन्स्वभाष्यादावुद्धृत्यसकलसज्जनेषुउपदिदेशेतिभावः । इममेवार्थ मभिप्रेत्याह ॥ वावशानइत्यादिना ॥ ५४५ ॥ ५४६ ॥ स्वतःब्रह्मणासहजातात्स्वमूलरूपात्पूर्वजाताः पूर्वजातःब्रह्मसृष्टि



तोपिवेदसृष्टेःपूर्वकालीनत्वात् । स्वतःपूर्वसृष्टत्वाद्वास्वसृशब्दवाच्याइत्यर्थः ॥ ५४७ ॥ अऋषीरित्यस्यार्थकथनं सर्वभिन्नाख्य हयग्रीवर्षिसंयुताइति । सर्वभिन्नत्वात्अःइतिआख्यायस्य सर्वभिन्नाख्यः । अएव ऋषिर्यासांताःअर्षयः । ताःअर्षीः ॥ ५४८ ॥ नोचेत् वर्णव्यत्यासोनोचेत् । अक्रूररूपिणीः रुषदाहइतिधातोःनविद्यतेरुषिर्दाहोयासांयाभ्योवाताअर्षयइतिव्युत्पत्त्यानित्याःशां

अरुषीस्सर्वभिन्नाख्यहयग्रीवर्षिसंयुताः ॥ तदन्यद्रष्टृशून्यावालयेप्यच्युतबुद्धिगाः ॥ ५४८ ॥
वर्णव्यत्यासतोस्त्वित्थंनोचेदक्रूररूपिणीः ॥ उज्जभारोद्धरात्मभाष्यादिग्रंथविस्तरे ॥ ५४९ ॥
असदास्यांधकूपेभ्यउज्जहेवाबलात्प्रभुः ॥ हभौनिभौहृजिछंदोभागेक्वापीतिशाब्दिकाः ॥ ज्ञा
नाययासामुद्धारस्ताविद्यानात्रसंशयः ॥ ५५० ॥ पूषणस्यहरेःपूर्णबलप्रेरणकर्मणः ॥ वव्रिंवर
णमिच्छन्सप्रसादाभिधमुत्तमं ॥ ५५१ ॥ अंतरिक्षेंतरिक्षाख्याव्याकृताकाशमानिनि ॥ दुर्गा
ननांबुजेपूर्वंसर्वस्यजगतःपुरा ॥ जाजातास्सप्तविद्यास्ताअंतस्सुजनचेतसां ॥ ५५२ ॥ मध्येये
मेन्ययमयत्स्वयंचाविदद्ंजसा ॥ आहांतरिक्षेजातत्वमनादित्वंचसूचयन् ॥ ५५३ ॥ ॥

ताश्चेत्यर्थः ॥ ५४९ ॥ असदास्यांधकूपेभ्यः असतांमायावादिप्रभृतीनां आस्याख्यांधकूपेभ्यः बलात्युक्तिबलात् । हभौ हका रभकारौ निभौसमानौ । हृजिहृजिधातौ ॥ ५५० ॥ वरणंप्रसादाभिधमितिसंबंधः ॥ ५५१ ॥ जाइत्यनूद्यजाताइत्यर्थकथनं ।

वेदद्रष्टाऋषिः ॥ ५५२ ॥५५३॥ अस्त्वस्यांश्रुतौप्रतिपादितोमध्वःआनंदतीर्थाचार्यः । तस्यपवमानत्वंकथमित्यतआह ॥ इतीति ॥ ५५४ ॥ विष्टंभोदिवइत्यनेन विष्टंभोदिवोधरुणःपृथिव्याविश्वाउतक्षितयोहस्तेअस्य । असत्तउत्सोगृणतेनियुत्वान्मध्वोअंशुः पवतइंद्रियायेतिश्रुतिंगृह्णाति । अयमर्थः । हेपवमान दिवःस्वर्गलोकस्य विष्टंभःआधारभूतः । पृथिव्याःभूलोकस्य धरुणःधारणशीलः । उभयोरपिमिथ्यात्वाख्यनाशतउद्धारात्लोकद्वयस्थसाधूनांगुरुत्वेनोद्धारकत्वाद्वा श्रीमदानंदतीर्थत्रैलोक्याचार्येतिवचनात् । उत्सः हरिस्तोत्रकरणेहरिस्तोत्रश्रवणेचउत्सुकः । नियुत्वान् नितरांहरिविषयकयोगवान् । युत्योगःतद्वानित्यर्थः । हेवा

इत्यस्तौत्पवमानस्यसूक्तेयंस्पष्टवागियं ॥ समध्वःपवमानांशस्सिद्धोविद्वाच्छिरोमणिः ॥ ५५४ ॥
विष्टंभोदिवइत्यत्राप्युक्तोमध्वोगुरुर्मम ॥ विष्टंभोधारकोयोसौदिवोधारणशीलवान् ॥ ५५५ ॥
धरुणोस्याःपृथिव्याश्चविश्वाश्चक्षितयोस्यहि ॥ हस्तेहस्तवशामिथ्यात्वाख्यबाधविमोचनात् ॥५५६॥
वायोतवांशुरंशोसौमध्वस्तच्छीलशीलवान् ॥ नितरांयोगयुक्तत्वान्नियुत्वानुत्सउत्सुकः ॥५५७॥

यो तेतवअंशुः अंशः । मूलरूपताच्छीलिकत्वप्रदर्शनायउकारः । मध्वःमध्वाचार्यः । असत् दुर्जनाज्ञेयत्वादसच्छब्दवाच्यंपरं ब्रह्म । सदिधातोर्गत्यर्थकत्वात्गत्यर्थानांचज्ञानार्थकत्वात् । गृणतेगृणीते स्वयंस्तौतीत्यर्थः । बहुरूपापेक्षयाबहुवचनं । हरिस्तुतिंकुर्वितिच इंद्रियाय सज्जनवागिंद्रियाय । हरिस्तुतिंकुर्वत्सज्जनवागिंद्रियोद्बोधनायेत्यर्थः । पवते देशेदेशेपवनंकरोति । हरिस्तुतिरूपश्रुतिपुराणपंचरात्रादिकमुपदिश्यसज्जनवागिंद्रियेणहरिंस्तावयितुंसर्वत्रसंचरतीत्यर्थः । रचनपद्मुमथापाद्यविद्यासमुद्र

वाग्देवीसासुविद्याद्रविणदेति केशवानंदतीर्थश्रीमत्पादाब्जभक्तस्स्तुतिमकृतहरेरितिवचनात् । एतएवअस्यमध्वस्य विश्वाःसमस्ताः क्षितयउत क्षितयश्च हस्तेतिष्ठंति । सकलदेशस्थसज्जनगुरुत्वात्सर्वापिक्षितिर्हस्तवशैवेत्यर्थः । जगदुतवशगमितिवचनात् । इम मेवार्थमभिप्रेत्याह ॥ **विष्टंभइत्यादिना** ॥ विष्टंभइत्यस्यार्थकथनं धारकइति । आधारइत्यर्थः । पृथिव्याःधरुणइत्यस्यार्थकथ नं धारणशीलवानिति ॥ ५५५ ॥ ५५६ ॥ ५५७ ॥ गृणतेस्तुतिंकुर्वते ॥ ५५८ ॥ इंद्रियायपवतइत्यस्याभिप्रायमाह ॥ स त्स्विति ॥ एवेत्यनेन विरक्तशिरोमणेर्मध्वस्यप्रयोजनांतरंनास्तीतिसूचयति । यतइत्यस्यअतोत्राप्युक्तोममगुरुरितिपूर्वेणसंबंधः

**हरिस्तुतिंश्रोतुकामस्सर्वैश्चादृश्यरूपतः ॥ असत्संज्ञंपरंब्रह्मगृणतेस्तोत्रसंचयैः ॥ ५५८ ॥ वागिं**
**द्रियाख्येंद्रियायपवतेप्रेरणेच्छया ॥ सत्सुवाग्वैखरीदित्सुरेवसंचरातिक्षितौ ॥ इत्यर्थोत्रयत**
**स्सम्यग्दृश्यतेपदसंपदा ॥ ५५९ ॥ सिंहंनसंतेतिवाक्मध्वस्यचरितंजगौ ॥ ५६० ॥ ॥**

॥ ५५९ ॥ सिंहंनसंतेत्यनेन सिंहंनसंतमध्वोअयासंहरिमरुषंदिवोअस्यपतिं । शूरोयुत्सुप्रथमःपृच्छतेगाअस्यचक्षसापरिपात्यु क्षेतिश्रुतिंगृह्णाति । अयमर्थः । युत्सुवाग्युद्धेषु शूरःशौर्यवान् प्रथमःनृहरिशिष्येषुआद्यमध्वाचार्यः अस्यसज्जनवर्गस्य दिवःज्ञान स्यपतिं सज्जनवर्गज्ञानदातारमित्यर्थः । अरुषं सज्जनेषुकोपरहितं । अयासं स्तंभमध्यादागतं । अयतेःकसुन्प्रत्ययः अत्वसंतस्य चाधातोरित्युपधायादीर्घः । हरिं दुर्जनसंहारकत्वाद्धरिनामकं । नसंत नसंतं नसोनासापुटयोःअंतःअवकाशोयस्यतं विवृत नासाप्रदेशमित्यर्थः । सुपांसुलुगितिसुपोलोपः । सिंहं नृसिंहं गाःविद्याःपृच्छते शिष्योभूत्वावेदादिसकलसच्छास्त्राणामर्थविचार

यतीत्यर्थः । नरसिंहोखिलाज्ञानमतध्वांतदिवाकरइति जयत्यानंदतीर्थेष्टदेवतानरकेसरीतिवचनात् पांत्वस्मानिति दूरप्रध्वस्त ध्वांतशांतप्रविततमनसाभाविताभूरिभागैरितिवचनाच्चमध्वस्यनृसिंहशिष्यत्वप्रसिद्धेः । अस्यनृसिंहस्य चक्षसा ज्ञानचक्षुषा नृसिंहो पदिष्टज्ञानेनेत्यर्थः । उक्षा ज्ञानप्रोक्षणंकुर्वन्मध्वःपरिपाति परितःसज्जनवर्गंपातीति । इममेवार्थमभिप्रेत्याह ॥ सिंहंनृसिंहमि त्यादिना ॥ विवृतनसः विवृतनासापुटस्य अंतःपरंप्रदेशः । अर्थेअर्थभूतं ॥ ५६० ॥ ५६१ ॥ ५६२ ॥ गाइत्यनूद्यगोपदो

सिंहंनृसिंहंविवृतनसोंतोयस्यतंस्तुपः ॥ लोपे नसंतेतिपदस्यार्थेदुर्जनसंहृतेः ॥ ५६१ ॥
हरिं भक्तेषुशांतत्वादरुषंरोषवर्जितं ॥ अयासमागतंस्तंभात्प्रह्लादार्थेसभांतरे ॥ अस्यस
ज्जनवर्गस्यदिवोज्ञानद्युतेःपतिं ॥ ५६२ ॥ शूरोतिशौर्यवान्युत्सुवाग्युद्धेषुमहीतले ॥ मध्वो
मध्वाभिधोयोगीश्रोतृषुप्रथमस्सदा ॥ गागोपदोक्तसद्विद्याव्यक्त्युत्कर्षायपृच्छते ॥५६३॥
अस्यप्रसादादासेनचक्षसाज्ञानचक्षुषा ॥ सत्सुबोधोक्षणंकुर्वन्नुक्षाभिक्षुगणाग्रणीः ॥ परि
पातिसतांबृंदमित्यर्थोत्रस्फुटोयतः ॥ ५६४ ॥ प्रधारामध्वइत्यत्राप्युक्तोमध्वस्यविक्रमः ॥ ५६५ ॥

क्तसद्विद्याइत्यर्थकथनं व्यक्त्युत्कर्षाय ज्ञानाभिव्यक्तेरुत्कर्षाय ऋजुयोगिज्ञानस्यानादित्वादुत्कर्षायेत्युक्तं ॥ ५६३ ॥ ५६४ ॥ प्रधा रेत्यनेन प्रधारामध्वोअग्रियोमहीरपोविगाहते । हविर्हविष्षुवंद्यइतिश्रुतिंगृह्णाति । अयमर्थः । अग्रियःश्रेष्ठः हविः विष्णोर्हवि रिवप्रियः प्रलयकालेहविर्भूतोवा । हविष्षु हविर्भूतेषुदेवेषु वंद्यःस्तुत्यः हविःज्ञानयज्ञेविष्णोःपरिवारतयाध्यानार्थमाहूयमानः ह

विष्षुवंद्यः तत्रवाहूयमानदेवेषु स्तुत्यः हविः यज्ञवेद्यां वायवायाहीतिमंत्रेणाहूयमानः । हविष्षुवंद्यः तत्रैवाहूयमान देवेषुस्तुत्योवा । मध्वःमध्वाचार्यः । प्रधाराः प्रकृष्टज्ञानधारासहिताःमहीःमहतीः अपः ज्ञानसाधनीभूताऋगादिसप्तवि द्याः विगाहते स्वबुद्ध्याअवगाहते । सूत्रभाष्यकरणार्थेविचारयतीत्यर्थः । अथवा बदरिकाश्रमगमनकाले अग्रियः स्वशि ष्याणामग्रीभूत्वागच्छन् अग्रतोगच्छन्नित्यर्थः । हविः अपारगंगापारगततुरुष्कभटैर्माऽऽयाहीत्याहूतः आहूतस्वशिष्येषुभयात्स्तु त्यश्चमध्वः प्रधारा प्रकृष्टधारारूपप्रवाहसहिताः महीः कूर्मपृष्ठवाहित्वान्महतीः अपः बहुतरगंगाजलानि विगाहते स्वशिष्या

अग्र्योमध्वोमध्वमुनिःप्रकृष्टज्ञानधारया ॥ सहिताःसप्तविद्याख्यामहीस्समहतीरपः ॥ ५६६ ॥
हविर्वंद्यस्स्वयंविष्णोर्हविःप्रियतमत्वतः ॥ ध्यातृभिर्ज्ञानयज्ञेषुहूयमानत्वतोपिवा ॥ ५६७ ॥

न्स्कंधभुजादिषुबिभ्रद्बलाद्विगाहते । अथवा प्रधाराः प्रकृष्टसूर्यधारादिसहिताः मार्गस्थसपादलक्षपर्वतविषमभूमीः अपः पर्वते तत्रतत्रगमनप्रतिबंधकीभूतनदीप्रवाहांश्चविगाहते । वारयतवारयतवैरिसुहृदोमून्मारयतमारयतपारगमनात्प्राक् । आपततआल पतइत्यघदटुच्चैःसत्वरकराजपुरुषानुचितवाचेतिमध्वविजयवचनात् । सागस्त्वादीशदेवंपरवशखननंयोव्यधादप्लवस्स्वैर्गंगातारी स्वनीत्यावशितयवनराड्वर्त्मनिक्रापिचोरान् । हंतुंयातान्मिथोहन्क्वचिदपिनिजशिष्येणचाद्रावयद्राग्योगेनासीच्छिलाभःक्वचिदपि सगणस्तंमहेक्षंदिदृक्षइतिअणुमध्वविजयवचनाच्च ॥ ५६५ ॥ इममेवार्थमनसिनिधायाह ॥ अग्र्यइत्यादिना ॥५६६॥५६७॥

युक्ति- मल्लिका

॥ ६८ ॥ फलसौ०

तेषु ध्यानायाहूयमानदेवेषु । तत्प्रतिमात्वतः देवानांमध्ये ध्येयस्यविष्णोः प्रतिमात्वतः मध्वाचार्यहृत्कमलएवसद्भिर्विष्णोर्ध्याना
दितिभावः । ताः सप्तविद्याः ॥ ५६८ ॥ ५६९ ॥ आहूतस्वसेविषु आहूतेषुस्वशिष्येषु ॥ ५७० ॥ ५७१ ॥ ५७२ ॥ तस्यमध्व
स्य । प्रसिद्धां मध्वविजयादिवाक्येषुप्रसिद्धां ॥ ५७३ ॥ अस्मभ्यमिंदवित्यनेन अस्मभ्यमिंदविंद्रयुर्मध्वःपवस्वधारया । पर्ज

हविर्ज्ञानघृतस्रावीतेषुतत्प्रतिमात्वतः ॥ स्तुत्योवातास्स्फुटीकर्तुंस्वबुद्ध्येत्थंविगाहते ॥५६८॥
प्रकृष्टसूर्यधारादिधाराविषमभूमयः ॥ यासुताःपर्वतमहीस्सर्वाःपथिपथिप्रभुः ॥ प्रकृष्टोग्रप्र
वाहाख्यधाराश्चसरितामपः ॥ ५६९ ॥ अग्र्योमध्वोमध्वमुनिर्गच्छन्बदरिकाश्रमं ॥ अग्रीभू
त्वाव्रजन्वाऽसावग्रियोग्रेसरस्तदा ॥ ५७० ॥ नेत्याहूतोम्लेच्छभटैस्तैराहूतस्वसेविषु ॥ वंद्य
स्तुल्यचरित्रश्चलीलयैवविगाहते ॥ ५७१ ॥ इदंचनाहुतंतस्ययोहाविर्वायुरूपतः ॥ आहूयतेय
ज्ञवेद्यांतत्राहूतसुरेषुच ॥ ५७२ ॥ हविष्षुवंद्यस्तस्येदङ्माहात्म्यंयुक्तमेवहि ॥ इतिवासाश्रुति
स्सत्सुप्रसिद्धांतत्कथांजगौ ॥ ५७३ ॥ अस्मभ्यमिंदवित्यत्राप्यस्मद्गुरुरभिष्टुतः ॥ ५७४ ॥

न्योवृष्टिमाँइवेतिश्रुतिंगृह्णाति । अयमर्थः । हेइंदो इष्टदानशीलत्वादिंदुनामकपवमान इंद्रयुः परमैश्वर्यसंपन्नंपरमात्मानंसदायु ॥ ६४६ ॥
नक्तीतिइंद्रयुशब्दवाच्यःयोमध्वः मध्वाख्यःतेवतारः । तेन वृष्टिमान्पर्जन्यइवअस्मभ्यं अस्मानुद्दिश्य धारया ज्ञानधारयासह

पवस्वपवनंकुरु । त्वंपवस्वेतिवा । मध्वरूपेणज्ञानोपदेशंकुर्वन्अस्मल्लोकंप्रत्यागच्छेत्यर्थः ॥ ५७४ ॥ एतदेवाभिप्रेत्याह ॥ अभी ष्टदानशीलत्वादित्यादिना ॥ ५७५ ॥ ५७६ ॥ ५७७ ॥ इदानींतप्तसुदर्शनधारणस्यापिश्रुतिमूलतांदर्शयति ॥ येनेति ॥ अनेन येनदेवाःपवित्रेणआत्मानंपुनतेसदा । तेनसहस्रधारेणपावमान्यःपुनंतुमा । प्राजापत्यंपवित्रंशतोद्यामंहिरण्मयं । तेनब्रह्म विदोवयंपूतंब्रह्मपुनीमहइतिश्रुतिद्वयंगृह्णाति । अस्यायमर्थः । देवाः ब्रह्मादिदेवाः । पवित्राख्यतप्तसुदर्शनेन । उत्तरार्धेतेनेति

अभीष्टदानशीलत्वादिंदोहेपवमानते ॥ योवतारोमहैश्वर्यवंतंनारायणंसदा ॥ युनक्तीर्ती
द्रयुर्नाम्नामध्वोमध्वइतीरितः ॥ ५७५ ॥ तेनरूपेणविज्ञानधारयासहस्रसर्वदा ॥ अस्म
भ्यमस्मानुद्दिश्यपर्जन्यइववृष्टिमान् ॥ पवस्वेतियतस्स्पष्टमर्थोत्रापिप्रतीयते ॥ ५७६ ॥
मध्वस्सत्वंपवस्वेतिवाशास्तेस्मुनिमंडली ॥ इत्यर्थोत्रयतस्स्पष्टंदृश्यतेपदसंपदा ॥ ५७७ ॥
येनदेवाःपवित्रेणआत्मानंपुनतेसदा ॥ तेनसहस्रधारेणपावमान्यःपुनंतुमा ॥ इतिश्रुतिःप्रा
कपवित्रमाम्नाऽऽहूयपुनश्चतत् ॥ सहस्रधारंयत्प्राहतत्सहस्रारमेवतत् ॥ ५७८ ॥ ॥

पूर्वोक्तसुदर्शनधारणमेवपरामृश्यपावमान्यःपुनंत्वितितस्यैवगुरुकरकमलेनप्रार्थितत्वादुभयत्रापितप्तसुदर्शनधारणमेवगम्यते । गोपीचंदनादिनास्वकरेणक्रियमाणातप्तचक्रधारणस्यपरहस्तानपेक्षणात् । आत्मानंस्वदेहंमनश्चसदानियमेनश्रवणद्वादश्यादिपुण्य दिनेषु पुनते पवित्रीकुर्वंति । गोपीचंदनादिनाप्रतिदिनंक्रियमाणचक्रधारणस्यसूचनायापिसदेत्युक्तं । तेनसहस्रधारेण सहस्रंधा

राःअराग्रधारायस्य तेन। शतधाराख्यवज्रंपरितःक्रूरधारावत् षट्कोणाकारचक्रंपरितः दलाकारेणस्थितसहस्रारेषुसहस्रसंख्याक क्रूराग्रधारायास्सत्त्वात्वज्रस्यैवशतधारत्ववत्चक्रस्यैवसहस्रधारत्वं । पूर्वोक्तपवित्रपदस्यान्यार्थत्वशंकानिरासायोत्तरार्धेचक्रासा धारणसहस्रपदेनपरामर्शः। उपलक्षणंचैतत् । सोमरसशोधकदशापवित्रस्यसदादेवांगपवित्रीकरणासंभवाच्चसुदर्शनमेवेदंपवित्र मित्यपिद्रष्टव्यं । अतोनिरवकाशेयंश्रुतिः। पावमान्यः पवमानसंबंधिन्यः युगेयुगेअवतारान्मध्वाचार्यस्यतनवइत्यर्थः । मामांपु नंतु भुजयोस्तप्तमुद्राधारणंकृत्वापवित्रीकुर्वंत्वित्यर्थः। उत्तरश्रुत्यांदशापवित्रव्यावृत्त्यर्थंतस्यैवपवित्रस्यमहिमोच्यते । प्राजापत्यं प्रजानामधिपतेर्नारायणस्यसंबंधि प्राग्विष्णुनास्वकरेणैवब्रह्मभुजेअंकनाद्वाप्राजापत्यं । शतोद्यामं शतशःउद्यामःप्रयोगकालेभ्र

देवाश्चयेनचक्रेणलांछितेनभुजेसदा ॥ स्वस्वदेहंमनश्चापिपुनतेवैष्णवोत्तमाः ॥ ५७९ ॥

मणरूपसन्नाहोयस्यतत् । हिरण्मयंसौवर्णं । इदंविशेषणत्रयंसुदर्शनस्यैवशोभते नतुदशापवित्रस्य। तेन अस्मद्भुजेंकिततप्तसौवर्ण सुदर्शनचक्रेण । सुवर्णेनचक्रकरणस्यआगमिकत्वात् ब्रह्मविदः अतप्ततनूर्नतदामोअश्नुतइत्यकरणेप्रत्यवायप्रतिपादकवेदवाक्य विदः वयं पूतं स्वभावतएवपवित्रं ब्रह्मवेदं पुनीमहे विष्णुचक्रांकरहितेनविप्रेणपठितवेदस्यशूद्रस्पृष्टब्राह्मणवत्अपवित्रत्वात्तप्त चक्रांकनंकृत्वास्मत्पठितवेदंपवित्रीकुर्मइत्यर्थः। इममेवार्थंमनसिनिधायाह॥ इतिश्रुतिरिति ॥ य द्यस्मात्। त त्तस्मात् । तत्पू र्वार्धोक्तंपवित्रं । वज्रस्यशतधारशब्दवत्सहस्रधारस्यैवसहस्रधारत्वौचित्यादितिभावः ॥५७८॥ पूर्वार्धस्यार्थमाह ॥ देवाश्चेति ॥ ॥ ६४७॥

आत्मपदस्यमनोवाचित्वाद्देहवाचित्वाच्चदेहंमनश्चापीत्युक्तं ॥५७९॥ उत्तरार्धस्यार्थमाह ॥तेनेति॥ पावमान्यइत्यस्यार्थकथनंमरु तोमूर्तयइति। पवमानस्येमाःपावमान्यः । मुनिः एतच्छ्रुतिवाक्यद्रष्टा । अत्रश्रुतौ ॥ ५८० ॥ फलितमाह ॥ एवंचेति ॥५८१॥ वृद्धाः अद्यापिगोपीचंदनैर्यच्चक्रलांछनंकुर्वते तदितिसंबंधः। सदासुदर्शनधारणस्यगोपीचंदनेनैवसंभावितत्वादितिभावः॥५८२॥ तप्तसुदर्शनधारणविषयेपिसदापदंयोजयति ॥ देवास्त्विति ॥ शुभदिने श्रवणद्वादशीप्रथमैकादश्यादिदिने । तेनचक्रेण । मृदा

तेनचक्रेणमरुतोमूर्तयोमांपुनंत्विति ॥ मुनिःप्रार्थयतेकश्चिदित्यर्थोत्रप्रदृश्यते ॥ शब्दान
नुपमृद्यैवशब्दशब्दार्थवेदिभिः ॥ ५८० ॥ एवंचसर्वदेवानांकार्यंचक्रादिधारणं ॥ प्रा
र्थ्यंमहर्षिभिःकोवामानवोन्योनमानयेत् ॥ ५८१ ॥ सदेत्युक्त्याचयद्गोपीचंदनैश्चक्रलां
छनं ॥ अद्यापिकुर्वतेवृद्धास्तच्चश्रुतिरसूचयत् ॥ ५८२ ॥ देवास्तुतप्तचक्रांकयोग्येशुभ
दिनेसदा ॥ तप्तेनतेनपुनतेमृदातल्लांछनैस्सदा ॥ ५८३ ॥ इतिपूर्वार्धवाक्यार्थोलभ्य
तेपदसंपदा ॥ उत्तरप्रार्थनाहेतुरूपयाचार्थसंपदा ॥ ५८४ ॥ ॥

गोपीचंदनेन । तल्लांछनैः चक्रलांछनैः। सदाप्रतिदिनं ॥ ५८३ ॥ सदापदस्योक्तरीत्यातप्तसुदर्शनधारणविषयेगोपीचंदनेनसुद र्शनधारणविषयेचयोजनासंभवात्पदसंपदेत्युक्तं । ननुतप्तेतिपदाभावात्तप्तसुदर्शनधारणस्यकथमिदंवाक्यंप्रापकमित्यतआह ॥ उत्तरेति ॥ उत्तरप्रार्थना उत्तरार्धोक्तप्रार्थना। तस्याहेतुरूपया हेतुत्वरूपया । प्रार्थनायांहेतुत्वं गुरुकरपंकजेनक्रियमाणतप्त

सुदर्शनधारणस्यैवोचितं नतुगोपीचंदनादिनास्वकरेणक्रियमाणसुदर्शनधारणस्य । एवंचोत्तरार्धोक्तप्रार्थनाबलात्पूर्वार्धेपितप्तसु
दर्शनधारणस्यैवप्रस्तुतिः । अन्यथापूर्वोत्तरार्धयोर्वैयधिकरण्यप्रसंगादितिभावेनोक्तमर्थसंपदेति ॥ ५८४ ॥ अतः पूर्वोत्तरार्धयो
रैकार्थ्यावश्यंभावात् । बलात् युक्तिबलात् ॥ ५८५ ॥ परंकेवलं पवित्रं पवित्रपदवाच्यं । देवऋष्यादिदेहंपावयतोस्मदुक्तसुदर्श
नस्यैवपवित्रपदयोगार्थसंभवात् सोमरसमात्रश्रपणहेतुभूतदशापवित्रस्यसोमरसशोधयितृत्वमात्रसद्भावेपि सोमरसपावयितृत्वा
भावात् । देवाद्यंगपावयितृत्वस्यसुतरामभावाच्चचक्रमेवात्रोक्तंपवित्रमितिभावः । अतएवग्रंथकारःक्षालनाभावेस्पर्शायोग्यतया

अर्थ्यमानंतुमुनिनातप्तचक्रस्यलांछनं ॥ गुरूणांकरकंजेनधार्यंचक्रंतदेवहि ॥ अतःपूर्वा
र्धवाक्येपितप्तांकप्रस्तुतिर्बलात् ॥ ५८५ ॥ मुनींश्चदेवदेहांश्चशुद्धीकुर्वत्सुदर्शनं ॥ परं
पवित्रमत्रस्यान्नान्यत्पुंमातिनिर्मितं ॥ ५८६ ॥ अतोप्यन्यार्थकथनंव्यर्थमासीद्दुरात्मनां ॥
सदेतिचपदंकुप्येत्पवित्रांतरकल्पने ॥ ५८७ ॥ ॥ ॥

स्वतोपवित्रपटखंडरूपदशावस्त्रेपवित्रपदवाच्यसुदर्शनसन्निधानादेवपवित्रंतइतिमंत्रस्यविनियोगइतिवक्ष्यति ॥ ५८६ ॥ अतः
उक्तयुक्त्याअस्यांश्रुतौसुदर्शनस्यैवपवित्रपदवाच्यत्वात् । अन्यार्थकथनं पवित्रंतेविततमित्यस्यांऋचिपवित्रपदस्यदशापवित्ररू
पार्थकथनं । पवमानेप्राक्प्रस्तावितपवित्रस्यैवपूयमानेप्रस्ताव्यत्वादितिभावः । तर्ह्यत्रापिदशापवित्रस्यैवप्रस्तावोस्त्वितिचेत्न । ॥ ६४८ ॥
दूषितत्वात् । दूषणांतरंचाह ॥ सदेति ॥ यज्ञएवसंभावितदशापवित्रस्यसार्वकालीनत्वायोगात् दिविस्थदेवेषुप्रायशोसंभवा

च्चेति ॥ ५८७ ॥ अतः पूर्वश्रुतिसमाख्यानात् । आयुधं सुदर्शनं । कथंतर्हिदशापवित्रपरतयाअस्यमंत्रस्यविनियोगइत्यतआह ॥ तस्येति ॥ तस्यसुदर्शनस्य संनिधेः दशापवित्रेसन्निधानात् । छिद्रेवस्त्रेपवित्रीकरणशक्त्याधानायसहस्रछिद्रसहितभगवत्सुदर्शनस्यैवावश्यंसन्निधेयत्वादितिभावः । अन्यत्रदशापवित्रे । अन्यार्थकमंत्रस्यान्यत्रविनियोगेदृष्टांतमाह ॥ अन्नमंत्रणइति ॥ सौरमंत्रवत् गायत्रीमंत्रवत् । सूर्यार्थकत्वसूचनायसौरेत्युक्तं ॥ ५८८ ॥ व्यासनिघंटुपर्यालोचनयापिसुदर्शनमेवपवित्रपदवाच्य

अतश्श्रुतिःपवित्रंतइत्यत्रापिसुदर्शनं ॥ प्रभोरायुधमेवाहनियोगस्तस्यसन्निधेः ॥ अन्यत्रापिभवेदन्न
मंत्रणेसौरमंत्रवत् ॥ ५८८ ॥ पवित्रंचरणंनेमिररिश्चक्रंसुदर्शनं ॥ सहस्रारंप्राकृतघ्नंलोकद्वारंमहौ
जसं ॥५८९॥ विष्णुचक्रस्यनामानिपर्यायेणनिबोधमे ॥ इतिपाद्मोक्तगौरीशवाग्घिलिंगानुशासनं
॥ ५९० ॥ पावमानीतनुश्श्रेयंस्यादाचार्यस्वरूपिणी ॥ यास्यवैष्णवधर्मस्यसर्वत्रापिप्रवर्तिका ॥ ५९१ ॥
साचप्रसिद्धेर्बदरीमध्येमुनिमनःप्रिया ॥ व्यासकैंकर्यधुर्याचमाध्वीभवितुमर्हति ॥ ५९२ ॥ ॥

मित्याह ॥ पवित्रमिति ॥ गौरीशस्य लिंगपदवाच्यत्वात्लिंगानुशासनमित्युक्तं । अमरसिंहादिग्रंथंलिंगानुशासनमितिमानयतामहालिंगानुशासनमिदंकथंनमाननीयमितिसूचनायलिंगानुशासनमित्युक्तं । अनेन चरणंपवित्रंविततंपुराणंलोकस्यद्वारमर्चिमत्पवित्रमितिश्रुतिद्वयंसुदर्शनविषयमेवेतिसूचितंभवति । परोदीरितपवित्रेचरणपदाप्रयोगाल्लोकद्वारत्वायोगात् अनंतासनलोकगमनायांधेतमसिद्वारंकृतवतश्चक्रस्यैवतद्योगाच्च ॥ ५८९ ॥ ५९० ॥ आचार्यस्वरूपिणी जगद्गुरुस्वरूपिणी । मुनिभिस्तत्करकृत

युं॰म॰ १०९

पवित्रधारणेनस्वशुद्धेःप्रार्थितत्वात् । नतुबलकार्यायप्रवृत्ताहनूमदादितनुरित्यर्थः । यातनुः । अस्य तप्तमुद्राधारणाख्यस्य । प्रसिद्धेःलोकवेदयोः ॥ ५९१ ॥ ५९२ ॥ मौल्यं मूलस्यभावंमौल्यं मूलकारणत्वमित्यर्थः ॥ ५९३ ॥ ज्ञानकार्यं ज्ञानमेवकार्यं यस्यतत्तथोक्तं ॥ ५९४ ॥ पूर्वोक्तपरिशिष्टश्रुतावपितप्तसुदर्शनधारणस्यैवप्रस्तुतिरितिसूचनायस्पष्टंतप्तसुदर्शनधारणप्रतिपादकं तस्यैवऋषेःसंहितास्थंवचनमप्याह ॥ यत्तइति ॥ पुनीहीति पुनीहिनइतिश्रुत्या । अयमर्थः । हेअग्ने अंगभूतरुद्रादिदेवनेतृत्वे नाग्नौसन्निहितत्वेनचअग्निपदवाच्यपवमान । कुंडस्थितलक्ष्म्यांनारायणसमागमेनविष्णुकुमारतयाजातस्याभिनवाग्नेःविष्णुंप्रतिक्रि



युगेयुगेऽवतीर्णानांबहुत्वमपियुक्तिमत् ॥ द्विविधस्यास्यधर्मस्यमौल्यंसामूर्तिरर्हति ॥ ५९३ ॥
बलकार्याणिरूपाणिवायोस्संतुसहस्रशः ॥ ज्ञानकार्यंतुतद्रूपमिदमेवप्रदृश्यते ॥ ५९४ ॥ यत्ते
पवित्रमर्चिष्यग्नेविततमंतरा ॥ ब्रह्मतेनपुनीहीतितस्यैवप्रार्थनांतरं ॥ ५९५ ॥ ॥

यमाणहोमयोग्याग्नौतांत्रिकैःसन्निधाप्यमानत्वात्पवमानसूक्तत्वाच्चअग्निस्थपवमानाग्नेरेवात्रग्रहणं । तेतवअर्चिषिज्वालायां अंतराअंतः विततं विशेषेणततं । तापाययावत्तापंविस्तारितमित्यर्थः । यत्पवित्रं पावमानत्वात् पविवत्वज्रवत्त्रातृत्वाद्वापवित्रपदवाच्यंसुदर्शनं । वस्त्ररूपदशापवित्रस्यअग्निर्ज्वालांतर्निवेशनेदाहेननाशावश्यंभावात् अग्निज्वालांतर्निवेशनेप्यनश्यत्पवित्रंचक्रमेवभवेत् । दशापवित्रेअग्निज्वालांतर्निवेशनस्यशिष्टैरक्रियमाणत्वात् चक्रेतप्तमुद्राधारणायक्रियमाणत्वादपिचक्रमेवेदंभवेत् । तेन ॥ ६४९ ॥
अस्मद्गुर्जेकितेनवैष्णवाग्नौसंस्कृतसुदर्शनेन । नइत्युक्त्यास्वसंबंधस्याप्यावश्यकत्वात् नः अस्माकं ब्रह्म वेदं अस्मत्पठितवेदमित्यर्थः । पुनीहिपवित्रंकुरु । विष्णुचक्रलांछनाभावेअवैष्णवतयावेदेअनधिकारित्वेनअनधिकारिपठितवेदस्यचशूद्रपठितवेदस्येवशूद्रस्पृष्टब्राह्मणवदपवित्रत्वात्तप्तसुदर्शनधारणेनास्मत्पठितंवेदंपुनीहीत्यर्थः । अवैष्णवस्यवेदेपिह्यधिकारोनविद्यतइतिवचनात् ॥ ५९५ ॥ इममेवार्थमभिप्रेत्याह ॥ सख्युरित्यादिना ॥ गुरुंमध्वरूपिणंपवमानं ॥ ५९६ ॥ नोचेत् अत्रत्यपवित्रपदवाच्यंचक्रंनोचेत् दशापवित्रमुच्यतेचेदित्यर्थः । त्वां त्वदभिमतदशापवित्रंदद्यात् त्वदभिमतदशापवित्रस्यात्रग्रहणेऽनुपपत्तिंदर्शयित्वाप

सख्युरग्रेहृदिगतमग्र्याख्यंतंगुरुंप्रति ॥ स्पष्टीकर्तुंमहाधर्मंतप्तचक्रांकधारणं ॥ ५९६ ॥
अग्निश्चदद्यात्त्वांनोचेत्पूर्वावाक्प्रधक्ष्यति ॥ अन्यथावाक्यभेदस्स्यात्सूक्तंचैतत्प्रकुप्य
ति ॥५९७॥ आग्नेतेऽर्चिषियच्चक्रमंतराविततंकृतं ॥ तत्तेनतेनचक्रेणब्रह्मवेदंपुनीहिनः
॥ ५९८ ॥ इतिप्रार्थनरूपोर्थोयस्स्पष्टोत्रप्रतीयते ॥ अतश्चक्रांकशून्यानांवेदाभ्यासोवृ
थाभवेत् ॥ ५९९ ॥ यदाचक्रांकशून्योक्तवेदस्याप्यपवित्रता ॥ तदातेषांतुमूर्खाणांही
नादपिचहीनता ॥ किंवाच्यातेनचंडालादधमंतंस्मृतिर्जगौ ॥ ६०० ॥ ॥

राभवजातलज्जयाअग्नौपतंतंत्वांदद्यादितिवा। पूर्वा अस्माभिः पूर्वमुदाहृता । वाक् येनदेवाइतिवाक् । अन्यथा पूर्ववाक्येपिसुदर्शनाग्रहणेवाक्यभेदः उद्दिष्टपरिशिष्टवाक्ययोरर्थभेदः । सूक्तं एकार्थप्रतिपादकवाक्यसमुदायात्मकंसूक्तं ॥ ५९७ ॥ यद्यस्मात् ॥ ५९८ ॥ अतः चक्रांकाभावेपठितवेदापावित्र्यस्यश्रौतत्वात् ॥ ५९९ ॥ तेन चक्रांकशून्यस्याधमाधमत्वेनस्मृतिः अवैष्णवस्तु

योविप्रश्चंडालादधमःस्मृतइत्यादिका ॥ ६०० ॥ तामेवस्मृतिमुदाहरति ॥ प्रतप्तमित्यादिना ॥ ६०१ ॥ ६०२ ॥ ६०३ ॥
॥ ६०४ ॥ अतः प्रतप्तमित्यादिपद्मपुराणेवासिष्ठस्मृतौ येनदेवाइत्यादिश्रुतौचोक्तरीत्या अचक्रधारिणांनिंदनात् ॥ ६०५ ॥
अग्निश्चदह्यादितिप्रागुक्तमर्थंस्पष्टयति ॥ किंचेति ॥ श्रुत्यंतरप्रोक्तं प्राजापत्यमितिश्रुतौप्रोक्तं । धारणाय भुजयोर्धारणाय ।

प्रतप्तंबिभृयाच्चक्रंशंखंच भुजमूलयोः ॥ श्रौतस्मार्तादिसिद्ध्यर्थंमंत्रसिद्ध्यर्थमेवच ॥ ६०१ ॥
अचक्रधारिणंविप्रंदूरतःपरिवर्जयेत् ॥ श्वपाकमिवनेक्षेतलोकेविप्रमवैष्णवं ॥ ६०२ ॥ यस्तु
नारायणंदेवंब्रह्मरुद्रादिदैवतैः ॥ समत्वेनाभिमन्येतसपाषंडोनरस्स्मृतः ॥६०३॥ योमोहाद्वि
ष्णुमन्येनहीनदेवेनदुर्मतिः ॥ साधारणंसकृद्ब्रूतेसोंत्यजोनांत्यजोंत्यजः ॥ ६०४ ॥ अतश्श्रुते
स्स्मृतेश्चैकोमार्गस्सद्धर्मरक्षणे ॥ ६०५ ॥ किंचश्रुत्यंतरप्रोक्तंशतोद्यामंहिरण्मयं ॥ पवित्रा
ख्यंविष्णुचक्रंधारणायविनिर्मितं ॥ यज्ञरक्षाकरंसोग्निस्सहृतेस्वोदरेर्पितं ॥ ६०६ ॥ अन्य
त्तुकुपितस्सर्वंदहेद्वायुसखोह्यसौ ॥ अतोर्थांतरवार्तात्रदग्धैवाभून्नसंशयः ॥ ६०७ ॥ ॥

सुदर्शनेनयज्ञघ्नराक्षसवधकरणस्यपुराणादौश्रवणात्यज्ञरक्षाकरमित्युक्तं । सः यज्ञांगभूतः । स्वोदरे स्वज्वालामध्ये ॥ ६०६ ॥
अन्यत् । वस्त्ररूपदशापवित्रं दर्भरूपकर्मांगपवित्रं तंतुरूपपंचर्वांगपवित्रं । धारणायकृतसौवर्णसुदर्शनमेवहिरण्मयमितिश्रुतिः ॥ ६५० ॥
यत्तेपवित्रमर्चिष्यग्नेविततमंतरेतिश्रुतिश्चशंसति । तस्यैवहिरण्मयत्वसंभवात् अग्निज्वालांतःप्रवेशसंभवाच्च अन्यस्यहिरण्मयत्वा

भावात् अग्निज्वालांतःप्रवेशासहत्वाच्चनात्रप्रतिपादनावसरइतिभावः । वायुरूपमध्वाचार्येणसुदर्शनधारणस्यैवप्रतिष्ठापितत्वात्
तदनुकूलएवाग्निः नत्वन्यस्येतिसूचनायवायुसखइत्युक्तं ॥ ६०७ ॥ धारणयोग्यचक्रस्यहिरण्मयत्वंपद्मपुराणवचनेनदर्शयति
॥ चक्रमिति ॥ तत्तस्मात् श्रुतिस्मृत्यनुकूलत्वात् । मेममप्रमेयं ॥ ६०८ ॥ ६०९ ॥ यत्तेपवित्रमर्चिष्यग्नइत्यत्रोक्ताग्निपदं उ
भाभ्यांदेवसवितः इत्यादौउक्तसवित्रादिपदंच पवमानसूक्तत्वात्पवमानेपियोगसंभवाच्चवायुपरमेवेत्याह ॥ पवमानपदैरित्या
दिना ॥ वायुवाचकमध्वादिपदसंग्रहायबहुवचनं । तत्तत्पदोदितः अग्निसवित्रादिपदोदितः । स्वातंत्र्यस्यशब्दवृत्तिकारणत्वात् ।

चक्रंसुवर्णतःकुर्याच्छंखंतुरजतेनच ॥ इतिपौराणिकीगोष्ठीतत्सर्वंमेमनोरमं ॥ ६०८ ॥ एवं
चतस्रचक्रंमेनांहोदाहायकेवलं ॥ विरुद्धपक्षकक्षाणामपिदाहमचीक्रपत् ॥६०९॥ पवमानपदै
स्सोमपदेनचयईर्यते ॥ सएवाग्निसवित्रादौस्थितस्तत्तत्पदोदितः ॥ ६१० ॥ अंगीभूताग्निनेतृ
त्वादंगेष्वग्निशिखानयन् ॥ प्राणाग्निरितियःप्रोक्तस्सएवाग्निस्थितामलः ॥ ६११ ॥ ॥

योगंचप्रदर्शयति ॥ ६१० ॥ अंगीभूतेति ॥ अप्रधानभूताग्निनेतृत्वादित्यर्थः । योगांतरंचाह ॥ अंगेष्विति ॥ करचरणाद्यंगे
ष्वित्यर्थः । अग्निशिखामितियोग्यतयासंबंधः । संतापयतिस्वंदेहमापादतलमस्तकादितिवचनात् । हृदयस्थिताग्नेःनानानाडीषु
व्यानाख्यवायुसहायेनैवगमनात्अंगेष्वग्निशिखांनयन्नित्युक्तं । अनेन अंगंनयन्निति अंगेषुनयन्नितिचाग्निपदस्ययोगःप्रदर्शितः ।
निरुक्तत्वादकारलोपोबिंदुलोपश्च । नीपूप्रापणइतिधातोरौणादिकोडिप्रत्ययः । रूढिंचप्रदर्शयति ॥ प्राणाग्निरिति ॥ ६११ ॥

अनलपदस्यसवितृपदस्यचयोगमाह ॥ अलंभावइति ॥ अस्यपवमानस्य । सतांपवित्रीकरणेअस्यअलंभावःयतोनेतिसंबंधः । उपस्थातृषु प्रातःकालादिसंध्याकालेषुसूर्योपस्थानंकुर्वत्सु । उभाभ्यांदेवसवितःपवित्रेणसवेनच । मांपुनीहिविश्वतःइतिश्रुतौ सवितः पुण्यस्रष्टः हेदेवपवमान पवित्रेण संध्यांगतयाबाहुमूलेधृतचक्रेण सवेन सवनेन संध्यांगभूतप्रातःकालादिकालेनेत्युभाभ्यां मां विश्वतःसर्वतःपुनीहि । अवैष्णवसंध्याकरणदोषात् कालातिक्रमदोषाच्च पवित्रीकुर्विति त्रिषुवर्णेषुक्रियमाणमध्वाचार्योक्तचक्रधारणपूर्वकसंध्यावंदनेनस्वपावित्र्यंपवमानंप्रतिप्रार्थयमानेन तस्मिन्सवितृपदप्रयोगादुपस्थातृषुयःपुण्यराशिंसूतइत्युक्तं । अनेन पवित्रनामकसुदर्शनधारणस्यापिउभाभ्यामितिसहैवगृहीतत्वात् कालत्रयेपिक्रियमाणसंध्यावंदनस्यगोपीचंदनेनक्रियमाणसु

अलंभावोयतोनास्यपवित्रीकरणेसतां ॥ उपस्थातृषुयःपुण्यराशिंसूतेदिनेदिने ॥ ६१२ ॥
सएवसवितासोमबिंबस्थस्सोमनामकः ॥ समत्वाह्लादकारित्वपूर्वैश्शुभगुणैःप्रभुः ॥ ६१३ ॥

दर्शनधारणपूर्वकत्वनियमोपिसूचितोभवति । पुण्यराशिमित्युपलक्षणं । त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैःसोमधामभिः । अग्नेदक्षैःपुनीहिनः इतिश्रुतौसंध्यावंदनांगभूताहोरात्रिसंध्याप्रवर्तकसवितृसोमाग्निषुस्थितंपवमानदेवंतत्तत्पदैःसंबोध्य वर्षिष्ठैः बहुवर्षस्थायिभिः अनाद्यनंतकालीनैरित्यर्थः । दक्षैः कामान्नादिसकलाभीष्टदानकुशलैः त्रिभिर्धामभिः तदुक्तरीत्याकृतविष्णुप्रीतिकरसंध्यावंदनत्रयीफलभूतैः वैकुंठश्वेतद्वीपानंताख्यत्रिसंख्याकलोकैः त्वंनःपुनीहि । उक्तलोकत्रयंदत्वासंसाराख्यमलंविनाश्यपवित्रीकुर्विति मोक्षरूपफलस्यापिप्रार्थितत्वान्मौक्तभोगराशिंचसूतेसुनोति । अप्रधानभूतमुक्तवर्गेषुतंनयतीतिव्युत्पत्त्याच सवित्रादिपदवाच्य ॥ ६५१ ॥

त्वंद्रष्टव्यं । अनेन वायोरपि वायुश्चतदनुज्ञयेतिस्मृत्युक्तमोक्षदातृत्वमपिस्पष्टीकृतंभवति । पूर्वैरित्यनेन सु प्रसवैश्वर्ययोरितिधातुनिष्पन्नसोमशब्दार्थोगृह्यते ॥६१२॥६१३॥ यद्यस्मात् । तेनकारणेन । इयं पवमानपूयमानरूपा ॥६१४॥ अतः वायोरेवपवमानसूक्तप्रतिपाद्यत्वात् । सएववायुरेव । मध्वरूपधृक्गुरुर्भूत्वासतां मुनीनांभुजेधारयतीतिसंबंधः । अन्यत्र मध्वरूपादन्यत्रगुरुषु

पवमानस्ययत्सूक्तेपवमानप्रशंसनं ॥ उचितंतेनवायुश्चवायुगोहरिरेवच ॥ सूक्तस्थिताखिलर्गिभश्चस्तुत्योनान्यस्यवागियं ॥ ६१४ ॥ अतोग्रावाहितंचक्रंस्वार्चिषापुण्यदायिना ॥ सएवतसंकुरुतेगुरुर्भूत्वासएवच ॥ ६१५ ॥ सतांभुजेधारयतिमुनीनांमध्वरूपधृक् ॥ सएवधारयेद्वायुरन्यत्रगुरुषुस्थितः ॥ ६१६ ॥ मध्वाख्यगुरुरूपेणपूयमानस्सपावयन् ॥ धारयेत्तानिरूपाणिमध्वस्यैवबहूनितत् ॥ ६१७ ॥ शिष्टाचारादद्दृष्टस्ययदावेदस्यकल्पना ॥ स्पष्टदृष्टश्रुतिंसोतिबलवान्नैवमुंचति ॥ ६१८ ॥ अतश्श्रुतिरभूदेषातप्तचक्रांकशासनं ॥ लिंगानुशासनंतूक्तंशासनद्वयसंपदा ॥ सह्रितांवैष्णवग्रामसीमांकोवानमानयेत् ॥ ६१९ ॥

मुद्राधारणकर्तृषुपरमहंसेषुस्थितःअंतर्यामी ॥ ६१५ ॥ ६१६ ॥ तानि तत्रतत्राग्निषुस्थित्वासुदर्शनस्थापकानि दैनंदिनमध्वरूपैः सत्सुसाक्षान्मुद्रांकनकर्तृणि तत्रतत्रमुद्रांकनंकुर्वत्सुगुरुषुप्रेरकतयास्थितानिच । तत्तस्मात् । अतएवश्रुतौपावमान्यइतिबहुवचनमितिभावः ॥ ६१७ ॥ सःशिष्टाचारः ॥ ६१८ ॥ लिंगानुशासनं पवित्रंचरणंनेमिरित्यादिकं ॥ ६१९ ॥ तेन परिशिष्टवाक्ययो

रेकार्थत्वेन । तत्परिशिष्टवचनं । नकेवलंशिष्टाचारः किंतुपरिशिष्टवचनाख्यशिष्टवचनमप्यस्तीतिभावः ॥ ६२० ॥ तत् संहि तापरिशिष्टसूक्तं । तच्छेषत्वं संहिताशेषत्वं । संहितोक्ततापाख्यार्थस्यशेषभूतोदेहपावित्र्याख्यार्थएवपरिशिष्टेयतःकथ्यते अतःसंहि तापरिशिष्टाभ्यांतापेनदेहपावित्र्यमुक्तमितिशेषः । एवंच यत्तेपवित्रमर्चिषीतिसंहितायामुक्ततप्तचक्रधारणाख्यार्थस्यैव कैःकैर्धृत मित्याकांक्षायांशेषभूतोर्थःपरिशिष्टेप्रतिपाद्यते । अतएवतत्परिशिष्टं । तस्मादुभयत्रापितप्तमुद्राधारणस्यैवप्रस्तुतिरितिभावः ।

प्रास्तवंयत्संहितायत्तदेवपरिशिष्टवाक् ॥ प्रपंचयतितेनाभूत्तच्चशिष्टानुशासनं ॥ ६२० ॥
प्रपंचनंचप्रोक्तस्यतेनवाक्यद्वयेनतत् ॥ तप्तचक्रांकनंवक्तिवाक्यभेदोनचेद्भवेत् ॥ यतोस्य
परिशिष्टत्वंतच्छेषत्वमपेक्षते ॥६२१॥ तापेनदेहपावित्र्यकृत्पवित्रंजगत्त्रये ॥ नापरंविद्यते
विष्णुचक्राद्वैष्णवसंमतात् ॥ ६२२ ॥ जडर्चांश्रवणायोगान्नताःप्रार्थयतेमुनिः ॥ ऋगर्थी
भूतपवनतनूनांप्रार्थनंहितत् ॥ ६२३ ॥ ॥ ॥

तत्पावित्र्यहेतुभूतं ॥ ६२१ ॥ तापेनदेहपावित्र्यंसुदर्शनेनैववक्तव्यं नान्येन । दशापवित्रादिनादेहतापाभावात् । तापहेतुभूतंपवि त्रंचसुदर्शनमेवभवेत् नान्यदितिभावः ॥ ६२२ ॥ ननुपावमान्यइत्यत्र पवमानतनूनांकुतोग्रहणमित्यतआह ॥ जडर्चामित्या दिना ॥ श्रवणायोगात् प्रार्थनावचनश्रवणायोगात् । ताः पवमानप्रतिपादकऋचः । उपलक्षणंचैतत् । इंद्रःसुनीतीसहमापु नातु सोमःस्वस्त्यावरुणःसमीच्येत्यादिवचनात्इंद्रसोमादिपदवाच्यपवमानतनूनामेवप्रार्थनात् पूर्वश्रुतावपितासामेवप्रार्थनमिति

युक्ति- रेकार्थत्वेन । तत्परिशिष्टवचनं । नकेवलंशिष्टाचारः किंतुपरिशिष्टवचनाख्यशिष्टवचनमप्यस्तीतिभावः ॥ ६२० ॥ तत् संहि मल्लिका
तापरिशिष्टसूक्तं । तच्छेषत्वं संहिताशेषत्वं । संहितोक्ततापाख्यार्थस्यशेषभूतोदेहपावित्र्याख्यार्थएवपरिशिष्टेयतःकथ्यते अतःसंहि
॥ ७४ ॥ तापरिशिष्टाभ्यांतापेनदेहपावित्र्यमुक्तमितिशेषः । एवंच यत्तेपवित्रमर्चिषीतिसंहितायामुक्ततप्तचक्रधारणाख्यार्थस्यैव कैःकैर्धृत फलसौ०
मित्याकांक्षायांशेषभूतोर्थःपरिशिष्टेप्रतिपाद्यते । अतएवतत्परिशिष्टं । तस्मादुभयत्रापितप्तमुद्राधारणस्यैवप्रस्तुतिरितिभावः ।

प्रास्तवंयत्संहितायत्तदेवपरिशिष्टवाक् ॥ प्रपंचयतितेनाभूत्तच्चशिष्टानुशासनं ॥ ६२० ॥
प्रपंचनंचप्रोक्तस्यतेनवाक्यद्वयेनतत् ॥ तप्तचक्रांकनंवक्तिवाक्यभेदोनचेद्भवेत् ॥ यतोस्य
परिशिष्टत्वंतच्छेषत्वमपेक्षते ॥६२१॥ तापेनदेहपावित्र्यकृत्पवित्रंजगत्त्रये ॥ नापरंविद्यते
विष्णुचक्राद्वैष्णवसंमतात् ॥ ६२२ ॥ जडर्चांश्रवणायोगान्नताःप्रार्थयतेमुनिः ॥ ऋगर्थी
भूतपवनतनूनांप्रार्थनंहितत् ॥ ६२३ ॥ ॥ ॥

तत्पावित्र्यहेतुभूतं ॥ ६२१ ॥ तापेनदेहपावित्र्यंसुदर्शनेनैववक्तव्यं नान्येन । दशापवित्रादिनादेहतापाभावात् । तापहेतुभूतंपवि
त्रंचसुदर्शनमेवभवेत् नान्यदितिभावः ॥ ६२२ ॥ ननुपावमान्यइत्यत्र पवमानतनूनांकुतोग्रहणमित्यतआह ॥ जडर्चामित्या
दिना ॥ श्रवणायोगात् प्रार्थनावचनश्रवणायोगात् । ताः पवमानप्रतिपादकऋचः । उपलक्षणंचैतत् । इंद्रःसुनीतीसहमापु ॥ ६५२ ॥
नातु सोमःस्वस्त्यावरुणःसमीच्येत्यादिवचनात्इंद्रसोमादिपदवाच्यपवमानतनूनामेवप्रार्थनात् पूर्वश्रुतावपितासामेवप्रार्थनमिति

द्रष्टव्यं ॥ ६२३ ॥ निमित्तांतरंचाह ॥ यतइति ॥ तत्रैव येनदेवाइतिश्रुतेःपूर्वं पावमानीर्दिशंतुनइमंलोकमथोअमुं । कामांत्स
मर्धयंतुनोदेवैर्देवीस्समाहिताइतिश्रुतावेव । अयमर्थः । पावमानीः पावमान्यः । पवमानसूक्तसंबंधिन्यइत्यर्थः । देवैः देवशब्दवा
च्यपवमानमूर्तिभिःसह समाहिताः सम्यगाहिताः । पवमानसूक्तस्थऋचांप्रतिपाद्यतयाअभिमानितयाचस्थिताइत्यर्थः । देवीः देव्यः
भारतीमूर्तयः नःइमंलोकं अथोअनंतरं अमुंपरलोकंचदिशंतु । नःकामान् काम्यंतइतिकामाः तान् इहामुत्रचकाम्यसकलार्थानि
त्यर्थः । समर्द्धयंतु समृद्धान्कुर्वंत्विति । एवंचास्यांश्रुतौपवमानसूक्तस्थऋक्प्रतिपाद्यतया तदभिमानितयाच देवशब्दवाच्यपव

यतस्तत्रैवसमुनिर्देवैर्देवीःसमाहिताः ॥ इत्याहतेनसर्वक्षुदेवैस्सहसमाहिताः ॥ ६२४ ॥ देव्य
श्चसंतिभारत्यामूर्तयोवायुमूर्तयः ॥ मानिन्यःप्रतिपाद्याश्चततस्तत्प्रतिपादिताः ॥ ६२५ ॥
चक्रांकधारणंतेषुकुर्वत्योवायुमूर्तयः ॥ प्रधानभूताःप्रार्थ्यंतेशेषेशेषिणिवाक्यये ॥ ६२६ ॥ ॥

मानमूर्तीनां देवीशब्दवाच्यभारतीमूर्तीनांच पावमानीपदेनप्रस्तुतत्वा द्येनदेवाइतिश्रुतावपि पावमानीपदंगुरुत्वयोग्यपवमानत
नूनामेवप्रतिपादकमितिभावः । सः येनदेवाइतिमंत्रद्रष्टा । समाहिताः समाहिताइत्यत्र देव्यः पुंलिंगतयास्त्रीलिंगतयाचदेवपद
संबंधिन्यः । मानिन्यःप्रतिपाद्याःभारतीमूर्तयोवायुमूर्तयश्चयतःसंतीत्याहेतिक्रियाध्याहारेणसंबंधः ॥ ६२४ ॥ ६२५ ॥ चक्रांक
धारणंकुर्वत्यःप्रधानभूताइत्यनेन पूर्वश्रुतौवायुमूर्तीनामेवग्रहणेनिमित्तंसूचयति । युक्त्यंतरंचाह ॥ शेषइति ॥ शेषे संहिताशे
षात्मकपरिशिष्टरूपे । शेषिणि प्रधानभूतसंहितारूपे । वाक्ये वाक्यसमूहे । अंगप्रधानवचनानामैकार्थ्यनियमात् सूक्तप्रतिपाद्य

वायोरेवपरिशिष्टवचनेपिप्रतिपाद्यत्वात्येनदेवाइत्यादिश्रुतिरपिवायुप्रतिपादिकैव । अतोपिपावमान्यइतिपदंवायुमूर्तीनामेवप्रति
पादकमितिभावः ॥ ६२६ ॥ श्रीमुद्राधारणस्यमोक्षयोग्येष्वावश्यकत्वयुक्तिंचाह ॥ नयस्येति ॥ यस्य चक्रादिधारणस्य । साध
र्म्यधर्मिणि । सारूप्याख्यसादृश्यधर्मिणि । सर्वमोक्षेपिसकलसंसारमोक्षेपि । मोक्षोमोचनंनेतिसंबंधः। मोक्षयोग्यादित्यनेनत
मोयोग्यान्मध्यमजीवाच्चचक्रादिमोचनंसंभावितमितिसूचयति। अतएवतावुभौस्वगतावपिचक्रादिधारणाभावात्संसारेपिचक्रादि
धारणनिंदांकुर्वाते मोक्षयोग्यास्तुवैष्णवाःमोक्षेप्यावश्यकस्यसंसारेसुतरामपेक्षितत्वात्चक्रादिधारणंस्तुवंति। श्रुतयोवासिष्ठादिस्मृ
तयश्चउक्तविधयाचक्रादिधारणंस्तुवंतीतिभावः। अनेनैवनिंदावचनानांगतिरपिसूचितेतिद्रष्टव्यं ॥६२७॥ पवमानसूक्तस्थऋग्भिश्च

नयस्यसर्वमोक्षेपिमोक्षस्साधर्म्यधर्मिणि ॥ तच्चक्रलांछनंमोक्षयोग्यात्कोमोचयेद्बुधः ॥ ६२७ ॥
चमूषत्साधुचम्वांसन्वैष्णवेषुसमुज्ज्वलन्॥ सुखीहरिर्हियस्येनस्सश्येनोविष्णुकिंकरः ॥६२८॥

क्रादिधारणंप्रस्तुत्यइदानींपूयमानसूक्तस्थेन चमूषच्छ्येनश्शकुनोविभृत्वागोविंदुर्द्रप्सआयुधानिबिभ्रत्। अपामूर्मिंसचमानःसमुद्रं
तुरीयंधाममहिषोविवक्तीतिवचनेन चक्रादिचतुरायुधधारणमपिस्तौति। अस्येत्थंनिरुक्तमामनंति । चमूःकर्मसंघाःश्येनोजीवःशकुन
स्तस्यांतराविशेषः बिभृत्वेतिविशेषणपोषयित्वा शकुनइतिशुकनामा सदितिपरब्रह्मरूपंभवति गोविंदुर्गोविंदस्येति द्रप्सोंगसंगिचं
दनविंदना दायुधानि बिभ्रदितिधारयन्अपामूर्मिंसचमानःसमुद्रं अपामूर्मिमितिबुद्बुदायमानंसंसृतिकारंभककर्म सचमानोनिराक
रणशीलः समुद्रमितिमुद्राभिःसहितंवपुर्दर्शयन् महिषइतिसंसार्यपि तुरीयंधामेति महदानंदं वक्तीतिजानीते ऊर्ध्वोगंधर्वोअधिनाके



अस्थादित्यपिनिगमोभवतीति। तथाचायमर्थः । श्येनः पक्षिषुश्येनइवस्थूलोदेवर्ष्यादिजीवः। श्येनोजीवइतिवचनात् । शकुनः ।
शुकइवसूक्ष्ममनुष्यादिजीवः । शकुनस्तस्यांतराविशेषः शकुनइतिशुकनामेतिवचनात् । जीवेषूक्ततारतम्यज्ञानंचापेक्षितमितिसू
चनायेत्थमुक्तं । गोविंदुःगोविंदनामकनारायणस्य । भगवतस्सकलवेदप्रतिपाद्यत्वज्ञानस्याप्यावश्यकत्वसूचनायेत्थमुक्तं । गाः
विद्याः विंदतइतिव्युत्पत्तेः । गोविंदुर्गोविंदस्येतिवचनात् । आयुधानि चक्रशंखगदापद्माद्यायुधानि। बिभृत्वा श्रुतिस्मृत्यादिभि
स्तद्धारणंपोषयित्वा । बिभृत्वापोषयित्वेतिवचनात् । केवलंमुद्राधारणमेवनालं। किंतुसदाश्रीमुद्राधारणस्यावश्यकत्वसमर्थनमप्य
पेक्षितमितिसूचनायेत्थमुक्तं । द्रप्सः गोपीचंदनाख्यद्रवद्रव्यात् । सुमनसइतिवत्पंचम्यंतंछांदसमिदं । चंदनविंदनादितिवचन
बलादयमर्थोलभ्यते । चंदनंगोपीचंदनं विंदनंतस्यलाभः। तस्मादितिनिरुक्तस्यार्थः । बिभ्रत् सदाधारयन् । समुद्रं तप्तमुद्रा
सहितं देहंचदर्शयन् । समुद्रमितिसमुद्रादिभिःसहितंवपुर्दर्शयन्नितिवचनादयमर्थोलभ्यते । गोपीचंदनेनचक्रादिधारणस्यप्रागु
क्तत्वादत्रतप्तमुद्राधारणमेवलभ्यते। अन्यथापौनरुक्त्यात् । एवंचद्विविधमुद्राधारणस्यापिइयमेवश्रुतिःप्रापिका । अपामूर्मिं
अपामूर्मिमिवविद्यमानं संसारारंभककर्मबुद्बुदायमानंसंसृतिकारंभकंकर्मेतिवचनात् । सचमानः चमुअदनइतिधातोः संहरन् ।
सचमानोनिराकरणशीलइतिवचनात् । तुरीयंधाम परमानंदरूपं । तुरीयंधामेतिवचनात् । चमूषत् अनादिकालमारभ्यस्वै
स्स्वैःक्रियमाणकर्मराशिषुसाक्षितयाविद्यमानंपरंब्रह्म । चमूःकर्मसंघास्सदितिपरब्रह्मरूपंभवतीतिवचनात् । महिषस्संसार्यपिसन्
पूर्वोक्तोविष्णुचक्रांकितोवैष्णवजीवःविवक्तिविशेषेणजानीते अपरोक्षीकृत्यपश्यतीत्यर्थः । महिषस्संसार्यपिवक्तीतिजानीतइति

वचनात् । ऊर्ध्वोगंधर्वोअधिनाकेअस्थाद्विश्वारूपाप्रतिचक्षाणोअस्य । भानुश्शुक्रेणशोचिषाव्यद्यौत्प्रारूरुचद्रोदसीमातराशुचि
रितिनिरुक्तोक्तसमाख्याश्रुतेरप्ययमर्थः । अस्यपरमात्मनः गंधर्वः गच्छत्यवगच्छत्येभिःतंपरमात्मानमिति गानि चक्रशंखादीनि
तस्यासाधारणचिह्नानि तेषांधर्वोधारणशीलः । गोविंदुरायुधानिबिभ्रदितिवचनसमाख्यारूपत्वादत्राप्ययमेवार्थोलभ्यते । अ
स्यपरमात्मनः विश्वा विश्वानि स्वहृदयगुहायांप्रविष्टानि विशप्रवेशनइतिधातोः । रूपा रूपाणि बिंबरूपाणीत्यर्थः । प्रतिचक्षाणः
अपरोक्षीकृत्यपश्यन् । इदंचतुरीयंधामविवक्षीत्यस्यसाक्षात्समाख्यारूपं बिंबापरोक्षज्ञानिनांसंसारारंभककर्मनाशावश्यंभावा
दपामूर्मिंसचमानइत्यस्यपरंपरयासमाख्येतिद्रष्टव्यं । ऊर्ध्वः मनुष्यादिजीवेभ्यउत्कृष्टः । भानुःसूर्यः । इदंचश्येनपदोक्तसकलो
त्तमजीवानामुपलक्षणं । अतस्तस्यैवसमाख्यारूपंच । देवेष्वेवचक्रादिलांछनमप्रसिद्धत्वात्तेष्वेवतदनुशास्तिसमाख्यावाक्यं । मनु
ष्येषुतुकैमुत्येनतत्सिद्ध्यतीतिहृदयं । साक्षान्मेरुंपरितोंतरिक्षचारितयाश्येनोपमासूर्यस्यैवसंभवतीत्यतस्तस्यैवग्रहणं । नाकेस्वर्गे
अधिकतया अस्थात् स्थितिमकरोत् । आधिपत्यमन्वभूदित्यर्थः । अनेनदेवानांस्वलिंगविधारणेनात्मकृतानामितिभागवतोक्तच
क्रादिभगवदायुधांकधारणं नहिदेवपदप्राप्ताब्रह्मदर्शनवर्जिताइतिस्मृत्युक्तमपरोक्षज्ञानंचसंगृहीतं । एवंचएतच्छ्रुतिद्वयसमाख्य
यापि येनदेवाइत्यस्यास्मदुक्तएवार्थइतिज्ञातव्यं । शुक्रेण शोकघ्नेनरीङ्क्ष्यइतिधातोः । शोचिषाकांत्याव्यद्यौत् विशेषेणद्युतिमान
भूत् । नकेवलंभानुःस्वयमेवद्युतिमानभूत् किंतुतमेवभांतमनुभातिसर्वमितिश्रुत्युक्तरीत्यापरप्रकाशव्याप्यप्यभूदितिप्रदर्शनायच
रमचरणप्रवृत्तिः । शुचिःशुद्धः । इदंचभूम्यंतरिक्षस्थाशुचिपदार्थस्पर्शेपिलेपाभावसूचनार्थं । मातरा मातरौ । जगन्मातृस्थानीयौ

जगन्मातृभूतश्रीभूम्याख्यश्रीरूपद्वयसन्निधियुक्तेवा रोदसी द्यावापृथिव्यौ प्रारूरुचत् प्रकर्षेणशोभयामास । रुचिदीप्ताविति धातोः । इदंचऊर्ध्वोगंधर्वइत्यत्रस्वोक्तोर्ध्वत्वसमर्थनार्थं । ग्रंथकारस्तुपूयमानेपवमानस्यैवप्रतिपाद्यत्वात्निरुक्तकारोपात्तसमाख्या श्रुत्यनुसारात्मध्वविषयत्वेस्वेनवक्ष्यमाणरीत्यासकलश्रौतपदानांस्वारसिकार्थलाभाच्चसूर्यस्थवाय्ववतारभूतमध्वविषयतयैवचमूष दितिश्रुतिंयोजयति ॥ चमूषइत्यादिना ॥ साधुचम्वांसन्निति चमूषदितिपदस्यार्थः । तस्यतात्पर्यकथनं वैष्णवेषुसमुज्ज्वल

नयन्सुखभुवंस्वीयांइछकुनाख्योपिसप्रभुः ॥ बिभृत्वाधारणाशीलोद्रप्संश्चित्तद्रवान्वितः ॥ ६२९ ॥
आयुधानिसदाबिभ्रद्भुजकंठोदरादिषु ॥ चक्रशंखगदापद्मपूर्वाण्यखिलवाक्पतेः ॥ ६३० ॥ गोविंदुर्गो
पतेर्वास्वस्वामिनस्सेविनांप्रभुः ॥ अपांज्ञानप्रवाहाणामूर्मिमौन्नत्यसंपदं ॥ ६३१ ॥ समुद्रंवेदशास्त्राख्यं
सचमानस्स्वचेतसा ॥ संबंधंप्रापयन्मध्वोमरुदंशोभवाद्बहिः ॥ ६३२ ॥ स्थितेस्तुर्यमुक्तलोकाधारत्वाद्धा
मसंज्ञितं ॥ परंब्रह्मविशेषेणवक्तीत्याहश्रुतिःपरा ॥ समवायेसचिद्धातुंयतोव्याख्यांतिशाब्दिकाः ॥ ६३३ ॥

न्निति । सुखीहरिरितिश्येनपदस्यार्थकथनं ॥ ६२८ ॥ शस्यसुखस्य कुःभूमिः तांनयतीतिशकुनइत्यर्थः । बिभृत्वेत्यस्यार्थकथनं धारणाशीलइति । बिभृत्वन्शब्दइतिज्ञातव्यं ॥ ६२९ ॥ गोविंदुरित्यस्यार्थकथनं अखिलवाक्पतेरिति ॥ ६३० ॥ गोपतेः गोपालस्यवेतितस्यैवपदस्यार्थांतरकथनं । महिषइत्यस्यार्थकथनं स्वस्वामिनस्सेविनांप्रभुरिति । सचमानइत्यस्यार्थकथनंस्वचेतसासंबंधं प्रापयन्निति । तुर्यंतुरीनामकं । सचमानइत्यस्यमूलीभूतंधातुमाह ॥ समवायइति ॥ अनेन सच समवायइतिधातुंसूचयति

॥ ६३१ ॥ ६३२ ॥ ६३३ ॥ यतःप्रवचनंकुर्वद्वायोरूपंश्रुतिर्जगौतत्तस्मादितिपूर्वेणान्वयः ॥ ६३४ ॥ चमूषुमध्वसेनासुसन्निति
जात्येकवचनाभिप्रायेणसकलवैष्णवैःक्रियमाणचक्रादिधारणस्यश्रौतत्वसिद्ध्यर्थंवैष्णवमात्रविषयतयावाइयंश्रुतिर्योज्येत्याह ॥ त
च्चमूष्विंति ॥ तच्चमूषु मध्वचमूषु । पूयमानसूक्तेकथमन्यस्तुतिरित्यतआह ॥ सेनेति ॥ ततश्चायंसमुदायार्थः । चमूषत्
वैष्णवसेनामध्येगुरुतयातिष्ठन् शी आनंदरूपीपरमात्माआसम्यक्इनोयस्यसः श्येनः । महालक्ष्म्याःअवांतरस्वामित्वेपिमुख्य
स्वामित्वंविष्णोरेवेतिदर्शनायेत्थमुक्तं । शकुं मोक्षाख्यसुखभूमिंनयतीतिशकुनः । कुःपृथ्वीत्यभिधानं । बिभृत्वा वेदशास्त्राद्य
र्थानांसदाधारणशीलः सत्तकैस्तेषांपोषकोवा । श्वासरूपेणजगद्धारणशीलोवा । गोविंदुःकृष्णस्य आयुधानि सहस्रारचक्रं शतावर्तं

पूयमानस्यसूक्तस्यातन्माध्वीयंकथाध्रुवं ॥ यतःप्रवचनंकुर्वद्वायोरूपंश्रुतिर्जगौ ॥ ६३४ ॥
तच्चमूषुसतांसेयंकथाभक्तिमतांसतां ॥ सेनास्तुतौचसेनानीस्तुतिरेवयतोभवेत् ॥ ६३५ ॥

शंखं सहस्रदलपद्मं षोडशारगदांचेतिचतुरायुधानि भुजद्वयेउरोभागद्वयेच । चतुर्भुजत्वेतुस्वबाह्यभुजद्वयेचबिभ्रत् । द्रप्सः
भक्तेषुसर्वदाचित्तद्रववान् । द्रवणमेवद्रप्सा अर्शआदिभ्योऽजितिवचनात्तद्वान्द्रप्सः । अपांज्ञानरसानां ऊर्मिं उत्तुंगतरंगस्थानी
योत्कर्षवंतं । समुद्रं वेदशास्त्राख्यसमुद्रं सचमानः स्वमनसासंबंधंप्रापयन् । अंतर्णीतणित्वादयमर्थोलभ्यते । स्वमनसासदातं
समुद्रं संबध्नन्वा । अथवा अपांज्ञानरसानां ऊर्मिंउत्कर्षवंतं समुद्रं ज्ञानमुद्रयासहितं वेदव्यासंहयग्रीवंच सचमानः मनसासंब
ध्नन् । सदाध्यायन्नित्यर्थः । पुत्रतयाशिष्यतयाचसंबध्नन्वा । जननमरणादिप्रवाहानां ऊर्मिं उत्कर्षवंतं समुद्रं संसारसमुद्रं सच

मानोनिराकुर्वन्वा । महिषः सकलजीवानांश्रेष्ठः वायोरवताररूपोमध्वः तुरीयंसर्वेषामवसानेविद्यमानं । धाम सकलाधारभूतं
विष्णवाख्यंपरंब्रह्म विवक्ति विशेषेणवक्तिअपरोक्षीकृत्यजानीतेच । वैष्णवमात्रविषयेषु चमूषत् वैष्णवसंघेस्थितः शी सुखीपर
मात्माआसमंतात्जन्मजन्मनिइनोयस्यसतथोक्तः । शकुं निरवधिकसुखभूमिंपरमात्मानंनयति यथायोग्यंस्वशिष्यादिषुउपदिश
तीतिशकुनः । गोविंदुरायुधानिबिभ्रत् द्रप्सः यथायोग्यंचित्तद्रववान् । अपामूर्मिंसमुद्रं ज्ञानरसोर्मिमंतंवेदशास्त्राख्यसमुद्रं
सचमानः श्रवणमननादिनायथायोग्यंसंबध्नन् । महिषः अधममध्यमजीवेभ्यःश्रेष्ठः तुरीयंधाम विवक्ति अपरोक्षीकृत्यजानीत
इतियोजना । निरुक्तोक्तरीत्यावायोजना । जीवेष्वपिपक्षिपश्वादियोनिसद्भावदर्शनायश्येनशकुनमहिषपदानि । अपांजलानामू
र्मिं ऊर्मिमंतं समुद्रं प्रसिद्धसमुद्रं सचमानः पानेनसंहरन् अगस्त्यः अभिमानितयासंबध्नन्वरुणोवा नदीरूपेणसंबध्नन्गंगादिन
द्यभिमानिदेवतासमूहोवा । वेदशास्त्राख्यसमुद्रंअभिमानितयासंबध्नन्सरस्वतीभारत्यादिदेवस्त्रीसमूहोवा । गंगायाःअपामूर्मिंहरि
चरणप्रक्षालनेनपवित्रीकृत्य समुद्रं बहिर्जटाभस्माद्यवैदिकमुद्रयासहितंस्वपुत्रंशिवंपावयितुंसचमानःप्रापयन्ब्रह्मावा तवश्रियेमरु
तोमर्जयंतइतिश्रुतेःस्वजटामध्यपतितमपांप्रवाहंभगीरथप्रार्थनयासमुद्रंप्रापयन् एवमात्मभुवादिष्टःपरिक्रम्यगिरांपतिं । बाढमित्य
भ्युपामंत्र्यविवेशतपसेवनमितितपोहेतोर्घनोदकसमुद्रंसचमानः । अंतर्गोविंदस्यायुधानिबिभ्रच्छिवोवा । अराख्यंण्याख्यंवामुक्ति
स्थानस्थमंहासमुद्रंसचमानःमुक्तगणोवात्रप्रतिपाद्यतइतिसर्वेषामपिभगवच्चक्राद्यायुधांकधारणेअधिकारंसूचयितुंविशिष्यविशेष्य
मनिर्दिशंतीतिश्रुतिःउक्तविधयासर्वत्रसंभवद्भिशेषणगणैरेवयतःप्रवृत्ता तस्मादुक्तःसर्वोप्यर्थःश्रुतेरभिप्रेतएवेतिज्ञातव्यं ॥६३५॥

युक्ति- इदानीं धृतोर्ध्वपुंड्रः(श्र्ट)श्रुतचक्रधारीविष्णुंपरंध्यायतियोमाहात्मा । स्वरेणमंत्रेणसदाहृदिस्थंपरात्परंयन्महतोमहांतमिति स्पष्टं मल्लिका

॥ ७८ ॥ तप्तचक्रोर्ध्वपुंड्रधारणप्रतिपादकंसृगालोपनिषद्वाक्यमर्थतोगृह्णाति ॥ स्वरेणेति ॥ श्रु(श्र्ट)पाकइतिधातोःश्रुतचक्रधारी तप्तच फलसौ०

क्रधारीत्यर्थः । इहलोके । इहेतिसदितिचपदंछंदोभंगपरिहारार्थं सांप्रतंप्रसिद्धा अद्यापिसौराष्ट्रदेशादौवैदिकैःपठ्यमानेत्यर्थः ॥ ६३६ ॥ ६३७ ॥ ६३८ ॥ द्विरेखमूर्ध्वपुंड्रंचेत्यनेन द्विरेखमूर्ध्वपुंड्रंभवति तप्तंचक्रंद्विभुजेधाययतीतिकाण्वानांशतपथाख्य

स्वरेणप्रणवाख्येनमंत्रेणहृदिगंसदा ॥ परतश्चपरंदेवंमहतश्चमहत्तरं ॥ ६३६ ॥ धृतोर्ध्वपुंड्रश्श्रु
तसचक्रधारीहियःपुमान् ॥ विष्णुंध्यायतिसर्वत्रसमहात्मेतिसांप्रतं ॥ ६३७ ॥ प्रसिद्धोपनि
षच्चाहश्र्टपाकइतिधातुतः ॥ तप्तचक्रांकोर्ध्वपुंड्रधृतिस्तुतिपरास्फुटं ॥ ६३८ ॥ द्विरेखमूर्ध्वपुं
ड्रंचभवतिद्विभुजेसदा ॥ तप्तचक्रंधाययतीत्याहकाचनवेदवाक् ॥ ६३९ ॥ काण्वानांसाशत
पथब्राह्मणेकिलवर्तते ॥ यद्वेदस्यशिरोवाक्तितदेवाहिवपुर्मतं ॥ ६४० ॥ तस्मादियंचवाक्स्तौति
तप्तचक्रायुधांकनं ॥ अचक्रधारिव्याख्यादिप्रत्याख्यानचिकीर्षया ॥ ६४१ ॥ ॥

ब्राह्मणेअद्यापिवैदिकैःपठ्यमानंऊर्ध्वपुंड्रतप्तचक्रधारणेतात्पर्यद्योतनायएकप्रकारेणैवासकृदभ्यस्तंवाक्यंगृह्णाति ॥ धाययतीति ॥ धारयतीत्यर्थः । द्विभुजइत्यनेन विदोविदुरितिस्मृतावाह । उभयालाभेचक्रलांछनस्यैवमुख्यत्वात्तद्धारणमवेविहितमिति ॥ ६५६ ॥
सूचितं । अतएवपूर्वाप्युपनिषत्श्रुतचक्रधारीत्येवाह । संहितावाक्यान्यपिपवित्रपदवाच्यसुदर्शनधारणमेवस्तुवंति । गोविं

दुरायुधानिबिभ्रदितिवचनाच्चतुरायुधधारणमपिन्याय्यं । दक्षिणेतुभुजेविप्रोबिभृयाद्वैसुदर्शनं । सव्येतुशंखंबिभृयादितिब्रह्मवि
दोविदुरितिस्मृत्यनुसारेणायुधद्वयधारणमपिविहितं। अतःश्रुतिस्मृतीनांतप्तचक्रांकरहितपुरुषनिंदनएवमहान्भरः। धारणंतुयथा
रुचिकर्तव्यमितिभावः । साहित्यमुद्रयासंहितोपनिषदोरैकार्थ्यसंपादयति॥ यदिति ॥वेदस्यशिरःउपनिषत्। वपुर्मतं वपुषःवपुः
स्थानीयायाःसंहितायाःमतमभिमतं । लोकेहिशिरसायद्धक्तितदेवंहस्तपादादिकमनुकरोति । अतोवेदेपिमुख्यतयाशिरःस्थानीयोप
निषदा स्पष्टंयत्तप्तचक्रधारणंविहितं तदेवगोविंदुरायुधानिबिभ्रदितिसंहितावाक्येनापिविधातव्यंनान्यत्। अतोत्रापिमुख्यतस्त
प्तायुधानांधारणमेवाभिप्रेतमितिभावः । इयंवाक् गोविंदुर्द्रप्सआयुधानीतिवाक् । अचक्रधारिव्याख्यादिप्रत्याख्यानचिकी

अत्रापिचपवित्रंतइतिवाग्वायुगंहरिं ॥ स्तुवंतीतप्तचक्रांकधारणंवक्तिसुस्फुटं ॥ ६४२ ॥

र्षया तप्तचक्रांकमकुर्वतःपुरुषस्यकपोलकल्पितंयत्किंचिद्व्याख्यादि । आदिपदेनतप्तचक्रांकधारणाख्यानाचारोपिगृह्यते । तस्यप्र
त्याख्यानचिकीर्षया ॥६३९॥६४०॥६४१॥ अत्रापि पूयमानेपि । पवित्रंतइतिवागित्यनेन पवित्रंतेविततंब्रह्मणस्पतेप्रभुर्गात्राणिप
र्येषिविश्वतः । अतप्ततनूर्नतदामोअश्नुते(श्र)श्रुतासइद्वहंतस्तत्समाशततेतिश्रुतिंगृह्णाति । अयमर्थः । हेब्रह्मणस्पते वेदानांपते चतु
र्मुखब्रह्मणस्पतेवा । नारायण तेपवित्रंसुदर्शनं विततं जगतिविशेषेणव्याप्तं सूर्यमंडलवत्प्रभयाव्याप्तिर्न किंतुस्वरूपेणव्याप्तिरिति
सूचनायवीत्युपसर्गः। तत्रनिमित्तंप्रभुरित्यादि । प्रभुस्त्वं विश्वतःगात्राणि प्राणिनांशरीराणि पर्येषि परितःप्राप्नोषिव्याप्नोषीत्यर्थः।

सुदर्शनधारिणस्तवसर्वशरीरेषुअंतर्यामितयाऽव्याप्तत्वात्तवकरस्थंसुदर्शनमपिसर्वत्रव्याप्तमितिभावः । अस्तुभगवतोभगवत्सुदर्शन
स्यचव्याप्तत्वं तथापिप्रकृतेकिमायातमित्यतउक्तं ॥ अतप्ततनूरित्यादि ॥ तेनचक्रेणातप्ता बाहुमूलेतापरहितातनुर्यस्यसोतप्त
तनुः । तापेकरणंकिंचिद्वक्तव्यं तच्चप्राक्सुदर्शनस्यप्रस्तुतत्वेनशिष्टाचारबलेनचतस्यैवकरणतयासंबंधोयुक्तोनत्वन्यस्येतिभावः ।
अतएवाऽऽमः तापाख्यसंस्काररहितःपुरुषः तत्मोक्षसुखं नाश्नुते । विष्णुचक्रांकरहितस्यवैकुंठसुखानुभवेनसहसर्वथासंधानाभा
वदर्शनायविसंधिकरणं । सुदर्शनधारणस्यमोक्षसुखाशनंप्रतिकारणत्वनिर्णयायव्यतिरेकव्याप्तिमुक्त्वाअन्वयमप्याह । श्रितास
इत्यादिना । श्रितासः चक्रेणपक्वभुजाः । भुजेतप्तसुदर्शनांकसहिताइत्यर्थः । इत्इत्थंतप्तसुदर्शनांकवदेव वहंतः गोपीचंदनादि
नाधारयंतश्चवैष्णवजनाः तन्मोक्षसुखं समाशत सम्यगभक्षयंत । अश्भक्षणइतिधातोः । आसतेतिबहुवचनांतपदव
दिदंद्रष्टव्यं । सम्यगन्वभूवन्नित्यर्थः । अश्नुवतेतिवक्तव्येआशतेत्यलौकिकपदप्रयोगः । सांसारिकसुखाशनवत्नेदंभेदघटितम
शनं किंतुस्वरूपभूतसुखस्यैवविशेषशक्त्याशनमितिलोकवैलक्षण्यप्रदर्शनाय अविकृतसुखाशनद्योतनायवायथास्थितधातुजमेवप
दंयुक्तं । चक्रांकधारणेसतिमौक्तसुखावश्यंभावात्तदभावेतदभावाच्चमोक्षसुखाशनंप्रत्यादौतदेवासाधारणकारणमितिभावः ।
जीवानांस्वरूपभूतदेहेष्वपिसुदर्शनधारिणस्तवबिंबरूपतयाऽव्याप्तत्वात्बिंबसारूप्याख्यमोक्षमभीप्सतांस्वरूपभूतदेहेचक्रांकस्याव ॥ ६५७॥
श्यकत्वात्तदनुसारेणैवबाह्यदेहस्यापिसत्त्वौचित्यात्तदनुमापकतयाबाह्यदेहेपितप्तसुदर्शनांककरणमावश्यकमितिसूचनाय प्रभुर्गा

त्राणिपर्येषीत्युक्तं ॥ ६४२ ॥ एतदेवाभिप्रेत्याह ॥ ब्रह्मणइत्यादिना ॥ ६४३ ॥ इतिहेतोः ईरिता श्रुतौकथिता । अन्यत्
दशापवित्रादिकं । प्राण्यंगव्यापिन जगत्त्रयेव्याप्यपिनेतिसंबंधः॥६४४॥तेन पूतेन पूर्वार्धोक्तसुदर्शनेन अतप्ततनूःअतएवआमः।
यत्मोक्षसंज्ञितमामुष्मिकफलंलोकेप्रसिद्धं तदितिसंबंधः । दितिसामान्येनोक्तावपिमोक्षसुखस्यैवप्राप्तिसूचनायप्रसिद्धमित्युक्तं ।

ब्रह्मणोवेदराशीनांपतेलक्ष्मीपतेतव ॥ पवित्रहस्तगंचक्रंव्याप्तंसर्वत्रसर्वदा ॥ ६४३॥ प्रभुस्त्वं
देहिगात्राणियतःपर्येषिविश्वतः ॥ चक्रव्याप्तौहेतुभूताचक्रिव्याप्तिरितीरिता ॥ नान्यत्पवित्रं
प्राण्यंगव्यापिनापिजगत्त्रये ॥६४४॥ तेनातप्ततनूरामःपाकहीनोश्नुतेनतत् ॥ आमुष्मिकफलंय
द्धिप्रसिद्धंमोक्षसंज्ञितं ॥ ६४५ ॥ श्रितासस्तेनपक्वांगावहंतश्चदिनेदिने ॥ गोपीचंदनतोभक्तास्त
त्समेत्यमाशत ॥ इत्यर्थंवागियंस्पष्टमाचष्टकिलवैष्णवी ॥ ६४६ ॥ तदेषापूयमानस्यसूक्तस्था
वायुगंहरिं ॥ स्तौतिवायुमतस्थानांधर्मस्तवनतत्परा ॥ ६४७ ॥ वायोस्सूक्तंवदेद्वायुंवायुगंवा
हरिंवदेत् ॥ वदेद्वावातरसनमुनिधर्मंसुनिर्मलं ॥ ६४८ ॥ ॥ ॥

प्रसिद्धत्वात्तस्यैवतत्पदेनग्रहणमितिभावः ॥ ६४५ ॥ गोपीचंदनतोवंहतइतिसंबंधः । तत् मोक्षसुखंसमेत्यसमाशत सम्यगाश्नुत
मोक्षसुखाशनंकुर्वतःवैकुंठादिलोकेषुतिष्ठंतीतिभावः ॥ ६४६ ॥ ततूतस्मात् । एषा पवित्रंतइतिवाक् । वायुगंहरिमितिपूयमानप्र
करणविरोधपरिहारार्थं । मुमुक्षुमात्रकथनेपिपूयमानप्रकरणविरोधपरिहारायवायुमतस्थानामित्युक्तं । उपलक्षणंचैतत् । श्रुतौशृ

तासइतिबहुवचनप्रयोगात्वायोरप्यत्रप्रतिपाद्यत्वसंभवान्नप्रकरणविरोधइत्यपिद्रष्टव्यं । अतएवातप्ततनूरितिप्रागेकवचनांतपदेन प्रस्तावेपितदुल्लंघ्यबहुवचनांतपदेनप्रस्तुतिः । किमर्थंतर्हिपूर्वमप्येकवचनांतपदेनप्रस्तुतिरितिचेत्सत्यं तदुक्तैकजीववादस्याप्यनु वादायेतिब्रूमः । सर्वेषामनुवादानर्हतयावातेष्वेकस्यग्रहणं । दशापवित्रपरतयाव्याख्यानेतुविशेषणव्याप्तत्वानुपपत्तिः सोमरससं ग्राहकमृण्मयपात्रेगात्रपदप्रयोगायोगः सोमरसेप्रभुत्वायोगो तप्ततनुरित्यस्यप्रकृतानुपयोगः तत्रतनूपदेनशरीरग्रहणेगात्रपदेनापि तस्यैवग्रहणं अन्यथाप्रायपाठविरोधइतिदूषणानिद्रष्टव्यानि । दशापवित्रेमंत्रनियोगस्यतुगतिरुक्तैव॥ ६४७॥ ६४८॥यत्रमंत्रस्यविनि

ब्रह्मास्त्ररूपगायत्रीशत्रोस्संहारकर्मणि ॥ नियुक्तेत्येवकिंवक्तिरिपुसेनाप्रणाशनं ॥ ६४९ ॥
सुदर्शनस्यमीमांसाद्रष्टव्याविस्तरार्थिभिः ॥ उपकर्तुःप्रतिकृतेरशक्त्येहापितत्कथा ॥ अतो
स्सदुक्तएवार्थइतिसर्वंमनोरमं ॥ ६५० ॥ ॥ ॥ ॥

योगःसएवमंत्रस्यार्थइतिन्यायस्यान्यत्रापिव्यभिचारमाह ॥ ब्रह्मास्त्रेति ॥ ब्रह्मास्त्ररूपगायत्री ब्रह्मास्त्रमंत्ररूपगायत्रीत्यर्थः । ब्रह्मास्त्रमुखेनरिपुसेनासंहारेविनियुक्तायागायत्र्याःरिपुसेनाप्रतिपादकत्वाभावात्यत्रविनियोगःसएवमंत्रार्थइतिन्यायोत्रापिव्यभि चरितइतिभावः ॥ ६४९ ॥ पवित्रंब्रह्मणस्पत्यंलोकव्याप्तंसुदर्शनं । तेनातप्ततनूर्येषां ते नयांतिहरेःपदमितिएतच्छ्रुतिव्याख्या नरूपपद्मपुराणवचनानुकूल्यादपिस्वोक्तएवश्रुत्यर्थोनत्वन्यइतियुक्तेरपिसूचनायस्वकृतसुदर्शनमीमांसातिदेशः । सुदर्शनमीमांसा ॥ ६५८ ॥
याःपृथक्कृतत्वे किमत्रापितन्मीमांसयेत्यतआह ॥ उपकर्तुरिति ॥ उपकर्तुः स्वस्योपकर्तुःसुदर्शनदेवस्य सुदर्शनमंत्रोपास्त्या

स्वस्यसकलाभीष्टसिद्धेर्जातत्वादुपकर्तुरित्युक्तं । प्रतिकृतेः स्तुतिव्यतिरिक्तप्रत्युपकारस्य अशक्त्या कर्तुंशक्त्यभावेन इहापि यु क्तिमल्लिकायामपि । तत्कथा सुदर्शनकथा । स्वोपकारकसुदर्शनदेवस्य तदुपकारसदृशप्रत्युपकारकरणेशक्त्यभावात् वारंवारंस्तु तिर्वाकर्तव्येत्याशयेनात्रापितत्कथेतिभावः ॥ ६५० ॥ अतः पूर्वोक्तप्रकारात् । इदंमतं तत्ववादिमतं ॥ ६५१ ॥ यद्यस्मात् पव मानस्यपूयमानाभिधस्यचसूक्तस्थर्चामियंचर्चा वायोरेव चर्चा । तत्तस्मादियंचर्चा नःवायुस्तुतिरेवेतिसंबंधः । वायुस्तुतेरुक्तऋ क्चर्चायाश्चएकवाक्यतायाःप्राक्प्रदर्शितत्वादितिभावः ॥६५२॥ सप्तर्चः समध्वआयुवते उन्मध्वऊर्मिः विद्वान्मध्वः मध्वोअंशुः

अतोवेदेनवेदांतवचनेनचमानितं ॥ सर्वैर्मान्यंमतमिदंमाननीयोगुरुश्चनः ॥६५१॥ यद्वा

योःपवमानस्यपूयमानाभिधस्यच ॥ सूक्तस्थर्चामियंचर्चातद्वायुस्तुतिरेवनः ॥ ६५२ ॥

स्पष्टंमध्वाभिधानांकास्सप्तर्चोत्रविचारिताः ॥ अष्टर्चस्तच्चरित्रांकाश्चऋक्कैकारहस्यवाक् ॥ ६५३ ॥

सिंहन्नसंतंमध्वोअयासं प्रधारामध्वः अस्मभ्यमिंदविंद्रयुर्मध्वइतिसप्तर्चः । अष्टर्चः प्रसेनानीः प्रावीविपत् सोमःपवते ब्रह्मादेवा नां येनदेवाःपवित्रेण यत्तेपवित्रमर्चिषि चमूषच्छ्येनः पवित्रंतइतिप्रधानभूताअष्टर्चः । अपूर्व्यः ईक्षेण्यासइति आद्यंतयोर्मिलि त्वाएकाऋक् अजीतये अहतये ऊर्ध्वोगंधर्वः प्राजापत्यं उभाभ्यांदेवसवितः त्रिभिष्ट्वंदेवसवितःइतिअंगभूताष्षडृचः । तथाचांग भूताऋग्भिस्सह तच्चरित्रांकाः मध्वचरित्रवर्णनपराः चतुर्दशऋचः पूर्वोक्तसप्तश्रुतिवत्स्पष्टमध्वनामांकाभावेपिमध्वस्यचरित्रं मध्वप्रथमावतारद्वयचरित्रं मध्वमूलरूपचरित्रं तप्तमुद्राधारणाख्यमध्वाचारंचवायुस्तुताविववर्णयतीत्यर्थः। एवंचमिलित्वापवमा

नेपूयमानेचमध्वगुणप्रतिपादिकाऋचः एकविंशतिसंख्याताः चक्रांका चक्रस्यअंकःचिह्नंप्रतिपादनमित्यर्थः । यस्यांसाहरस्यवा गित्युपलक्षणं । काण्वानांशतपथब्राह्मणवचनंचग्राह्यं ॥ ६५३ ॥ पूर्वपवमानपूयमानसूक्तयोःप्रसिद्धवायुस्तुतिसाम्यमुक्तं इदानीं ततोप्यतिशयमाह ॥ वायुस्तुतौचेति ॥ सकृत् मध्वाख्यंमंत्रसिद्धमितिश्लोकेएकवारं । असकृत् उक्तविधयासप्तश्रुतिषुसप्त वारं मध्वसन्नाम्नी मध्वइतिसमीचीननामवती सेयं पवमानपूयमानसूक्ताख्यऋङ्मंडली ॥ ६५४ ॥ इदंतेपात्रमित्यनेन इदंतेपा त्रंसनवित्तमिंद्रपिबासोममेनाशतक्रतो । पूर्णआहावोमदिरस्यमध्वोयंविश्वइदभिहर्यतिदेवाइतिश्रुतिंगृह्णाति । इदंचइंद्रनामकपर मात्मानंप्रतिवेदपुरुषस्यवचनं । अयमर्थः । हेशतक्रतो अपरिमितज्ञानपरिपूर्ण इंद्र परमैश्वर्यसंपन्न परमात्मन् । सने स्वभक्ते

वायुस्तुतौचमध्वाख्यासकृदेवप्रकाशिता ॥ असकृन्मध्वसन्नाम्नीसेयंवायोर्महास्तुतिः
॥ ६५४ ॥ इदंतेपात्रमित्यृक्मध्वंस्तौत्यष्टमेऽष्टके ॥ ६५५ ॥ ॥

भ्योरुद्रादिभ्योदानेयोग्यानिवित्तानि ज्ञानभक्तिवैराग्यादीनि यस्यतत्सनवित्तं । अलौकिकदिव्यज्ञानभरितमित्यर्थः । इदं उप रिवक्ष्यमाणंमध्वाचार्याख्यं तेतवपात्रं सन्निधानयोग्यंस्थानं मुख्यप्राणरूपेलोकगुरौमध्वाचार्येत्वंसदासन्निहितोसीत्यर्थः । यएवा यंमुख्यप्राणःतमुद्गीथमुपासांचक्रिरइतिश्रुतेः । अन्यथाऽलौकिकमन्येष्वविद्यमानमिदंज्ञानंतत्रैवकथंस्यादितिसूचनायसनवित्त मित्युक्तं । एनएनेन सर्वप्राणिषुप्रेरकतयास्थितेनानेनदत्तंसोमं सोमरसंपिब सोमपायिनांमुखेस्थित्वासीत्कारवायुरूपेणानेनमुखां तःप्रवेशितंसोमरसंवापिब । अभ्यंतर्यामितयास्थितेनानेनएतेनमुखाख्यपात्रेणेत्यर्थः । पिबेतिवा । सर्वंसपूतमश्नातिस्वदि ॥ ६५९ ॥

तंमातरिश्वनेतिश्रुतेः रसंदासस्यजिह्वायामश्नातिकमलोद्भवेतिस्मृतेश्च । इदंपदेनपरामृष्टःकइत्यतआह ॥ पूर्णआहावोमदिर स्यमध्वइति ॥ मदिरस्य मत्तःइरंईरणंयस्यतस्य वेदोत्पन्नज्ञानस्येत्यर्थः । मत्मथनं वेदशास्त्राणांपर्यालोचनमित्यर्थः । तदुत्प न्नज्ञानस्यवा । पूर्णःसंपूर्णः । मदिरेणेतिवक्तव्येमदिरस्येतिषष्ठी तस्यज्ञानस्यपवमानपूयमानरूपमध्वसंबंधस्यापिज्ञापनार्थं । अनं तवेदोत्पन्नज्ञानेनसंपूर्णइत्यर्थः । आसमंतात्हावः तस्यज्ञानस्यहवनं तत्तद्योग्यतानुसारेणदानंयस्यसः ज्ञानयज्ञेस्थित्वाज्ज्ञानाख्य रसस्यभूमिस्थऋष्यादिशिष्यप्रशिष्येषुहवनकर्तेत्यर्थः । योमध्वः इदं तेपात्रमितिपूर्वेणसंबंधः । नकेवलंभूमिस्थशिष्येष्वेवज्ञानदा

शतक्रतोबहुज्ञानपरमैश्वर्यहेहरे॥ इंद्राख्यातेसनेदानेयोग्यवित्तानियस्यतत् ॥ सनवित्तंज्ञान
भक्तिविरक्त्यादिगुणोर्जितं ॥ ६५६ ॥ इदंमध्वाभिधंपात्रंसन्निधानपदंध्रुवं ॥ नचेदेतादृश
ज्ञानपूर्तिरत्रकुतोभवेत् ॥ ६५७ ॥ सत्वंनचेदितिप्रोक्तंदेववाक्यमनुस्मर ॥ ६५८ ॥ ॥

तामध्वः किंतुस्वर्गस्थदेवेष्वपीत्याह ॥ यमिति ॥ यंमध्वं विश्वेदेवाः इत्इत्थं ऋष्यादिशिष्यवदेव अभि अभितः हर्यंति ज्ञान रससंग्रहायप्राप्नुवंति । यंअभितःस्वसभासुव्यवहरंतिवा अभितःवेदशास्त्रादिषुविद्यमानान्यद्गुणानेवसमाहरंतिवा । शिवमुखैरे कतोदेववृंदैः शुकमुखैरन्यतःसन्मुनींद्रैरितिवचनात् ॥ ६५५ ॥ इममेवार्थंप्रपंचयति ॥ शतक्रतवित्यादिना ॥ परमैश्वर्येति इंद्राख्येत्यस्योपपादकं ॥ ६५६ ॥ ६५७ ॥ सत्वंनचेदितिप्रोक्तमित्यनेन सत्वंनचेद्धातरिदंनिजंभवेद्विज्ञानमज्ञानभिदापमार्जनं । गुणप्रकाशैरनुमीयतेभवान्प्रकाशतेयस्यचयेनवागुणइतिभागवतस्थब्रह्मवाक्यंगृह्णाति । उक्तभागवतवचनानुसारेणश्रुतिरपिप्रवृ

त्तेतिभावः । अयंश्लोकार्थः । अज्ञानभिदापमार्जनं अज्ञानविपरीतज्ञाननाशनं । सत्वं सत्वगुणात्मकं । इदं ब्रह्मणिमयिविद्यमानं विज्ञानं विशिष्टं ईश्वरादन्यत्रालोचनेसतिसर्वविषयंज्ञानं मनोवृत्तिरूपज्ञानं निजंतवसन्निधानाज्जातं । नचेत् गुणप्रकाशैः ब्रह्मादिषुविद्यमानगुणप्रकाशैः भवान् येनकेनपुरुषेणानुमीयते । नकेनाप्यनुमीयतइत्यर्थः । यच्छब्दोत्रकिंशब्दार्थे । उपरिकथ्यमानंयेनेतिपदमत्रापिसंबध्यते । अन्यथाअन्वयस्यापूर्णत्वात् । इदंज्ञानं केनचित्पुरुषविशेषेणोपदिष्टं अनित्यज्ञानत्वेसत्यतिशयितज्ञानत्वात् व्यतिरेकेणभगवज्ज्ञानवत् लौकिकघटादिज्ञानवद्वेतिब्रह्मादिषुविद्यमानज्ञानविशेषंदृष्ट्वायतस्तवानुमानंकुर्वेति अतस्त

एनानेनप्राणतयासर्वत्रव्यापिनार्पितं ॥ सोमंयज्ञरसंसर्वंपिबपूर्णोपितत्प्रियात् ॥
ज्ञानयज्ञरसंदिव्यज्ञानाख्यंरसमेववा ॥ ६५९ ॥ ॥ ॥

ज्ज्ञानंत्वत्सन्निधानोत्पन्नंभवेत् । ननुचक्षुरादिनैवभगवज्ज्ञानंभवेत् किमनुमानेनेत्यतउक्तं ॥ प्रकाशतइत्यादिना ॥ अगुणः सत्वादिगुणरहितोभवान् यस्य कस्यपुरुषस्य येनकेन साधनेन प्रकाशते । नकेनापीत्यर्थः । सत्वादिगुणत्रयात्मकजगतएवसर्वेश्वरत्वभ्रांत्यावेदस्यापितद्विषयत्वभ्रमेणान्यथासिद्धत्वात् । अतोब्रह्मनिष्ठज्ञानविशेषेणभगवदनुमानावश्यंभावादवश्यंब्रह्मनिष्ठज्ञानंभगवत्सन्निधानोत्पन्नंभवेदितिश्लोकार्थः । अतःश्रुतिरपिज्ञानविशेषभरितत्वान्मध्वाचार्यशरीरंभगवत्सन्निधानपात्रत्वेनवर्णयति ॥ ६५८ ॥ तत्प्रियात् तवसोमरसार्पकमुख्यप्राणेप्रियात् ॥ ६५९ ॥ ॥ ॥

तद्गुणस्य मुख्यप्राणगुणस्यबोधनात् पवमानादौबोधनात् । षष्ठी मदिरस्येतिषष्ठी । तत् ज्ञानयज्ञेसोमरसस्थानीयंज्ञानं जुह्वत् हवनंकुर्वन् । अतएव आहावनामा आसमंतात्योगिषुज्ञानरसंजुहोतीतिव्युत्पत्त्याप्याहावनामेतिग्राह्यं ॥ ६६०॥ ६६१ ॥६६२॥ आकृष्य स्वहृदयगुहांप्रत्याकृष्य । हर्यंतीत्यस्यार्थकथनं ध्यायंतीति । गुणोपसंहारात्मकध्यानस्यहृञ्धात्वर्थत्वसंभवादितिभावः ॥ ६६३ ॥ हर्यंतीतिछांदसपदं व्याहरंतिअभिलपंति । अत्रापिहृञ्धात्वर्थत्वंघटयितुंव्याहरंतीत्युक्तं । ईप्सयाज्ञानेच्छया ॥६६४॥

योयंमध्वोमध्वनामामदिरस्यमदीरणात् ॥ जातस्यवेदशास्त्रादेर्मथनादुदितस्यवा॥ ६६० ॥
ज्ञानस्यपूर्णस्संपूर्णःकेवलंकरणंनतत् ॥ तत्संबंध्यपितज्ज्ञानंतद्गुणस्यापिबोधनात् ॥ ६६१ ॥
इतिज्ञापयितुंषष्ठीतच्चयोगिषुसर्वतः ॥ जुह्वदाहावनामासन्वर्ततेव्याससन्निधौ ॥ ६६२॥ मुनि
मात्रगुरुर्नासाविदित्थंयमभिस्थिताः ॥ हर्यंतिमनसाऽऽकृष्यध्यायंतिसकलास्सुराः ॥ ६६३॥
अभितोवाव्याहरंतितमीदृक्सुगुणंसुराः॥ यद्वाभितःप्राप्नुवंतिचेप्सयाशास्त्रसंपदां॥ ६६४॥
हर्यन्नुषसमित्यादौप्राप्त्यर्थोस्तियतोहृञिः ॥ अन्यार्थशून्यावागेषाकिंनब्रूतेगुरुंमम॥ ६६५ ॥

हर्यन्नित्यस्यप्राप्त्यर्थत्वेवैदिकप्रयोगंदर्शयति ॥ हर्यन्नुषसमित्यादाविति ॥ अनेन हर्यन्नुषसमर्चयःसूर्यंहर्यन्नरोचयः । विद्वांश्चिकित्वान्हर्यश्ववर्धसइंद्रविश्वाअभिश्रियइतिश्रुतिंगृह्णाति । अयमर्थः । हेहर्यश्व हरिद्वर्णाश्वसमेत । इंद्र इंद्रनामक परमैश्वर्यसंपन्नपरमात्मन् विद्वान्सर्वज्ञः चिकित्वान् जगत्सृष्ट्यादिकंकुर्वंस्त्वं उषसं उषःकालं हर्यन्प्राप्नुवन् । अर्चयः स्नानसंध्यावंदना

दिनाभगवत्पूजांसज्जनमुखेनअकारयः । सूर्यं उषःकालोपरिउद्यंतमादित्यं हर्यन्प्राप्नुवन् । तद्विंबेसन्निधानंकुर्वन्नित्यर्थः । विश्वाः समस्ताः अभिअभितोविद्यमानाः श्रियः नानाश्रीमतस्सप्तद्वीपान्दिशोवा वर्धसे तत्रत्यसज्जनानामभिवृद्धये अरोचयः प्राकाशयः । सूर्येस्थित्वास्वमरीचिभिःसकलंजगदभासयइत्यर्थः । यदादित्यगतंतेजोजगद्भासयतेखिलं । यच्चंद्रमसियच्चाग्नौतत्तेजो विद्धिमामकमितिस्मृतेः । एवंचएतच्छ्रुतिसमाख्ययाहर्यतीत्यत्रापिप्राप्नुवंतीत्यर्थोघटतइतिभावः ॥ ६६५ ॥ आचार्यविषयेअति स्पष्टंश्रुत्यंतरंचाह ॥ मध्वोवइति ॥ तं मध्वं । अनेन मध्वोवोनाममारुतंयजत्राःप्रयज्ञेषुशवसामदंति । येरेजयंतिरोदसीचि दुर्वीपिन्वंत्युत्संयदयासुरुग्राइतिश्रुतिंगृह्णाति । अयमर्थः । यद्यस्मात्उग्राः बाहुयुद्धेवाग्युद्धेचात्युग्राः हेहनूमद्भीममध्वरूपवा

मध्वोवोनामेतिवाक्यमरुत्सूक्तेतमुज्जगौ ॥ ६६६ ॥

योरवताराः उर्वी उर्वींभूमिमित्यर्थः । सुपांसुलुगितिसूत्रात् । अयासुः आजग्मुः । तस्मात्उत्सं स्वचरणकमलेउत्सुकं पुरुषं पिन्वंति सकलभाग्यसेचनंकृत्वारक्षंति । पिन्वसेचनइतिधातोः । स्वसत्यलोकंविहायभूमिंप्रत्यागमनाद्भूमिस्थसज्जनरक्षकत्वं मुख्यप्राणस्यअवतारास्सुप्रसिद्धाभविष्यंतीतिकाण्वोक्तिसत्यकरणात्काण्वरक्षकत्वंचसुप्रसिद्धमभूदितिभावः । ये के चित् एव । उर्वी उर्व्यौ उत्कृष्टेरोदसी द्यावापृथिव्यौ । रेजयंति राजयंति स्वचरित्रेणकांत्याचप्रकाशयंतीत्यर्थः । चरित्रेणापिअसुरजनमोहनाय स्वबंधनसर्पबंधनादिनाकदाचिच्छक्तिगूहनं कांतेश्चबहुशोऽप्रकाशनंसूचयितुंरेजयंतीत्यलौकिकपदप्रयोगः । हेमरुतः तेष्ववतारेषुमरुद्गणाग्रगण्यत्वात् वःसंबंधी यःमध्वोनाम मध्वाख्यावतारःतंमारुतंमुख्यप्राणकुमारंमध्वाख्यावतारं यजत्राः याजकाः ॥ ६६१ ॥

यज्ञरक्षकाःयजमानाद्याःऋत्विजःसभ्याश्च यज्ञेषुक्रियमाणेषुसत्सु शवसा कठिणब्राह्मणखंडार्थकथनरूपकर्मनिर्णयाख्यग्रंथश्रवण जनितसुखेन प्रमदंति प्रकर्षेणसंतोषंकुर्वंतीति । छंदःखंडार्थवादीजितकुमतिकुलइत्यणुमध्वविजयवचनात्प्रसिद्धोयमर्थः ॥६६६॥

यद्यतोमुख्यमरुतोवैर्युग्रायेकुमारकाः ॥ अयासुर्भूतलंभीमहनूमन्मध्वनामकाः॥ ६६७॥
येचिदेवजगत्युर्व्यौरोदस्यौपृथिवींदिवं ॥ रेजयंतिचरित्रेणराजयंतियुगेयुगे ॥ ६६८ ॥
पिन्वंतिपालयंत्युत्समुत्सुकंस्वपदांबुजे ॥ पिविंमिविंचयुञ्जातुंसेचनेर्थेनुशासते ॥ पाल
नंचाखिलैरिष्टैस्सेचनंयद्विदुर्बुधाः ॥ ६६९ ॥ बलज्ञानाख्यकार्येषुतेषुपुत्रेषुहेऽनिलाः ॥
मरुतोवःप्रियंमध्वोनाममारुतमद्भुतं ॥ ६७० ॥ यजत्रायाजकास्सर्वेयज्ञेषूक्तिविशारदं ॥
सुखेनभरितास्संतोदृष्ट्वाश्रुत्वाचतद्वचः ॥ प्रमदंतिप्रहृष्यंतिकर्मनिर्णयकोविदं ॥६७१॥
इतिश्रुतिर्यच्चरित्रंवक्त्यत्रैवप्रचारितं॥ समध्वोवैदिकाचार्यस्सिद्धस्सद्विद्वदग्रणीः॥६७२॥
तदस्येतिश्रुतौप्रोक्तोविष्णोस्तुपरमेपदे ॥ उत्सऔत्सुक्यवान्मध्वःकोवासिद्धोनिगद्य
तां ॥ मध्वश्रुतेर्विष्णुभक्तिलिंगाचासौगुरुर्हिनः ॥ ६७३ ॥ ॥

इममेवार्थमभिप्रेत्याह ॥ यदिति ॥ यदित्यस्यैवार्थकथनं यतइति ॥६६७॥६६८॥ पिन्वंतीत्यतःपूर्वंततइतिग्राह्यं । यद्यस्मात् ॥६६९॥मध्वोनाम मध्वइतिनामवान् यः तं॥६७०॥६७१॥अत्र भूलोकएव॥६७२॥तदस्येतिश्रुतावित्यनेन तदस्यप्रियमभिपाथो

अश्यांनरोयत्रदेवयवोमदंति । उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेपरमेमध्वउत्सःइतिश्रुतिंगृह्णाति । अयमर्थः । प्रियं सकलश्रु
तिस्मृतीनांतत्प्रवर्तकमुनीनांचहर्षकरं तत् अकालेमृत्युमथनमित्यादौप्रसिद्धं । अस्य नारायणस्य अभिपाथः अभितःसर्वांगेषु
संबद्धंपाथउदकं शिरआदिसर्वांगेष्वभिषिक्तंतीर्थोदकमित्यर्थः । नरःअहं अश्यां पानंकुर्यां । अंतःशुद्धेरेवमुख्यत्वादश्यामित्यु
क्तं । यत्रविष्णवंगसंबंधेनातिपावितितीर्थे देवयवः ब्रह्मरुद्राद्यादेवाः वैदिकोदेवपदपर्यायोदेवयुशब्दोयं । देवंनारायणंपरिवारत
यासदायुंजंतीतिव्युत्पत्त्यावा देवयवः । मदंति हर्षंकुर्वंति । देवानामपिपानादिनाहर्षकरेविष्णुपादोदकेमनुष्याणांकैमुत्यद्योतनाये
दमुदितं । एवंचब्रह्मादिमनुष्यांतसकलवैष्णवानांविष्णुपादोदकप्राशनंविहितमितिश्रुतेरभिप्रायः। अतएवअश्यामितिलुङ् । देवा

यतश्श्रुत्योरुक्रमस्यसद्दिबंधुरितीर्यते ॥ ततस्तंसागुरुंमुख्यप्राणरूपंन्यरूरुपत् ॥ ६७४ ॥

नांविष्णुपादोदकसेवनंप्रत्यक्षेणदर्शयितुंसकलदेवोत्तममुख्यप्राणावतारमध्वस्यविष्णुपादोदकेप्रीतिंप्रतिपादयितुंश्रुतेरुत्तरार्धंप्रवृ
त्तं । परमेउत्तमे विष्णोः नारायणस्यपदेपादे । उत्स उत्सुकःसःप्रसिद्धःमध्वःमध्वमुनिः इत्थाइत्थं पूर्वोक्तरीत्या विष्णुपादोदक
प्राशनेन उरुक्रमस्य उत्कृष्टपादविक्षेपसहितस्यत्रिविक्रमस्य बंधुर्हि। पुत्रतयाशिष्यतयाचबंधुर्जातोहि। हीत्यनेनास्मिन्नर्थेश्रुतिस्मृ
तिप्रसिद्धिंदर्शयति । एतदेवाभिप्रेत्याह ॥ विष्णोरित्यादिना ॥ असौ श्रुतेरुत्तरार्धोक्तः गुरुर्हि वैष्णवाचार्यभूतःपूर्णप्रज्ञाचा ॥ ६६२ ॥
र्योहीत्यर्थः । हिशब्देनलिंगश्रुत्योस्तत्रैवप्रसिद्धिंसूचयति ॥ ६७३ ॥ निमित्तांतरंचाह ॥ यतइति ॥ साश्रुतिः ॥ ६७४ ॥

ननुविष्णुबंधुत्वोक्तावपिमुख्यप्राणस्यैवात्रकुतःप्राप्तिरित्यतआह ॥ यस्मिन्निति ॥ अनेन कस्मिन्नहमुत्क्रांतउत्क्रांतोभविष्यामि कस्मिन्स्थितेप्रतिष्ठास्यामीति सप्राणमसृजतेतिश्रुतिंगृह्णाति । अत्र उरुक्रमस्यसहिबंधुरितिश्रुतौ ॥ ६७५ ॥ ६७६ ॥ तत्रनिमि त्तत्रयंसंगृह्याह ॥ मुख्यस्येति ॥ अन्येषांबंधूनांसद्भावेपिमुख्यस्य मुख्यबंधोरेव ग्राह्यतयेत्यर्थः । श्रौतसमाख्यया कस्मिन्नह

यस्मिन्स्थितेस्थितोहंस्यांयद्गतौचगतोस्म्यहं ॥ तंस्रक्ष्यामीतिमन्वानःप्राणंसोसृजतप्रभुः ॥ ६७५ ॥ इत्याहोपनिषद्यस्मात्तस्मात्प्रियकुमारकः ॥ प्राणएवहरेर्बंधुस्सएवात्रापिकी र्त्यते ॥ ६७६ ॥ मुख्यस्यैवग्राह्यतयातथाश्रौतसमाख्यया ॥ हिशब्दोदितयाविद्वत्प्रसि द्ध्याचापरोनसः ॥ ६८७ ॥ देवानांप्रायपठितोदेवश्रेष्ठोभवेदयं ॥ धर्मनिर्णयभूमित्वाद्बं धुत्वाच्चमहाप्रभोः ॥ ६७८ ॥ किंचेत्थेतिपदाद्यत्रदेवादेवयुसंज्ञिताः ॥ यद्युंजंतिपरंदेवंप रिवारतयासदा ॥ मदंतितत्रविष्णवंगाभिषिक्ततीर्थपाथसि ॥ ६७९ ॥ नित्यंसोशनवा न्प्रोक्तस्तेनचानंदतीर्थतां ॥ स्पष्टीकरोतिवेदोसौतस्यमध्वाख्ययोगिनः ॥ ६८० ॥ ॥

मितिसमाख्ययेत्यर्थः । विद्वत्प्रसिद्ध्या पूर्णप्रज्ञस्यैवमध्वत्वप्रसिद्ध्येत्यर्थः ॥६७७॥ निमित्तांतरंचाह ॥ देवानामिति ॥६७८॥ यस्मात् तस्मात् देवयुसंज्ञिताइतिसंबंधः । तत्र विष्णुपादोदके ॥ ६७९ ॥ समध्वः नित्यमशनवान्प्रोक्तः । तेनकारणेन । असौ

सहिबंधुरित्थेतिवेदः । तस्यमध्वाख्ययोगिनः आनंदतीर्थतांस्पष्टीकरोतीतिसंबंधः ॥ ६८० ॥ इत्थेतिपदेनविष्णुपादोदकसेवि
त्वसूचनेपिकथंभवदभिमतानंदतीर्थस्यैवलाभइत्यतआह ॥ आनंदरूपस्येति ॥ तस्मात् उक्तरीत्याइत्थंपदसत्त्वाच्च इत्थेतिप
देनउत्तरार्धोक्तमध्वस्यविष्णुपादतीर्थसेवित्वस्यसूचनात्तच्चआनंदरूपस्यहरेःसाक्षाच्चरणतीर्थंयस्यासावितिव्युत्पत्त्याआनंदतीर्थप
दवाच्येअस्मद्गुरावेवसंभवतीतिभावः । इयंश्रुतिः श्रुत्यभिमानिमहालक्ष्म्यामत्कुमारमध्वस्यैवात्रप्रतिपादनंभवेदितिबहुविधनिर
वकाशयुक्तेःसूचनायसूतइत्युक्तं ॥ ६८१ ॥ बळित्थेतिवर्गस्थायां यदीमनुप्रदिवइतिऋच्यपिवाय्वाख्यमध्वविषयतापूर्वसंगत्यापि

आनंदरूपस्यहरेस्तीर्थंयस्यसएवहि ॥ आनंदतीर्थनामास्यात्तस्माचास्मद्गुरुर्भवेत् ॥ अत
श्श्रुतिरियंसूतेमध्वरूपंगुरुंमम ॥ ६८१ ॥ बळित्थेतिश्रुतिर्वायोर्देवस्यप्रथमंवपुः ॥ द्विती
यंचतृतीयंचवक्तिवाक्यत्रयेक्रमात् ॥ ६८२ ॥ तच्चप्रसिद्धसंख्यागायोगादन्याप्रसिद्धि
तः ॥ तत्ववाद्युदितंरूपत्रयमेवेतिमेमतिः ॥ ६८३ ॥ ॥ ॥

प्रसिद्धेत्याह ॥ बळित्थेतिश्रुतिरिति ॥ सहसो वेगवतो देवस्येतिप्राथमिकवाक्येवायोःस्पष्टंप्रस्तुतत्वात्वायोरित्युक्तं । यदी
मुपह्वरतेसाधतेमतिर्ऋतस्यधेनाअनयंतसस्रुतः। पृक्षोवपुःपितुमान्नित्यआशयेद्वितीयमासप्तशिवासुमातृषु । तृतीयमस्यवृषभस्य
दोहसेदशप्रमतिंजनयंतयोषणइतिवाक्यत्रये यद्यपिप्रथमवाक्येप्रथममितिपदंनास्ति तथाप्युत्तरवाक्यद्वयेद्वितीयतृतीयपदसद्भा
वेनतद्बलात्पूर्ववाक्येपिप्रथममितिपदंऊह्यमितिभावः ॥ ६८२ ॥ तत् वायोरूपत्रयं प्रसिद्धसंख्यागायोगात् वायोरवतारत्रयतयाप्र

सिद्धस्य हनुमद्भीममध्वाख्यस्यरूपत्रयस्यसंख्यागायोगात् ॥ ६८३ ॥ युक्त्यंतरंचाह ॥ हनुमदिति ॥ प्रथमद्वितीयावतारयोर्वि
ष्णुकिंकरतयारामायणभारतादौप्रसिद्धत्वात्तृतीयोप्यवतारोविष्णुभक्तिधुरंधरोभवेत् । अतः अतोपि तत्ववाद्युदितोमध्वाचार्य
एवासावितिभावः ॥ ६८४ ॥ पूर्वविष्णुकिंकरत्वबलात्तृतीयोमध्वाचार्यइत्युक्तं । इदानींवैष्णवसेनानायकत्वबलादपिसएवतृतीय
इत्याह ॥ पूर्वाविति ॥ हरिसेनायाः कपिसेनायाः पांडवसेनायाश्च यद्यस्मात् ॥ ६८५ ॥ युक्त्यंतरंचाह ॥ त्रेतायामिति ॥

हनुमद्भीमसंज्ञौद्वौप्रसिद्धौविष्णुकिंकरौ ॥ अतस्तृतीयोपिकश्चिद्भवेद्भक्तधुरंधरः ॥ ६८४ ॥ पूर्वौद्वौह
रिसेनायास्सेनान्यौयन्मतौसतां ॥ अतस्तृतीयोपिसोयंवैष्णवाग्रेसरोभवेत् ॥ ६८५ ॥ त्रेतायांद्वा
परेचैवतौद्वौवायुकुमारकौ ॥ तत्तृतीयःकलौचस्याद्युक्त्यावायुकुमारकः ॥ यौक्तस्यतस्यसुजनप्रसि
द्धिर्मध्वतांदिशेत् ॥ ६८६ ॥ बलकार्येषुयोविष्णोःसाचिव्यमकरोन्मरुत् ॥ हनूमदादिरूपेणज्ञानका
र्येपिसप्रभोः ॥ व्यासरूपस्यसचिवीभावमर्हतिनापरः ॥ ६८७ ॥ बलकार्येसहायौतौप्रभोर्दानवम
र्दनौ ॥ ज्ञानकार्येसूत्रकृतोभाष्यकृद्भिसहायकृत् ॥ अतोपिमध्वनामायस्तृतीयोवायुनंदनः ॥ ६८८ ॥

तौ हनुमद्भीमौ तत्तस्मात् । कलौच कलियुगएव । यौक्तस्य उक्तयुक्तिबलात्कलियुगेआगतस्य सुजनप्रसिद्धिः तत्ववादिजनप्र
सिद्धिः । कलियुगस्थवाय्ववतारःतत्ववाद्याख्यशिष्यप्रसिद्धामध्वाचार्यएवभवेदितिभावः ॥ ६८६ ॥ युक्त्यंतरेणापितृतीयोवा
य्ववतारोमध्वएवभवेदित्याह ॥ बलेति ॥ सःमरुत् ॥ ६८७ ॥ प्रभोर्बलकार्येसहायौतौहनुमद्भीमौ दानवमर्दनौ प्रभुर्यथारावण

शिशुपालादिदानवमर्दनः तद्वत्स्वयमपिप्रभुकार्यधुरंधरत्वात्अक्षकुमारजरासंधादिदानवमर्दनौ । एवंज्ञानकार्येसूत्रकृतोव्यासस्य सकलदुर्भाष्याणामंतेसिद्धांतीभूतश्रीमद्भाष्यकारोमध्वएवप्रभोःकार्यएवधुरंधरत्वात्तृतीयोवाय्ववतारोन्यायाय्यइतिभावः ॥६८८॥ युक्त्यंतरंचाह ॥ किंचेति ॥ आश्रमचतुष्कस्य ब्रह्मचारिगृहस्थवानप्रस्थयत्याख्याश्रमचतुष्कस्य गुरोःमुख्यप्राणस्य । आश्रमचतुष्टयधर्ममाचरिष्यामीत्यवतीर्णस्यमुख्यप्राणस्येतिभावः । प्रथमंवपुः हनुमदाख्यंवपुः । वर्णिवनिनोः ब्रह्मचारिवानप्रस्थयोः जितेंद्रियतयागायत्रीमंत्रजपात्ब्रह्मचारी कंदमूलफलाद्याहारंकृत्वावनएवनिवसनात्वानप्रस्थः । एवंचाश्रमचतुष्टयधर्माचरणा

किंचाश्रमचतुष्कस्यधर्ममाचरतोगुरोः ॥ प्रथमंतुवपुर्वर्णिवनिनोर्धर्ममाचरत् ॥ द्वितीयंगृ
हिणोधर्ममाचरद्भीमसंज्ञितं ॥ ६८९ ॥ तृतीयंचवपुर्युक्त्यायत्याश्रमधुरंधरं ॥ भवेदवश्यं
तद्वायोर्माध्वीतनुरभूद्बलात् ॥ ६९० ॥ देवोवादानवोवास्याद्भाष्यकारोनमानवः ॥ तत्रवि
ष्णौरतादेवादैत्याब्रह्मशिवादिषु ॥ अतोपिवैष्णवंभाष्यंदेवमूलंनसंशयः ॥ ६९१ ॥ ॥

यावतारचतुष्टयाभावात्प्रथमावतारएवस्वसंकल्पपरिपूरणायआश्रमद्वयधर्ममाचरितवानितिभावः ॥ ६८९ ॥ युक्त्या आश्रमत्वयुक्त्या । तत्वपुः । बलात् युक्तिबलात् ॥ ६९० ॥ पुनरपिमध्वस्यवाय्ववतारत्वे इतरभाष्यकाराणांदानवरूपत्वेचयुक्तिमाह ॥ देवोवेति ॥ मनुष्यमात्रस्यसुयुक्त्यावादयुक्त्यासकलशास्त्रनिर्णायकसूत्रेप्रवृत्त्ययोगात् । दानवानांतु देववत्सहजशक्त्यभावेपि शिवादिविषयककुत्सिततीव्रतपआदिनाआहितशक्तिसंभवेनप्रवृत्त्युपपत्तेः । मानवानांतुउभयविधशक्त्योरभावान्नप्रवृत्तिरि

तिभावः। कोवाभाष्यकारोदानवइत्यतोविवेकमाह ॥तत्रेति॥ आदिपदेन निर्गुणापरपर्यायंशून्यंगृह्यते। विष्णावेवनिष्ठावंतोदेवाःत तोन्यत्रनिष्ठावंतोदैत्याइतितावत्सिद्धं। एवंचवैष्णवभाष्यकारीदेवः अवैष्णवभाष्यकारीदानवइतिकथंनसिद्ध्येदितिभावः ॥६९१॥ किंचमायावादिनोनिर्गुणब्रह्मणएवसत्यतांवदंतःकृष्णस्यतदधीनजीवादेश्चविशिष्टपदार्थस्यात्यंताभावप्रतियोगित्वरूपमिथ्यात्वंवर्ण यंति। इयंचप्रक्रियाकृष्णावतारेदैत्यकृतोद्यमपर्यालोचनयादैत्यमूलैवभवितुमर्हतीत्याह॥अयादर्वीमिति ॥ अयादर्वीं कृष्णसहित सकलयादवरहितां। एकःसाल्वः। अन्यःबकः जग्रास जिघांसयाभक्षितवान्। यःकृष्णः अग्रसीत् स्वोदरेनिक्षिप्यरक्षितवान्। तस्मा

अयादर्वींक्ष्मांकरिष्यइत्येकःप्रतिशुश्रुवे ॥ अन्यस्तुकृष्णंजग्रासयोग्रसीत्सकलंजगत् ॥ ६९२ ॥
सवादीमूलदैत्योवातदावेशयुतोपिवा ॥ अपरःकोपिदैत्यस्स्यान्नचेदीदृङ्मतिःकुतः ॥ ६९३ ॥
सूचिमात्रप्रदेशंचयस्स्वतोन्यस्यनादिशत् ॥ सभीमगदयाशाम्येन्नाभीमस्यपराक्रमैः ॥ मध्व
स्यभीमरूपत्वंतद्योक्तमितिमेमतिः ॥ ६९४ ॥ ॥ ॥

ज्जगदुदरंकृष्णंहंतुकामोबकःकृष्णेनसहसकलजगदभावकरणेकृतोद्यमइतिभावः। एवंचसाल्वःकृष्णाभावं उपलक्षणयासर्वजीवाभा वंचकामयमानः बकस्तुकृष्णाभावंसकलजगदभावंचकामयमानइतिभागवतप्रसिद्ध्यासिद्धं ॥६९२॥ सवादी कृष्णजीवजडात्मकज गतोमिथ्यात्ववादी मूलदैत्यः पूर्वोक्तसाल्वः कोपि बकादिष्वेकः। नचेत् दैत्योनचेत्। ईदृङ्मतिः कृष्णादिसकलजगतोमिथ्यात्वम तिः॥६९३॥ प्रकारांतरेणापिभीमस्यैवमध्वरूपत्वमुपपादयति ॥सूचिमात्रेति॥ स्वतोन्यस्यसूचिमात्रप्रदेशंचनदिशतीत्यनेन मम

चेत् जगदसद्विलक्षणं स्वविषयेराज्यदेशादेरसत्वानंगीकारात्। अन्यस्यचेत् सद्विलक्षणं। अन्यविषयेराज्यदेशादिकंनास्तीत्यंगीका
रात्। एवंचात्यंताभावप्रतियोगित्वरूपमिथ्यात्ववादस्य पूर्वोक्तौदैत्यौगुरू सदसद्वैलक्षण्यरूपमिथ्यात्ववादस्यचदुर्योधनोगुरुरित्यु
क्तंभवति। अथवा अहमेवराज्येश्वरोनत्वन्यइतिवदन्दुर्योधनःईश्वराभेदवादस्यगुरुः। तथाच कलिरूपमूलदैत्यरूपत्वादयंमतद्वय
स्यापिगुरुरित्युक्तंभवति। सः दुर्योधनोवा तदावेशवशादीदृङ्मतंकुर्वन्मणिमान्वा भीमगदयातद्गदासदृशवाग्रूपगदयावा। अतएव
नाभीमस्यपराक्रमैरित्युक्तं। तत्तस्मात् ॥६९४॥श्रौतपदमहिम्नापिवाक्यत्रयेहनूमदाद्यवतारत्रयस्यैवप्राप्तिरित्याह॥किंचेति॥ धातुः

किंचश्रुतौमतिपदंहनुमद्वाचकंभवेत् ॥ यतोगत्यर्थकोधातुर्ज्ञानार्थइतिशाब्दिकाः ॥ तज्ज्ञान
शीलंतद्वंतंनिर्वक्तिहनुमत्पदं ॥ ६९५ ॥ मतिरूपंमतीत्याहुर्मतिमंतंयतोबुधाः ॥ अतस्त्वाभा
विकीयस्यमतिःसमतिरुच्यते ॥ एवंचहनुमानेवमतिशब्दोदितोनकिं ॥ ६९६ ॥ ॥

हनहिंसागत्योरितिधातुः। तत्तस्मात् हनुशब्दस्यज्ञानवाचकत्वात्। ज्ञानशीलमित्यनेन हनूशब्दादुपरिताच्छीलिकार्थउनप्रत्यय
इतिसूचयति। तद्वंतमित्यनेन हनुमत्पदेविद्यमानमतुप्प्रत्ययार्थंदर्शयति। ततश्चज्ञानशीलवान्हनुमानित्युक्तंभवति। क्वचिद्धनूमानि
तिप्रयोगस्तुनिरुक्तत्वात्पुनरपिउकाराख्यवर्णागममादायेतिद्रष्टव्यं। हन्वाख्यांगविशेषवत्त्वस्यमर्कटांतरेपिसत्त्वेनरामव्यासयोर्मुख्य
शिष्येमूलरामायणप्रवर्तकाचार्येवैयाकरणगुरौहनुमतिश्रौतमतिपदसमाख्ययाअस्मदुक्तव्युत्पत्तेरेवश्लाघ्यत्वादितिभावः ॥६९५॥
तर्हिश्रुतावपिहनुमत्पदसमानार्थकतयामतिमानित्येववक्तव्यं मतिरितिपदंकिमर्थमित्यतस्तथोक्तावपिसएवार्थोलभ्यतइत्यत्रलौकिक ॥ ६६५॥

प्रयोगंदर्शयति ॥ मतिरूपमिति ॥ ६९६ ॥ सावाक् पृक्षोवपुरितिश्रुतिः। पितुरित्यन्ननामेतिब्राह्मणवचनबलात्पितुरन्नमस्या
स्तीतिव्युत्पत्त्याबह्वन्नवान्भीमएवपितुमानित्युच्यते। बहुधनेधनवानितिप्रयोगदर्शनेनबाहुल्यस्यापिमतुबर्थत्वादितिभावः॥६९७॥
दशप्रमतिरितिनामअस्यवर्ततइतिदशप्रमतिनामि। सा तृतीयमस्येतिश्रुतिः। तत् नाम बहुत्वार्थदशत्वोक्तेरित्यनेन दशदशात
स्तच्छतं शतशतानितत्सहस्राणितत्सर्वमितिश्रुतिंसूचयति। युक्त्यापि दशदशकस्यशतत्वात् दशशतकस्यसहस्रत्वात् एवमनंता

द्वितीयंचवपुस्सावाक्पितुमानितिशंसति ॥ पितुरित्यन्ननामेतिब्राह्मणंपितुमांस्ततः ॥
बह्वन्नवानभूद्भीमोबाहुल्यार्थमतुब्बलात् ॥ ६९७ ॥ तृतीयंतुवपुःप्राहदशप्रमतिनामि
सा ॥ तच्चपूर्णप्रज्ञनामसमानार्थंप्रतीयते ॥ ६९८ ॥ बहुत्वार्थदशत्वोक्तेःपूर्णत्वार्थेपिवर्त
नात् ॥ अतःपूर्णप्रज्ञएवदशप्रमतिनामवान् ॥ ६९९ ॥ अप्यक्षरस्यसाम्येननिर्ब्रूयादिति
वैदिकाः ॥ सर्वसाम्येतुशब्दौद्वौकथंनैकार्थवाचकौ ॥ ७०० ॥ दशप्रमतिनामान्योयतो
नास्तिजगत्त्रये ॥ अर्थालाभेनशब्दोसौपूर्णप्रज्ञंबलाद्व्रजेत् ॥७०१॥ ॥

नामपिदशसंख्ययैवगुणनात्दशप्रमप्रतिपदंपूर्णत्वार्थकमितिमन्यते ॥ ६९८ ॥ अतः दशपदस्यपूर्णपदपर्यायत्वात् ॥ ६९९ ॥ द्वौ
दशप्रमतिपूर्णप्रमतिशब्दौ।उक्तंचपंचरात्रेसंहितायां। दशेतिसर्वमुद्दिष्टंसर्वंपूर्णमिहोच्यते। प्रज्ञाप्रमतिरुद्दिष्टापूर्णप्रज्ञस्ततःस्मृतइति
॥७००॥ युक्त्यंतरंचाह ॥दशप्रमतीति॥ अर्थालाभेन अस्मदाचार्यार्थकत्वाभावेअर्थस्यैवालाभेन असौशब्दः दशप्रमतिशब्दः।

बलात् शब्दस्यार्थसाहित्यावश्यंभावबलात्। यदाहकालिदासोपिवागर्थाविवसंपृक्ताविति॥७०१॥युक्त्यंतरंचाह॥ यतइति॥ अतः एकप्रकरणस्थशब्दद्वयस्यभिन्नार्थकत्वायोगात् ॥७०२॥ वाक्यार्थपर्यालोचनयापितृतीयवाक्यंमध्वपरमितिदर्शयितुंवाक्यार्थंवक्ति ॥वृषभस्येति॥वृषभस्य श्रेष्ठस्य अस्य पूर्वोक्तवायुदेवस्य तृतीयपदस्यविशेषणपदत्वेनसाकांक्षत्वात्तत्पूरणायपूर्ववाक्याद्वपुःपद मावर्तनीयमितिभावेनतृतीयंवपुरित्युक्तं। कस्ययोषणइत्याकांक्षापूरणाय योग्यतयाहरेरित्युक्तं । देवेषुबहुभार्यत्वस्यश्रीभूदुर्गापतौ

यतोमध्वोमातरिश्वागुहासंतंमथायति ॥ इतिवक्ष्यतियंमध्वंमातरिश्वाभिधंस्फुटं ॥
दशप्रमतिनामात्रसएवातोनसंशयः ॥ ७०२ ॥ वृषभस्यास्यदेवस्यतृतीयंचवपुर्हरेः ॥
योषितोवेदमानिन्यश्श्रीभूदुर्गाभिधाःकिल ॥ ७०३ ॥ दोहसेज्ञानदोहायदशप्रमति
संज्ञितं ॥ जनयंतनिजाम्नायरक्षणार्थमजीजनन् ॥ ७०४ ॥ अमाङ्योगेपिलङ्रूपंयत
स्स्याच्छंदसीदृशं ॥ छंदस्यसन्प्रत्ययोपिंतुमर्थेऽस्तीतिशाब्दिकाः ॥ ७०५ ॥ ॥

हरावेवयुक्तत्वादितिभावः। पूषन्शब्दवत्योषन्शब्दोपिनकारांतस्त्रीलिंगोवैदिकोस्ति । अतएवयोषणइत्यस्ययोषितइत्यर्थउक्तः। दोहसइत्यत्रापिहरेरितिपदमावर्तनीयं । तासामेतज्जननीत्वेकिंकारणमित्यतउक्तंनिजेति । मानुषस्त्रीणांदेवजननीत्वासंभवात्भग वत्पुत्रस्यमुख्यप्राणस्यलक्ष्मीपुत्रत्वात्सहजमातरस्ताएवमनुष्यपत्न्यामाविष्टास्तंजनयामासुरितिभावः ॥ ७०३ ॥ ७०४ ॥ ननु लडागमस्यावश्यकत्वादजनयंतेतिवक्तव्यं जनयंतेतिकथमित्यतआ ॥ अमाङ्योगेपीति ॥ अमाङ्योगे निषेधार्थकमाङ्योगाभा

वेपि । माङ्योगेअडागमाभावोलोकसिद्धिः । अमाङ्योगेपिछंदसिअडागमोवैकल्पिकः । तस्माज्जनयंतेत्यपिपदंछंदसीतिभावः।अनेन बहुलंछंदस्यमाङ्योगेपीतिसूत्रंसूचयति । तुमर्थेतुमुन्प्रत्ययार्थे । दोग्धुमित्याद्यर्थेदोहसइत्यादिपदमपिभवतीतिभावः । एवंचहरिविषयकज्ञानदोहायवेदाभिमानिदेवताभिर्जनितः पुत्रोमध्वएवभवतीतिभावः॥७०५॥यदीमनुप्रदिवइतिवाक्यस्यार्थमाह ॥यतइति॥

यतोमध्वोमातरिश्वाजन्मनोनुसुराननु ॥ प्रकृष्टविजिगीषादिशक्तिमान्प्रदिवस्सुधीः ॥७०६॥
प्रकृष्टाद्यौर्येषुतेवाप्रदिवोदेवताजनाः ॥ताननूद्दिश्येतिवार्थोवक्तव्योत्रविचक्षणैः ॥ ७०७ ॥
आधवेसर्वतश्श्रेष्ठयेयद्भवःपतिरुच्यते ॥ भावप्रधानोनिर्देशोप्यस्तितेनोचितंहितत् ॥७०८॥
गुहासंतंहृद्गुहायांवसंतंपुरुषोत्तमं ॥ ईमित्थंहृद्गुहास्थत्वाद्याकारेणमथायति ॥ वेदशास्त्रादि
मथनंकृत्वादर्शयतिप्रभुः ॥ ७०९ ॥ दीर्घेणमथनस्यातिदीर्घतांश्रौततांचसा ॥ असूचयत्तेन
नानादुर्भाष्याण्यप्यमोचयत् ॥ ७१० ॥ तस्मादीशानादयोपिसूरयस्तत्प्रसादतः ॥ बभूवुरि
तिसंबंधोयतोत्रैकोबहुःकृतः ॥ आद्यर्थैवविभक्तिस्तदितिसर्वंचमंगलं ॥ ७११ ॥ ॥

यदित्यस्यार्थकथनं यतइति । यस्मात्कारणादित्यर्थः। अन्वित्यस्यसाकांक्षत्वाच्छेषपूरणंजन्मनोनु जन्मानंतरमिति।सुराननु सुरानुद्दिश्येति॥७०६॥प्रदिवइत्यस्यार्थांतरमाह॥प्रकृष्टाद्यौरिति॥७०७॥तत् सर्वतःश्रैष्ठ्यरूपार्थकथनं॥७०८॥७०९॥साश्रुतिः । तेन मथनस्यदीर्घत्वापरपर्यायबहुकालस्थायित्वसूचनेन ।दुर्भाष्यकृतमतानिपूर्वोत्तरविरुद्धत्वादस्थिराणीतिभावः॥७१०॥ तस्मात्कारणा

त्। तत्प्रसादतः मध्वप्रसादतः। बभूवुः ज्ञानिनोबभूवुः। अनेन बुध्नात्ज्ञानरूपात् यत्यस्मात् मध्वात् ईशानासःईशानाद्याः महि षस्यनारायणस्य वर्पसः वरणीयत्वात्पालकत्वात्वर्पःसंज्ञान् गुणान् निरकृंतनिरजानंतेतिश्रुतेरर्थोपिसूचितोभवति । संबंधः यदी मन्वितिवाक्यस्यचसंबंधः। उपलक्षणंचैतत्। यच्छब्दस्यतच्छब्दापेक्षत्वात् तत्तृतीयंवपुर्जनयंतेति अस्यापिवाक्यस्यस्वपूर्ववाक्येन संबंधश्चेतिद्रष्टव्यं । यस्मादित्यस्यतत्तृतीयंवपुरितिपूर्वेणान्वयः। अत्रश्रुतौ । एकः एकशिवप्रतिपादकेशानशब्दः। बहुवचनांतवि भक्तिःबहुवचनरूपविभक्तिः। तत्तस्मात् ईशानपदवाच्यशिवस्यैकत्वेनबहुवचनस्यआद्यर्थंविनार्थांतरायोगात् ॥७११॥ मद्गीः मम ग्रंथरूपावाक् तद्युक्तिमल्लिका पूर्वाचार्योक्तार्थेयुक्तिसंग्रहरूपत्वाद्युक्तिमल्लिकाख्या । नन्वन्नसूक्तमध्यस्थेस्मिन्वर्गेकुतोमुख्यप्राण

वर्गार्थस्तूदितःपूर्वैर्मद्गीस्तद्युक्तिमल्लिका ॥७१२॥

स्यप्रसंगइतिचेत् न । अन्नमात्रस्यप्राणाद्याहुतिपंचकभरितत्वेनान्नसूक्तएवप्राणस्तुतेरेवावश्यकत्वात्। तथाचायंवर्गार्थः । सहसः वेगवत्त्वात् ब्रह्मांडांतर्गतघनोदकमध्यस्थवायुकूर्मरूपेणजगद्धारकशेषाधारतयाबहुतरसहनशीलत्वाद्वासहश्शब्दवाच्यस्य देवस्य मुख्यप्राणस्य प्राणादभूद्यस्यचराचराणांप्राणःसहोबलमोजश्चवायुरितिभागवतवचनेसहोबलादिशब्दानांमुख्यप्राणेप्रयोगाच्च । अतएवअनुशासनबलात्जगद्धारणाख्यकार्यबलाच्च बट् बलात्मकं दर्शतं दर्शेन ज्ञानेन ततं । यतोविष्णोःस्वयमजनि तद्रूपस्य सदास्वहृदयकमलेभरणात् मनसागमनादवगमनाच्च भर्गइशब्दवाच्यं तन्मूलरूपं यतोभगवतःस्वयमजनि तदाज्ञयेतिचग्राह्यं। आज्ञामन्यैरधार्यामितिवचनात्। इत्था इत्थं । वक्ष्यमाणप्रकारेण । भारतरामायणादौवक्ष्यमाणप्रकारः अतिदीर्घइतिज्ञापयितु 

मित्थेत्युक्तं । इत्थंमूलरूपवदेववा । वपुषे हनुमदाद्यवताराय धायिअधायि । यतोहनुमदाद्यवतारत्रयात् भर्गः भाररूपत्वाद्र तिरूपत्वात्गतिरूपत्वाच्चभर्गइशब्दवाच्यं भगवतोरूपं अजनि मूलरामायणपंचरात्रब्रह्मसूत्रव्याख्यानादिनाप्रादुर्भूतमभूत् । तस्मैवपुषेधायीतिवा यतोयस्मात्कारणात् भर्गइशब्दवाच्यंभगवतोरामरूपंकृष्णरूपंव्यासरूपंचाजनिभूमाववतीर्णमभूत् । तस्मा त्कारणात्तस्सेवार्थंवपुषेधायीतिवा । रूपत्रयस्याप्यभेदसूचनायवपुषइत्येकवचनं । अथवा भर्गइत्यकारांतंपदंशिववाचकं । हर स्स्मरहरोभर्गःकृत्तिवासावृषांगगइत्यभिधानात्। यतः सहसोवायोः भर्गःशिवोजनि तस्यसहसोदेवस्य बट् दर्शतं तत्मूलरूपं इत्थंवपुषेधायीतियोजना । वाय्ववतारंविहायसहःपदेनमुख्यप्राणस्यैवग्रहणायेदंव्याख्यानं । शिवजनकत्वस्यान्यत्रायोगात्किं कराश्शंकराद्याइतिमुख्यप्राणएवसंभवाच्च एकैकरोम्णःकोटिलिंगजनकत्वस्यसुप्रसिद्धत्वेनयुक्तियुक्तत्वाच्चायमप्यर्थोत्यंतश्लाघ्यः। ववयोरभेदेनबलात्मकत्वादयपयगतावितिधातोर्ज्ञानशीलत्वाच्च वायुशब्दवाच्यस्यप्राणस्य मुख्यतोनामभूतवायुशब्दार्थसूचनाय चेदंविशेषणद्वयमुपात्तं । मातरिश्वामथायतीतिउपरिस्पष्टंवायोःकथनादत्रापिदेवस्येतिपदं वायुदेवस्यैववाचकंमातरि भगवज्ज्ञान साधनीभूतेवेदशास्त्रादौश्वा गतिरवगतिर्यस्येतिव्युत्पत्त्यावायुवाचकमातरिश्वपदार्थसूचनायचदर्शतमित्युक्तं। टुओश्विगतिवृद्ध्यो रितिधातोः।वायवायाहिदर्शतेत्यत्रस्पष्टंदर्शतपदस्यवायुविशेषणत्वश्रवणादस्यापिवायुप्रकरणत्वद्योतनायचतदेवपदमुपात्तं। आद्य रूपद्वयेनबलकार्यकरणे तृतीयरूपेणज्ञानकार्यकरणेचवायोश्शक्तिसद्भावसूचनायचक्रमेण बट् दर्शतमितिविशेषणद्वयमुपात्तं। तदुभयंचहृदिभगवतोनिरंतरध्यानादुत्पन्नमितिसूचयितुंध्यानरूपप्रकृष्टचेष्टाकर्तृत्वाख्यप्राणशब्दार्थसूचनायचभर्गइतितृतीयंविशे

षणं । भगवत्परतायांतु भगवतोजननाभावसूचनार्थं गायत्रीप्रतिपाद्यत्वसूचनार्थंच भर्गइतिविशेषणं । यद्वा दर्शतपदंवायोःवेदपुरा
णपंचरात्रभारतादिसच्छास्त्रव्याप्तज्ञानरूपशास्त्राभ्यासाख्योपासनाकौशलदर्शनार्थं ईश्वरादन्यत्रालोचनेसकलपदार्थव्याप्तज्ञानसू
चनार्थंच ।भर्गःपदंतु ध्यानरूपोपासनादिकौशलदर्शनार्थं पुनर्दर्शतपदं दृश्लृप्रेक्षणइतिधातोर्दर्शपदस्यप्रायशोपरोक्षज्ञानवाचकत्वा
त्तत्तत्पदस्यतन्नियमवाचकत्वेनवायोर्द्विविधोपासनाफलीभूतनित्यापरोक्षप्रतीतिप्रतिपादनार्थं । एवंचज्ञानस्यमोक्षंप्रत्यंतरंगसा
धनत्वात्तद्विस्तरप्रदर्शनायेदंविशेषणद्वयं । बलस्यतुज्ञानसाधनदुष्टसंहाराख्यभगवत्सेवोपयोगिनोज्ञानादमुख्यत्वात्तत्प्रतिपादना
यएकंविशेषणंज्ञानसाधनप्रतिपादकत्वादादावेवोपात्तं । यद्वा दर्शोदर्शनं वैष्णवदर्शनं । तं ततं स्वतृतीयावतारेणभूमौव्याप्तंयस्मात्
तद्दर्शतं । भर्गः तद्रूपेणैवभर्ज्यतेनानादुर्दर्शनान्यनेनेतिभर्गश्शब्दवाच्यं । भ्रश्च्पाकइतिधातोःप्रसिद्धोयमर्थः । तदुभयोपयुक्तयु
क्तिज्ञानबलवत्त्वाद्वद्ध । अतएववपुषेधायीतिविशेषणत्रयमपिज्ञानकार्योपयोगितयैवप्रयोजनीयं । उक्तरीत्यातस्यैवातिप्रबलत्वा
त्जगद्गुरुतयाज्ञानदायकतृतीयरूपस्यसाक्षान्मोक्षोपयोगितयाभगवतसर्वोत्तमत्वादिमहामहिमस्थापकतयास्वप्रामाण्यस्थापकत
यास्वार्थकमीमांसकतयाश्रुतेरत्यंतप्रियतयातत्रैवभराद्वपुषइत्येकवचनं । अतएवमूलरूपेअवतारद्वयेपिचअर्धार्धऋक्तृतीयरूपवि
षयेतुसार्धऋक्त्रयं । सर्वज्ञमन्यमनवेक्ष्यसकार्य(वीर्य)दक्षंस्मेराननोभुवनजीवनमाबभाषे तद्युक्त्याभासजालप्रसरविषतरूद्दाहद
क्षप्रमाणज्वालामालाधरोग्निःपवनविजयतेतेऽवतारस्तृतीयइत्यादिवचनात्सएवयुक्तिज्ञानबलवान् दुर्दर्शनभर्जनश्च । यदीं य
एव मतिः अतिशयितमतित्वेन मतिरेवरूपवतीतिकविभिर्वर्णितत्वात्मतिशब्दवाच्योहनुमान् उप रामस्यसमीपे ह्वरते विहरते

क्रीडतइत्यर्थः । वकारश्छांदसः । ह्वरक्रीडायामित्येववाधातुः । इदंचहनहिंसागत्योरितिधातोर्गत्यर्थानांचज्ञानार्थत्वाद्धनंहननंमु
खस्यानुभवोयस्येतिव्युत्पत्त्याहनुमच्छब्दार्थसूचनार्थं । अथवा उप रामस्यसमीपे एकांतवचनश्रवणार्थंरामसमीपागमनेसतीत्य
र्थः । ह्वरते ह्वरकौटिल्यइतिधातोः भक्त्यानम्रांगीभूयतिष्ठतीत्यर्थः । प्रीत्यावनम्राकृतिंवक्त्रांभोरुहसक्तहस्तकमलंभक्तंभटाग्रेसरं
इतिवचनात् । इदमपिसाक्षात्परदेवतयासहएकांतगोष्ठीयोग्यविलक्षणहनुप्रदेशवत्त्वादजहत्स्वार्थलक्षणयाहनुशब्दबोध्यंमुखकम
लमस्येतिव्युत्पत्त्याहनुमच्छब्दार्थस्यैवदर्शनार्थं । यद्वा यद्वपुः पूर्वोक्तविधयामतिशब्दवाच्यं यच्च इत्थं नारायणादौउक्तप्रकारेण
ईइत्थं हरेर्मूलरूपेलक्ष्मीमूलरूपेच स्वरूपमूलरूपवत् ई सीतारूपलक्ष्मीं उपसमीपे लंकास्थितसीताख्यलक्ष्म्याःसमीपइत्यर्थः ।
ईकारे श्रीवाचकत्वस्यनिघंट्वादौप्रसिद्धत्वात् । ऋतस्य यथार्थज्ञानस्यरामस्यचसमीपेह्वरतेक्रीडते । एकांतोक्तिसमयेनम्रीभवतिच ।
साधते दुष्टराक्षसहिंसनादिरामकार्याणिसाधयते । स्वामिभक्तिकरणसमयेअंगकौटिल्यसद्भावेपि स्वामिकार्यकरणसमयेमनःकौ
टिल्याभावसूचनायसाधयतइतिप्रसिद्धप्रयोगंविहाय यथास्थितधातुप्रकृतेरेवप्रयोगःकृतः । इदमपिहनहिंसागत्योरितिधातोः शत्रू
णांहनं हननमस्यास्तीतिहनुमानितिहनुमच्छब्दार्थसूचनार्थमुक्तं । ताच्छील्यप्रदर्शनायउकारः । ऋतस्यरामस्य सस्रुतः अमृतस्र
वणसहिताः धेनाः धिनुपुष्टावितिधातोःकामधेनुवत्सतांधारणपोषणशीलत्वाद्धेनाशब्दवाच्यावाचः ई लंकास्थितसीतारूपल
क्ष्मींप्रति अनयंत अनयत आनीतवानित्यर्थः । व्यत्ययोबहुलमितिवचनात्बहुवचनमेकवचनार्थे । अथवा ततएवकर्तृकर्मव्य
त्यासात् येनवपुषाऋतस्यधेनाःअनयंत सीतांप्रत्यनीयंत । तथा यद्वपुः ऋतस्य ऋगतावितिधातोः रावणबलेनलंकांप्रतिनीतस्य

सीताप्रतिबिंबस्य सस्रुतः अमृतस्रवणसहिताः चित्तद्रवसहितावा ऋतस्यसत्यस्यधेनाः सत्यसंबंधिनीर्वाचः यथार्थवाचइत्यर्थः । मनसारावणमंगीकृत्य वचसारामप्रदर्शनपरानेतियावत् । ऋतस्यरामस्यउप समीपं प्रति अनयंत अनयत । येनवपुषाअनीयंतवा। यद्वा ऋतस्यरामस्य सस्रुतः उपक्रमोपसंहारादियुक्तिस्रवणसहिताः धेनाः वेदपंचरात्रादिब्रह्ममीमांसादिव्याख्यानरूपवाचः मुख्यश्रोतृतयापुरतस्स्थितस्यस्वस्यमनसिअनयंत हनुमाननयंतेत्यर्थः । हनुमतःस्वांतर्यामिणोहरेः वाङ्मनसदेवतायालक्ष्म्या श्चेतित्रयाणांकर्तृत्वसूचनायअनयंतेतिबहुवचनं । अनीयंतवा । अथवा रामस्यप्रतिपादिकाः मूलरामायणादिवाचः देवगंधर्वादि श्रोतृष्वनयंत व्याख्यायतन्मनसिअनयत् अनीयंतवा । अत्रापिबहुवचनस्यउक्तमेवकृत्यं । सीतारामयोरुभयोरपिदेशतस्समव्या प्ततयादूतेनतद्वचनप्रणयनरूपार्थस्यपरमतत्वरहस्यापेक्षयाव्यत्यस्तत्वसूचनायशब्दस्यापिव्यत्यासः । इदमपि हनंहननं वचसामि तस्ततःप्रापणंअस्यवर्ततइतिव्युत्पत्त्याहनुमच्छब्दार्थप्रतिपादनपरं । तद्वपुः प्रथममितिवाक्यशेषेणसंबंधः । यद्वा रामसेवार्थंभू मिंप्राप्तस्यहनुमतःसस्रुतः निरुपाधिकभक्तिस्रवणसहिताः समुद्रोल्लंघनवनभंजनाक्षशिक्षणसेतुबंधनसंजीवनानयनादिमहाकार्यं कृत्वापि प्रवर्धतांभक्तिरलंक्षणेक्षणेत्वयीशमेह्रासविवर्जितासदा । अनुग्रहस्तेमयिचैवमेवनिरूपधौतौममसर्वकामेत्यादिरूपा धेनाः एकांतभक्तानांपोषणहेतुभूतावाचः सस्रुतः आनंदाश्रुकणस्रवणसहिताः धेनाः पट्धात् परसकलतत्वपोषणशीलावाचश्च तथाऋ तस्य भूभारहरणार्थंभूमिंप्राप्तस्यरामस्य सस्रुतः महाप्रसादविपुलकृपारसस्रवणसहिताः धेनाः स्वभक्ताग्रेसरहनुमत्पोषणशीलाः ॥ ६६९ ॥
हनुमंस्त्वंभविष्यतिकल्पेममनाभिकमलात्उद्भूयचतुर्मुखोभूत्वासत्यलोकपदवीश्रियंभोक्ष्यसि । ततःपरं परांतकालेवैकुंठादिलोके

स्थितस्यममसर्वेभ्योप्यत्यधिकांसायुज्यसंपदमनुभविष्यसीत्यादिरूपावाचश्च स्वसमीपेसदाविहरंतंस्वकार्याणिचसाधयंतंमतिमतं यंहनुमंतं ईकारोब्जदलेलक्ष्म्यांवाण्यांकमलकेसरे । रचनायांशक्रचापेबाणेफणिनिकंदरइतिनानार्थरत्नमालोक्तेः ऋतस्यज्ञानरूपस्य पद्मनाभस्य ई नाभिकमलकेसरं अनयंतअनयन् । ऋतस्य सत्यस्य सत्यलोकस्येत्यर्थः । ईश्रियंअनयंतप्रापयंत । तथा ऋतस्यप्रद्युम्नस्य भूकुमारीभूतां ई वाणीं अनयंत सरस्वतीपतिंचक्रुरित्यर्थः । तथाऋतस्यसत्यस्यजगतः ई रचनां पाद्मेकल्पेप्राप्तेजगद्रचनामित्यर्थः । अनयंत जगत्सृष्टिव्यापारनिरतमकुर्वन्नित्यर्थः । यद्यपिमूलरूपवायोरेवब्रह्मपदवी । तथापिहनुमदवतारेसेवयापरितुष्टेनरामेणद त्तत्वात्हनुमत्कथात्वेनश्रुतिरवर्णयत् । तथाब्रह्मशतवर्षानंतरमुक्तौप्राप्तायांसस्रुतः सदाज्ञानरसस्रवणसहितस्य ऋतस्य सत्यवच नशीलस्य ऋतस्य यथार्थज्ञानरूपस्य वैकुंठस्थनारायणमुखकमलस्य उपसमीपे तद्वक्षस्स्थलइत्यर्थः । याईर्लक्ष्मीः तामुप तत्स मीपंअनयंत । वक्षःस्थलोल्लसितश्रीसमीपमुक्तामालाश्रितमणिगणमध्येएकमकुर्वन्नित्यर्थः । दुष्प्रापेपारमेष्ठ्येकरतलमतुलंमूर्ध्नि विन्यस्यधन्यंतन्वन्भूयःप्रभूतप्रणयविकसिताब्जेक्षणस्त्वेक्षमाणइतिवचनात् । मुक्तामालाविमुक्तद्रुहिणगणतनुर्नित्यमुक्तस्यकंठे भक्त्यासक्त्याविमुक्त्यैभवतुभवभयाद्भूयसोभावितान्नइतिवचनाच्च । यद्यपि प्राणश्चूडामणिरित्यप्यस्ति तथापिअमुक्तगम्यस्थान स्थितमूर्तिविषयत्वात्तदत्रनोक्तं । परमुक्त्याख्यमहाफलदायकमूर्तौतूक्तैवगतिः । तस्यहनुमतोवपुःप्रथममितिसंबंधः । अस्यांयो जनिकायांनार्थव्यत्यासोस्ति । उक्तार्थस्यपरमतत्वानुकूलत्वात् । अतएवनशब्दव्यत्यासोपि । अस्यवायोःद्वितीयंवपुः पृक्षः पृत् पृतना क्षीयतेअस्मादितिव्युत्पत्त्यावैरिपृतनाक्षयकारित्वात्पृक्षइशब्दवाच्यं तकारलोपइछांदसः । तेनचमहाबलस्यास्य सेनास

र्वापि नप्रतिसेनेतिज्ञापयति । क्षीक्षयइतिधातोः औणादिकेडस्प्रत्ययेकृतेपृक्षइतिसकारांतंपदं । इदंचवैरिणांभयंमिमीते निर्मि
मीतइतिव्युत्पत्त्याभीमशब्दार्थज्ञापनार्थं । सोयंभीमः पितुमान्बह्वन्नभोक्तृत्वात्पितुमच्छब्दवाच्यश्च । इदमपिबकायदत्तसहस्र
प्रस्थान्नभोजनंकृत्वास्वाश्रितैकचक्रस्थसज्जनानां भीःमीयतेसमीयतेनश्यत्यस्मादितिव्युत्पत्त्याभीमशब्दसूचनार्थं । नित्यःप्रलये
प्यविलुप्तज्ञानत्वान्नित्यशब्दवाच्यःसोयंभीमः सप्त सप्तसु वेदचतुष्टयमूलरामायणपुराणपंचरात्रभेदेनसप्तसंख्यातासु । सुपांसुलु
गितिविभक्तिलोपः । शिवासु शोभनासु मातृषु मीयंतेज्ञायंतेअर्थाःआभ्यइतिव्युत्पत्त्यामातृशब्दवाच्यासुविद्यासु आसमंतात्
शये शेते सर्वत्रविमर्शंकृत्वातिष्ठतीत्यर्थः । शेतइतिवक्तव्येशायइतिवचनं लौकिकानांनिद्रावत्निद्राभावसूचनार्थं । अतएवप्राक्
नित्यइतिविशेषणंचोक्तं । सप्त परतत्वापरतत्वे । तयोःपंचभेदाश्चेतिसप्तार्थाःयथाभवंतितथाशेतइतिवा । इदमपि भियोभृताःमाः
येनसइतिव्युत्पत्त्याभीमशब्दार्थज्ञापनार्थं । भृञ्भरणइतिधातोःकर्मण्यौणादिकडीप्रत्ययेकृतेभीतिरूपंसिद्ध्यति । वृषभस्यश्रे
ष्ठस्यअस्यचवायोः तृतीयंवपुः योषणः योषितः वेदाभिमानिन्यः श्रीभूदुर्गात्मिकाःश्रीनारायणपत्न्यः दोहसेज्ञानदोहायदशप्र
मतिंपूर्णप्रज्ञनामकं जनयंतअजनयंत । अथवा अस्यवायोः दशप्रमतिसंज्ञितंद्वितीयंवपुः वृषभस्य वृषंधर्मं बिभर्तीतिवृषभः सक
लवैष्णवधर्माधारभूतोनारायणः । तस्यदोहसे उपदेशादिनासकलसज्जनमनस्सुप्रकर्षेणपूरणाय वैष्णवधर्मंविष्णुंचलोकेसम्यक्प्र
तिपादयितुमित्यर्थः । दुहप्रपूरणइतिधातोः । योषितःजनयंतेतियोजना । अनेनापि आनंदस्यभगवतःज्ञानप्रदंतीर्थंशास्त्रंयस्येति ॥६७०॥
पूर्णाप्रज्ञायस्येतिच व्युत्पत्त्याआनंदतीर्थपूर्णप्रज्ञाख्यनामद्वयार्थःसूचितोभवति । तृतीयमित्यनेन प्रागुक्तरीत्याआश्रमद्वय

प्रवर्तकरूपद्वयात्तृतीयतयायतीश्वरनामार्थोपिसूचितोभवति । बुध्नात् ज्ञानरूपात् मूलंबुध्नोंघ्रिनामकइत्यभिधानात् सकलवैष्णवानांमूलाधारभूताद्वा यत्यस्मान्मध्वाभिधात्तृतीयरूपात् ईइत्थं जगतिप्रवर्तमानमध्वसिद्धांतरीत्या ईशानासः ईशानाद्याःसूरयःविद्वांसः महिषस्यसर्वोत्तमस्यनारायणस्य वर्पसः वरणीयत्वात्पालकत्वाद्वर्पस्संज्ञान्गुणान्अवतारान्वानिरक्रंत क्रंदिर्गतिशोषणयोरितिधातोः गत्यर्थानांचज्ञानार्थत्वान्निरजानंतेत्यर्थः । अथवा महिषस्यश्रेष्ठस्यवायोः वर्पसःगुरुतयावरणीयात्ज्ञानदानेनपालकाच्च बुध्नात्यस्मात्तृतीयरूपात् ईशानासःसूरयःयथापूर्वंप्राजायंतइतिस्मृतेः यत्रपूर्वेसाध्याःसंतिदेवाइतिश्रुतेश्च ईइत्थं पूर्वमुक्तदेववत्निरक्रंत संसारान्निष्क्रांताअभूवन्नितियोजना । श्रुतिद्वयेनापिज्ञानदातेतिनामार्थःसूचितोभवति । यत्यस्मात्कारणात् प्रदिवः प्रकृष्टाद्यौर्यस्येतिव्युत्पत्त्याप्रकृष्टज्ञानप्रकाशवान् । दिवुक्रीडायामितिधातोःभावार्थेकप्रत्ययेदिवइतिरूपंसिद्ध्यति । मध्वोमातरिश्वामध्वाख्योवायुः अनु जन्मानंतरमेव प्रदिवः प्रकृष्टप्रकाशान् ईशानादिदेवान् अनुसृत्यवा श्रुतिब्रह्ममीमांसादीननुसृत्यवा गुहासंतं हृदयगुहायांविद्यमानंनारायणं आधवे आसमंतात्पतित्वे मथायतिमथयति । वेदशास्त्रविचाराख्यमथनंकृत्वाप्रकाशयतीत्यर्थः । तस्मात्कारणात् यस्मान्मध्वात् ईशानासःसूरयः वर्पसोनिरक्रंत । तद्वपुःतृतीयमित्यादिवाक्येनसंबंधः । अस्यांतुश्रुतौस्पष्टंमध्वेतिनाम्नःमातरिश्वनाम्नासामानाधिकरण्योक्तेः तृतीयरूपस्यमध्वइत्याख्या वायुरूपताचस्पष्टीकृता । यत्यस्मात् अयंमध्वः पितुः स्वमूलरूपजनकात् सर्वोत्तमात्नारायणात् पितुः गुरुतयावास्वपितृभूता त्परमात् परा अतिशयिता माविद्यायस्येतिव्युत्पत्त्यापरमाद्ध्यासाद्वा परि परितः प्रणीयते प्रकर्षेणप्रेरयित्वानीयते इदंकार्यंकर्तुंअत्रगच्छेतिनियम्यते ।

भगवत्संकल्पानुसारेणतत्प्रेरणयैवसर्वत्रगच्छति। नतुदुर्दर्शनाचार्यवत्स्वेच्छाचारी स्वपापचारीचेत्यर्थः। तत्तस्मात्कारणात् विरुद्धः विः विशेषेण रुहतीतिव्युत्पत्त्यावीरुच्छब्दवाच्यलतावत्वारंवारमुत्पद्यमानतया तद्वत्वेदाख्यपादपविलंबितयाचलताशब्दोपलक्षिताः पृक्षुधः प्रच्छईप्सायामित्यत्रोक्तप्रच्छधातोः छकारस्यवर्णांतरादेशेनप्रश्नशब्दवत् क्षुदाख्यवर्णविकारेसतिपृक्षुच्छब्दवाच्यान्प्रतिवादिकृतप्रश्नान्। प्रश्नानांप्रामाणिकत्वाभावसूचनायऋकारस्यगुणाभावश्छांदसः। दंसु दंतेषु आरोहति आरोपयति। यथालताःदंतैःचूर्णीकुर्वंति तथाप्रतिवादिकृतप्रश्नान्दंतांतर्वर्तिवाग्गुंभैश्चूर्णीकरोतीत्यर्थः। अतएवमुख्यतोदंतत्वाभावसूचनाय दत्स्वितिवक्तव्येपुंस्वितिवत्दंस्वित्युक्तं। पुमानितिवत्दोअवखंडनइतिधातोः दंशदंशनइतिवाधातोः दानिति साकारांतो वाशब्दोद्रष्टव्यः। ऌतुलसानांदंताइतिवचना त्तन्नेति दांताभ्यांवर्णाभ्यामेवप्रश्नपरिहारस्यप्रागारंभनियमाद्दंस्वित्युक्तं। अप्रामाणिकशंकायाःसत्यमितिपरिहारोनास्त्येव। क्वचित्प्रामाणिकाप्रामाणिकशंकायाःसत्यमितिपरिहारारंभेपिदांताक्षरबाहुल्ये नैवतत्रापिपरिहारारंभात् यकारादेरप्राधान्याद्दंस्वित्येवोक्तं। अथवावीरुधःविः भागवद्विरोधितयाउत्पन्नस्य पृक्षुधः स्वपृतनाक्षोभकारिणः कल्यादिदैत्यसमूहस्य दंसुदंतेषुआरोहति स्वचरणेनारोहति आरोहणंकरोति। तान्पराभूयतेषांदंतभंगंकरोतीत्यर्थः। पराजयस्यदंतभंगइतिलोकेरूढेः। भीमसेनेनदुश्शासनादेःसाक्षाद्दंतभंगस्यापिकृतत्वाद्दंस्वित्युक्तं। तथाचश्रुतिः अधःसपत्नामेपदोरिमेसर्वेअभिष्ठिताइति त्वयाभिगुप्ताविचरंतिनिर्भयाविनायकानीकपमूर्धसुप्रभो इतिदेवानांस्तुतिरूपस्मृतिश्च। यत्यस्मात् उभौ लक्ष्मीनारायणौ अस्यमध्वस्य स्वामित्वेनसंबंधिनौ। यद्यस्मात् जनुषंजन्म इन्वतःप्रेरयतः। इण्गतावितिधातोःइन्वती ॥ ६७१ ॥

तिवैदिकरूपं। आत्अस्मात्कारणात् अकारवाच्यप्रेरकपरमात्मबलाद्वा यविष्ठः सूक्ष्मरूपोमध्वः घृणा घृणावान् यतिरूपधारित्वात्दययैवभीमादिवत्शत्रुषुहिंसादिकमकुर्वन्नित्यर्थः। लोकमर्यादारक्षणार्थमेवसाघृणा। नतुस्वस्यसहजेतिसूचनायघृणीतिनोक्तं। शुचिः पारमहंस्यधर्माचरणात्परमपावनश्चाभवत्। आत् अकारवाच्यपरमात्मप्रेरणादेव इत्इत्थं कल्पेकल्पेमातृःजननीः आविशत्। आविशदित्यनेन मातुरुदरस्थशुक्रशोणितात्मकदेहपरिणामकालेस्वयमाविशत्। नतुपूर्वमारभ्यगर्भवासदुःखमन्वभूदितिसूचयति। अतएवयासुमातृषु आशुचिः आसमंतात्शुचिः पापादिकर्मलेपरहितइत्यर्थः। अहिंस्यमानः गर्भेवा गर्भाज्जन्मानंतरंवा कल्यादिभिरहिंस्यमानः। उर्विया उर्व्या उरुतरस्वशक्त्याविवावृधे विशेषेणववृधे। तद्वर्धनं देवानांतुशरच्छतमितिवायुपुराणवचनात्देववर्षशतपर्यंतमितिसूचनायदीर्घः। यत्यस्मात् अयंमध्वः सनाजुवः सनात् सदातनत्वेनसनात्पुरुषसंज्ञितंनारायणं जुषंते गुणस्तवनेनसेवंतइतिसनाजुषइत्यर्थः। जुषइत्यस्मिन्नर्थेजुवइतिवैदिकपदं। पूर्वाःसप्तविद्यासुप्रथमंविद्यमाना ऋग्यजुःसामाथर्वाख्याविद्याः अनु तदुपक्रमोपसंहारादीननुसृत्यअरुहत् मनसाआरुह्य अभिमानितयाआरुह्यवातिष्ठति। यथाअश्वारूढपुरुषःतमश्वंहंतुंनमुंचंतितथावेदाभिमानित्वादयमपिवेदमन्यथीकर्तुंनमुंचतीतिसूचनायअरुहदित्युक्तं। तस्मात्कारणात् निनव्यसीषु नितरांनव्यासु मूलरूपाद्व्यासादिरूपाच्चभगवतउत्पन्नास्वित्यर्थः। वेदानामपिसृष्टिकालएवप्रादुर्भूतत्वेन नवसमत्वसद्भावेपि कृतत्वेनसाक्षान्नव्यत्वसूचनायानीत्युपसर्गः। भगवदुत्प्रेक्षितनूतनयुक्त्युपेतासुवा अवरासु वेदविद्यातःअनंतरंविद्यमानासु पुराणपंचरात्रेषुवा पुराणपंचरात्रमूलरामायणेषुवा धावते अनुकूलवरबलात्साक्षाद्भगवदुपदेश

बलाच्चत्वरयाअवगाहते । क्रममात्रव्यत्याससद्भावेपिशब्दतोर्थतश्चानादिष्वेषुपुराणादिषु स्वकपोलकल्पिततयाकालिदासकृतमे घसंदेशादिष्विवशब्दतोर्थतश्चनव्यत्वाभावसूचनायनव्यसीष्वितिविलक्षणप्रयोगः । अन्यथानवीयसीष्वित्येवश्रुतिरवक्ष्यत् । अपिच प्रथमंवपुरित्यनेनहनुमतःवायुपुत्रनाम ऋतस्यउपह्वरतइत्यनेन रामेष्टनाम साधतइत्यनेन महाबलः दशग्रीवस्यदर्पहेति नाम धेनाअनयंतेत्यनेन अमितविक्रमः उदधिक्रमणःसीताशोकविनाशनइतिनामचहनूमच्छ्रुत्यासूचितं । हनुमन्नामतु सर्वत्रसूचितमित्युक्तं । भीमश्रुत्याच द्वितीयंवपुरित्यनेनमारुतिरितिनाम पृक्षइत्यनेन महाबलःगदापाणिःदुःशासनविनाशनः जरासंधांतकृत्वीरइतिनाम पितुमानित्यनेन वृकोनाममहावह्निःकायेनदशयोजनइतिवचनात् वृकाख्याग्निसन्निहितोदरत्वेनवृकोदर

यस्यर्चोमध्वनामांकाऽश्लोकानेकादशागृणन् ॥ समध्वोवैदिकाचार्योगुरुर्जयतिदुर्जनान् ॥ ७१३ ॥

नाम मातृषुआविशदित्यनेनकृष्णदयितइतिनामसूचितं । भीमनामतुसर्वत्रसूचितमित्युक्तं । मध्वश्रुत्या तृतीयमस्येतिवाक्ये आनंदतीर्थःपूर्णप्रज्ञःयतीश्वरइतिनामसूचितं । निर्यदीमितिश्रुत्या ज्ञानदाता वैष्णवाचार्यइतिनाम । यदीमन्वितिश्रुत्या मध्वनाम तत्वज्ञनामच प्रयत्पितुरितिश्रुत्या व्यासशिष्यः ध्वस्तदुरागमः जितवादीतिनाम । उभायदस्येतिश्रुतौ शुचिपदेन जितेंद्रियनामचसूचितं । अतोहनुमदादिप्रतिपादकत्वमस्यवर्गस्यलोकप्रवादतोपिसिद्धमित्यपिद्रष्टव्यं । वर्गार्थःसमाप्तः ॥ ७१२ ॥ यस्यमध्वस्यऋचः पूर्वोक्ताःमध्वनामांकाः मध्वइतिनाम्नःअंकोयासुताः । एकादश पवमानपूयमानस्थाःसप्त अन्यत्रविद्यमानाश्च

तस्य । एवमेकादश ॥ ७१३ ॥ वायोरवतारप्रतिपादकवायुपुराणवचनानिसंगृह्णाति ॥ वायोर्दिव्यानिरूपाणीत्यादिना ॥
वायोः मूलरूपवायोः । पद्मत्रययुतानि दिव्यानिरूपाणिविष्णोः सेवार्थंसंतीत्यर्थः । पद्मंमहापद्ममितिसंख्याविशेषस्यनाम
॥ ७१४ ॥ ७१५ ॥ ७१६ ॥ व्रतिरूपेणआस्तेइतिशेषः । कृत्वादुश्शास्त्रखंडनमित्येतदंतंवाक्यं भागांतरस्थं । ततःकलियुगेप्रा

वायोर्दिव्यानिरूपाणिपद्मत्रययुतानिच ॥ ७१४ ॥ त्रिकोटिमूर्तिसंयुक्तस्त्रेतायांराक्षसांतकः ॥
हनुमानितिविख्यातोरामकार्यधुरंधरः ॥ ७१५ ॥ सवायुर्भीमसेनोभूद्द्वापरांतेकुरूद्वहः ॥ कृष्णंसं
पूजयामासहत्वादुर्योधनादिकान् ॥ ७१६ ॥ द्वैपायनस्यसेवार्थंबदर्यांतुकलौयुगे ॥ वायुश्चयतिरू
पेणकृत्वादुश्शास्त्रखंडनं ॥ ७१७ ॥ ततःकलियुगेप्राप्तेतृतीयोमध्वनामकः ॥ भूरेखादक्षिणेभागे
मणिमद्भवंशांतये ॥ धिक्कुर्वंस्तत्प्रभांसद्योवतीर्णोत्रद्विजान्वये ॥ ७१८ ॥ इत्याद्यास्सूक्तयोवायु
पुरणस्थास्सहस्रशः ॥ अवतारत्रयंवायोःकथयंतिमहात्मनः ॥ ७१९ ॥ अतश्श्रुतिस्मृतिस्तुत्यचि
त्रचारित्रविस्तृतेः ॥ मध्वस्यैवमतंयुक्त्यन्वितंपरममंगलं ॥ ७२० ॥ हितंनजानाम्यहितंनजाने
नाकर्तुमीशोनचकर्तुमीशः ॥ यथानटान्नाटकदारुयंत्रंतथाहरेःप्रेरणयैववर्ते ॥ ७२१ ॥ ॥

प्तइतिसार्धस्तुवायुपुराणेमध्वमहिमप्रतिपादकाध्यायस्थइतिविवेकोद्रष्टव्यः ॥७१७॥ तत्प्रभां भूमावुत्पन्नमणिमन्नामकदैत्यस्यविद्या
ख्यप्रभां ॥ ७१८ ॥ ७१९ ॥ अतःउक्तयुक्तिश्रुतिस्मृतिमूलत्वात् ॥ ७२० ॥ जीवकर्तृत्वादिनानामतनिराकरणायग्रंथकारेणैव

कृतंस्तोत्रमस्मिन्ग्रंथेप्रवेशयति । स्वप्नेजातेप्रवेशितंकिल । तस्यार्थोलेशतःकथ्यते । स्वानिष्टकर्मणःस्वेनैवक्रियमाणत्वादकर्तु
मीशोनेत्युक्तं । दारुमयनर्तक्यादिप्रतिमांसूत्रेणनर्तयन्नटः । तस्मात् । उत्तमपुरुषप्रयोगबलात्अहमितिलभ्यते । तेनचजीवकर्तृ
त्ववादनिरासंसूचयति । अनेन स्वास्वतंत्रानकल्पासीद्योगक्षेमंममेच्छती । ईशस्यहिवशोलोकोयोषादारुमयीयथेतिभागवतश्लोकं
सूचयति ॥ ७२१ ॥ यत्सुखसंपदादिकं । यच्च दुःखमरणादिकं । स्वहितकरणेशक्त्यभावात्स्वाहितस्यैवकरणाच्च स्वानिष्टभा
राद्युद्वहनायराज्ञाविष्टंगृहीतपुरुषवत्स्वानिष्टसंसारेउत्पत्तुं स्थातुंमर्तुंचनियामकःकश्चिदीशोप्यपेक्षितइतिभावेनविष्टिगृहीतइत्यु
क्तं । अनेन इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिरितिब्रह्मसूत्रोक्तयुक्त्याजीवकर्तृत्ववादोजीवेश्वराभेदवादश्चनिराकृतइतिज्ञा

यद्भूत्तद्धरेर्यच्चनाभूत्तचहरेःपरात् ॥ जीवोविष्टिगृहीतोस्मात्किंभवेत्किंचनोभवेत् ॥ ७२२ ॥
कर्मणोयदितत्कर्मस्वानिष्टंकुरुतेकुतः ॥ अनाद्यनिष्टकर्माणिकरोत्यन्यवशोध्रुवं ॥ ७२३ ॥ ॥

तव्यं ॥ ७२२ ॥ स्वस्यैवस्वतंत्रकर्तृत्वेस्वतंत्रकर्त्रीश्वराभिन्नत्वेचस्वानिष्टदुःखादिकरणायोगात् । तर्हिईशानपेक्षपुण्यपापादिकर्म
वशादेवजननमरणादिकंजायतामितिमीमांसकमतमनूद्यदूषयति ॥ कर्मणइति ॥ तत् जीवप्रवर्तकतयांगीकृतं । स्वानिष्टं स्व
स्यदुःखाद्यनर्थहेतुभूतंब्रह्महननादिकर्म । नतावत्तदेवकर्मस्वकर्तारंप्रेरयति । आत्माश्रयात् । रागद्वेषादिदोषवशाच्चेत् । तर्हिकर्म
णइतिमतंगतं । स्वेनैवस्वजिह्वादंशनेक्रियमाणेतयोरप्ययोगाच्च । नहिजिह्वायांदोषः तद्दंशनेरागोवाकस्यचिदस्ति । किंचअ ॥ ६७३ ॥
पराधिनिविप्रेद्वेषोद्रेकात्तदीयधनवनितादौरागोद्रेकाच्चविप्रहननेप्रवृत्तिरितिवदता ततोप्यतिशयितराजयातनानरकयातनादौद्वे

षोद्रेकात्कीर्तिस्वर्गादौरागोद्रेकाच्चसज्जनस्यैवकुतोननिवृत्तिःकथ्यते । अतःप्रवर्तकनिवर्तकयोरुक्तविधयासाम्येपिबलात्कारेणतं
तत्रप्रवर्तयितुंलाघवादीश्वरस्यैवांगीकर्तुमुचितत्वाच्च । पुरुषांतरेष्वदृष्टरागद्वेषादेरत्रैवोत्पत्तौकारणंचवक्तव्यं । कर्मणएवतदिति
चेत्पुनरन्योन्याश्रयः । प्राचीनकर्मांतरादितिचेत्न । कर्मणोजडत्वेनस्वनरकाद्यनर्थसाधनतयाज्ञातेतस्मिन्कर्मणिबलाद्गृहीत्वा
यातयितुंस्वतंत्रचेतनस्यैवकस्यचिदंगीकार्यत्वात् । नहिघटकारणीभूतापिमृत्पिंडादिपरंपरास्वयमेवदंडंगृहीत्वाचक्रमावर्तयंतीघटं
करोति । अनादित्वेनसमाधानस्यतत्रापिकर्तुंशक्यत्वात् । किंतुघटमात्रकरणेस्वतंत्रकुलालादिचेतनांतरेसत्येव । एतदेवाभिप्रेत्यो
क्तं ॥ अनादीति ॥ किंचानंतान्यपितानिकर्माणिस्वानिष्टानिस्वकृतानिचभवेयुः । अनिष्टमूलकर्मणामप्यनिष्टत्वावश्यंभावात् ।

नित्योजीवोस्वतंत्रश्चेदनित्यंकर्मजन्मनि ॥ स्थितौलयेपरापेक्षमन्याधीनंकथंनतत् ॥ ७२४ ॥

परकृतकर्मणांस्वफलदायकत्वायोगाच्च । एवंचानिष्टभूतस्यतस्यकर्मसमुदायस्यकरणायविष्टिगृहीतस्यकर्मकरणइवकर्मातिरिक्तःप्र
योजकोन्योवश्यमंगीकार्यः । नहिविष्टिगृहीतस्यकर्मैवतत्कर्मकारयति । नवापूर्वपूर्वदिनेबलात्कारितंभारोद्वहनाख्यकर्मैवो
त्तरोत्तरभारोद्वहनकर्मकारयति । नवातदीयदुष्कर्ममात्रं किंतुतस्माद्विष्टिगृहीतपुरुषकृतभारोद्वहनादिकर्मसमुदायात् तेनपूर्वपू
र्वकृतदुष्कर्मसमुदाया त्तस्माद्विष्टिगृहीतपुरुषाच्चान्यएवबलात्कारयिताकश्चिदधिकृतपुरुषोपेक्षणीयः । एवंचनकथंकर्मणोजीवाच्चा
तिरिक्तेश्वरसिद्धिः । एतदपिसूचयितुंप्रथमवाक्येजीवोविष्टिगृहीतइत्युक्तं । अस्मिन्नपिवाक्येअनिष्टपदंप्रत्युक्तं ॥ ७२३ ॥ अपि
चअसत्सुदुष्कर्मपरंपरानियमस्य सत्सुसत्कर्मपरंपरानियमस्यच कर्मातिरिक्तःकश्चिन्नियामकोवक्तव्यः । तत्तद्योग्यतावशात्तथा

तथाजायतइतिचेत्न । जीवेषुयोग्यायोग्यविभागस्यपरेणानंगीकारात् । अगत्यातदंगीकारेकिमपराद्धंलघुनेश्वरेण । जीवगतयोग्यतायाजीववदस्वतंत्रतयापरनियम्यत्वावश्यंभावाच्च । नित्यस्यचेतनस्यचजीवस्यस्वातंत्र्याभावेनकर्मसाचिव्यांगीकारेअनित्यस्यजडस्यचकर्मणःसुतरांस्वातंत्र्यायोगेनउभयोरपिनियामकःकश्चिदीशोबलात्सिद्ध्यतीत्याह ॥ नित्यइति ॥ तत्कर्म ॥७२४॥ अनंतानांजीवानांकर्मणांचकर्तृत्वेकर्तुरेकत्वप्रतिपादकश्रुतिविरोधंदर्शयन्श्रुत्युपस्कारकलाघवाख्ययुक्तिविरोधंचदर्शयति ॥ यतइति ॥ अनेन यतोवाइमानिभूतानिजायंतइतिश्रुतिंगृह्णाति । नचवाच्यंतसिलंतप्रयोगेस्मिन्येभ्यइत्यपिवक्तुंशक्यत्वात्नकर्तुरेकत्वंसिद्ध्येदिति । वाक्यशेषेयेन तदितिचस्पष्टैकवचनांतप्रयोगपंक्तिपतितत्वेनआदावेकवचनस्यैवन्याय्यत्वात् । अधीहिभगवोयतइत्येकवचनादेकोदाधारचेत्यलं ॥ स्पष्टश्रुतेर्नकर्माणिकर्मद्वारानचेतनाः ॥

अनंतस्सर्वजगतांकर्तारोलाघवादपि ॥ ७२५ ॥ ॥

ब्रह्मेतिएकस्यब्रह्मणएवोपक्रांततयाअत्राप्येकस्यतस्यचब्रह्मणएवप्रतिपाद्यत्वाच्च । अन्यथाअपृष्टपरिभाषणत्वप्रसंगात् । यउत्रिधात्वितिवक्ष्यमाणसंहितावाक्ये विष्णुसूक्तबलेन द्यावापृथिवीधारकत्वलिंगबलेनस्पष्टमेकत्वोक्त्याचएकस्यधारकपुरुषस्यविष्णोरेववक्तव्यत्वात् । वाक्यद्वयेचजगद्धारकसमाख्ययाएकार्थस्यैववक्तव्यत्वात् निश्चितनिरवकाशानुसारेणसंदिग्धसावकाशस्ययोज्यत्वाच्चविष्णोरेवब्रह्मत्वसिद्धेः । अतएवग्रंथकारस्यनप्रकृतासंगतिर्नापिवाक्यार्थयोर्वैयधिकरण्यंमुक्तावपि यत्प्रयंत्यभिसंविशंतीतिब्रह्मणःप्राप्यत्वप्रवेश्यत्वोक्त्यासमित्युपसर्गबलेनमुख्यप्रवेशस्यैववक्तव्यतयाबहूनामेवाभितःप्रवेशसंभवेनविशंतीतिबहुवचनसं

भवायमुक्तिकालीनैक्यस्यैवशंकितुमशक्यत्वात्व्यावहारिकभेदमादाययदद्वैतवादिनाहिताकरणादिसमाधानं तदपिनिरस्तं । नके वलंयुक्तिप्रोद्बलितश्रुतिसिद्धंकर्तुरेकत्वं किंतुसाक्षात्कर्तुरेकत्वप्रतिपादिकैवश्रुतिरस्तीत्याह ॥एकोदाधारेति॥ यउत्रिधातुपृथिवीमु तद्यामेकोदाधारभुवनानिविश्वा इतिश्रुतिंगृह्णाति ॥७२५॥ अदृष्टद्वाराजीवानामेवजगत्कर्तृत्वपक्षेप्यदृष्टकल्पनाख्यदूषणंचाह ॥लो कइति॥क्वापि घटपटादिकार्ये क्रियाऽजनेः जन्मरूपक्रियायाअजनेः घटपटादिकार्येषुभोजकादृष्टद्वाराकर्तृभूतयज्ञदत्तदेवदत्तादि षुसत्स्वपि कृतिपूर्वककर्तृकुलालकुविंदादिव्यतिरेकेणघटपटादिकार्यादृष्टेः महीमहीधरादिकार्येपिकृतिपूर्वककर्तापिकश्चिदपेक्षितः। अन्यथाअदृष्टकल्पनाप्रसंगात् । नचवाच्यमंकुरादिकार्येकृतिपूर्वकर्तुरदर्शनात्पटादौदृष्टोपिकृतिपूर्वकर्तानकारणमिति ।अपसिद्धां

लोकेऽदृष्टद्वारकर्तृमात्रात्क्वापिक्रियाऽजनेः ॥ कृतिपूर्वककर्तैवकर्तान्यस्तूपचारतः ॥
अन्यथाकन्यकायास्याद्भर्तापिपितृवत्पिता ॥ ७२६ ॥ ॥

तात् ।कुलालादेरकारणत्वेतद्व्यतिरेकेणापिक्वचित्घटोत्पत्तिप्रसंगाच्च। अनन्यथासिद्धनियतपूर्वभाववतःकुलालादेरकारणत्वे तादृश कारणांतरस्याप्यकारणत्वापत्तेरकारणकार्योत्पत्तिप्रसंगाच । कपालद्वयसंयोगकरणमात्रेणकुलालस्यान्यथासिद्धिरितिचेत्न । क पालद्वयसंयोगस्यापितद्विभागनाशोपक्षीणत्वप्रसंगेन विभागनाशस्यचजलस्रवणप्रतिबंधकरणमात्रोपक्षीणत्वापत्तेःपुनरकारणका र्योत्पत्तिप्रसंगतादवस्थ्यात् । कपालद्वयसंयोगानंतरमपिदंडचक्रादिनापृथुबुध्नोदराकारकरण कंढपीढकरणादिनाकुलालव्यापारद र्शनाच्च । एवमपिकुलालस्याकारणत्वघटनेकुंभकारशब्दस्यत्वयैवोपनिपाताच्च । संदिग्धानुसारेणनिश्चितस्यैवभंगेअनुमानमात्रोच्छे

दृप्रसंगाच्च। तस्मादपरिहार्यैवादृष्टकल्पना। कृतिपूर्वककर्तृत्वाभावेजगद्रूपकार्यत्वंनभवतीत्यत्रयुक्तिमाह॥कृतीति॥अन्यः अदृष्टद्वाराकर्ता। अदृष्टस्यसर्वोत्पत्तिमन्निमित्तकारणत्ववददृष्टाधारजीवानांतत्प्रसिध्यभावादितिभावः। विपक्षेबाधकंचाह॥अन्यथेति॥अन्यथा कृतिपूर्वककर्तृवत् अदृष्टद्वारककर्तुरपिमुख्यकर्तृत्वे अदृष्टद्वाराभार्याकर्तुर्भर्तुरपिपितृवत्पितृत्वंस्यात्। नचतद्युक्तं। तस्मात्कृतिपूर्वककर्तैवमुख्यतःकर्तेतिभावः ॥७२६॥ अतः कृतिपूर्वककर्तुरेवमुख्यकर्तृत्वात्। इदं महीमहीधरादिकं। घटाद्यल्पकार्यस्यापिकर्तृद्वयसापेक्षत्वेमहाकार्यस्यास्यकथंकर्तृद्वयानपेक्षेतिभावः। अदृष्टविशेषाद्भवतीत्यतआह ॥ किमिति ॥ पुत्रेष्टिमात्रतः

अतोनामुख्यकर्त्रैवमहाकार्यमिदंभवेत् ॥ किंस्त्रीपुंसौविनापिस्यात्पुत्रःपुत्रेष्टिमात्रतः ॥ ७२७ ॥
नचेदुपादानमपितद्वत्स्यादौपचारिकं ॥ दृष्टानुसारतस्तच्चेत्कर्तापिस्यात्तथैवहि ॥ ७२८ ॥ अदृष्टमपिबीजाद्यंकल्प्यंफलबलाद्यथा ॥ तथाऽदृष्टोपिकर्तास्यकल्प्यःकोप्युरुशक्तिमान् ॥ ७२९ ॥ नच कालादिकंतस्यप्रेरकंजडवस्तुनः ॥ स्वतःप्रवृत्त्ययोगेनप्रेर्यत्वात्कर्तृतोन्यतः ॥ ७३० ॥ ॥

पुत्रेष्टिजन्यादृष्टमात्रतः॥७२७॥उपादानप्रतिबंद्याचोत्तरमाह॥नचेदिति॥ तद्वत् औपचारिककर्तृवत्। अदृष्टजनकक्रियाहेतुभूतहविराद्युपादानेनैवजगज्जन्मापिस्यादितिभावः। दृष्टानुसारतः दृष्टघटादिकार्यानुसारतः। तत् परमाण्वादिमुख्योपादानं। कर्ता कृतिपूर्वककर्ता॥७२८॥ननुदर्शनादस्तुकुलालादिःकर्ता। जगत्कर्तुरदर्शनात्कथंकल्पनेत्यतआह॥अदृष्टमपीति॥फलबलात् अंकुराख्यफलबलात्। अस्यजगतः॥७२९॥अस्तुतर्हिजन्मादिमतःकर्मणःकोपिनियामकः। सचेश्वरोमास्तु। किंतुजन्मादिशून्यःकाला 

दिरेवस्यात्। जगत्कर्तासएवस्यादित्यतआह ॥नचेति॥ आदिपदेन प्रकृत्यादिकंगृह्यते। तस्यकर्मणः। कुतइत्यतआह ॥ जडवस्तुनइत्यादिना॥जडवस्तुनः कालादेः। अन्यतःकर्तृतःजडभिन्नचेतनकर्तृतः। जडत्वसाम्येनित्यत्वमप्रयोजकं प्रत्युतसदाजडत्वेसदापरप्रेर्यत्वरूपनैच्यापादकंचेतिभावः। उपलक्षणंचैतत्। उभयोरपिजडत्वेननियम्यनियामकभावायोगाच्चेत्यपिद्रष्टव्यं। अनेन कालचिंतकमतं प्रधानस्यैवजगत्कर्तृत्वप्रतिपादकसांख्यमतंचनिरस्तंवेदितव्यं ॥ ७३० ॥ संतुब्राह्मशैवादिमतरीत्याब्रह्मशिवादयएवकर्मनियामकाइत्यतआह ॥ नापीति ॥ तत्प्रेरकः कर्मप्रेरकः। अपरे स्कंदसूर्यविनायकादयः। अंघ्र्यर्चनेन बाह्यजलधारयाअंघ्रिप्रक्षालनरूपार्चनेन। तत्प्रेरकोब्रह्मानेतिसंबंधः। साश्रीःस्ववासमरविंदवनंविहाययत्पादसौभगमलंभजतेनुरक्ते

नापितत्प्रेरकोब्रह्मानेशोनेंद्रोपरेकुतः ॥ अंघ्र्यर्चनेनतत्तीर्थजुष्टयातद्दत्तभूत्वतः ॥ ७३१ ॥

तिभागवतवचनात् हर्यंघ्रिसेवकशक्त्यात्मकलक्ष्म्याअपिजगत्कर्तृत्वाभावसूचनायअंघ्र्यर्चनेनेत्युक्तं। अन्यथाक्षालनेनेत्यवक्ष्यत्। तत्तीर्थजुष्ट्याअंघ्रितीर्थजुष्ट्या शिवोनेतिसंबंधः। तद्दत्तभूत्वतः तेनविष्ण्वंघ्रिणादत्ताभूः त्रैलोक्यपदवीयस्येंद्रस्यतस्यभावः तस्मात्। इंद्रोनेतिसंबंधः। इतरदेवानामेतदाज्ञाधारित्वात्कर्मप्रेरकत्वाभावःकैमुत्यसिद्धइतिभावेनोक्तमपरेकुतइति। अंघ्रिपदप्रयोगादेवईश्वरस्याशरीरतांवदंतस्तार्किकादयोपिनिरस्ताः। हरेरन्यस्यकस्य चिन्निराकारस्येश्वरस्यसद्भावेसर्वज्ञाब्रह्मादयस्तमेवपूजयेयुः। नचतदस्ति। तस्माद्धरिरेवेश्वरइतिभावः ॥ ७३१ ॥ सृष्टिकर्ताब्रह्मास्थितिकर्ताविष्णुःसंहारकर्तारुद्रइतिसार्वजनीन

तयाप्रतिसिद्धप्रमेयेनापिविष्णोरेवसर्वैश्वरतांसाधयति ॥ किंचेत्यादिनाश्लोकषट्केन ॥ सृज्यं सृष्टियोग्यंवस्तु तदेवस्रष्टुःब्रह्मणो वशे नतुसृष्टिशून्यंकालाकाशादिकं सृष्टेरेवतदधीनव्यापारत्वादितिभावः । हार्यं संहारयोग्यं । तदेवसंहर्तुःशिवस्यवशे । संहारस्यैवतदधीनव्यापारत्वात् । यतःस्थितं स्थितिमत् सर्वंकालाकाशादिसकलजगत् पातुः स्थितिकर्तुर्नारायणस्यवशे अत इतिसंबंधः । जन्ममरणशून्यानामप्यनादिनित्यानां स्थितिरहितंवस्त्वस्तीत्यस्यव्याहतत्वेनस्थितेरवश्यंवक्तव्यत्वात् तस्याश्चविष्णुव्यापारत्वेन स्थितिमतःसर्वस्यापिविष्णुवशत्वावश्यंभावात्विष्णुरेवसर्वेश्वरः । नतुब्रह्मशिवादयइतिभावः ॥७३२॥ यत्यस्मात् कर्तुःस्रष्टुः ।

किंचसृज्यंवशेस्रष्टुर्हार्यंहर्तुर्वशेपरं ॥ पातुर्वशेस्थितंसर्वमतोविष्णोर्वशेखिलं ॥ ७३२ ॥
यत्कर्तुश्चस्थितिर्वाच्याहर्तुश्चावश्यकीस्थितिः ॥ नह्यसत्कारणंदृष्टंब्रह्मेशौतद्वशौहरेः ॥ ७३३ ॥
यतश्चस्वस्थितिःस्वीयव्यापारत्वात्स्वतोहरेः ॥ अतस्स्वतंत्रतातस्यासिद्धासिद्धार्थपद्धतेः ॥ ७३४ ॥

असत् स्थितिरहितं । अविद्यमानंशशविषाणादिकंवा । अजातनष्टघटादिकंवा । स्थितिरहितत्वादेवहितत् अकारणं । एवंचसृष्टिसंहारकारणतयाब्रह्मशिवयोःस्थितिरवश्यंवाच्येतिभावः । तत्तस्मात्हर्यधीनस्थितिसापेक्षत्वात् । उपलक्षणंचैतत् । स्थितिरहितवस्तुनःकारणत्वासंभववत्सृष्टिसंहाररहितवस्तुनःकालादेःकारणत्वासंभवाभावेनविष्णोरपिनित्यतयातद्वत्कारणत्वसंभवात् नविरुद्धव्यापाराधीनत्वं । अतएवनतद्वशत्वमित्यपिद्रष्टव्यं ॥७३३॥ स्वस्थितिः स्वस्यविष्णोःस्थितिः । यद्यपिस्थितिर्विष्णोरप्य ॥६७६॥
पेक्षिता । अन्यथाकारणत्वस्यैवायोगात् । तथापिस्थितेर्विष्णुव्यापारत्वेनविष्ण्वधीनैवसास्यात् । तेनचविष्णोःस्वाधीनप्रवृत्तिम

त्वरूपस्वातंत्र्यमेवसिद्ध्येत्नतुब्रह्मरुद्रयोरिवपराधीनत्वमितिभावः ॥७३४॥ सृष्टिसंहारावपिनसर्वौब्रह्मरुद्राधीनावितिभावेनोक्तं ॥ नहीति ॥ अंडजः अंडांतरवर्तिपद्मनाभनाभिकमलाज्जातःसत्यलोकाधिपतिःचतुर्मुखब्रह्मेत्यर्थः । अस्यस्वोत्पत्तेःपूर्वंविद्यमानांड स्रष्टृत्वं अंडात्पूर्वमेवसृष्टचतुर्विंशतितत्वस्रष्टृत्वं अंडांतरेपिपाद्मकल्पातिरिक्तदैनंदिनकल्पेषूत्पन्ननानापदार्थस्रष्टृत्वंचनास्ति । एतदु भयस्याप्यंडपदमुपलक्षणं । हरस्यच कालाग्निरुद्रजनकोमुसलास्त्रोहलायुधइतिवासुदेवसहस्रनामसुपाठात् केवलंशेषस्यैवग्रहणे वासुदेवसहस्रनामत्वायोगेन संकर्षणमुखा नलइतिभागवतोक्त्याचशेषांतर्गतसंकर्षणाख्यभगवतोमुखात्अभिमानिभूतकालाग्निरु द्रेणसहप्रलयकालेउत्पन्नस्य जगतोदाहेकरणभूतकालाग्नेःसकाशात्जलावरणांतर्गतब्रह्मांडदाहेजायमाने लंकादाहकहनुमद्वत् त्रि

नह्यंडजस्सृजेदंडमहंकारंहरोहरेत् ॥ महत्तत्वंकुतस्स्रष्टंकुतोनष्टंविचार्यतां ॥ ७३५ ॥

पुरदाहकशिववच्चजगद्दाहेकर्तृत्वंसंकर्षणस्यैव । भगवदाज्ञयाशिवेनापित्रिशूलंसंगृह्यदह्यमानेजलांतर्जगतिस्थितानांदाहांतरेपिस्थि त्वास्वस्वाहुतिगृहीतृत्वेनादह्यमानानांस्वावरदेवादीनांहननात्तावन्मात्रसंहर्तृत्वसंभवेपि तदंतरजीवजडात्मकजगतांदैनंदिनकल्पे संह्रियमाणजगतांचसंहर्तृत्वाभावान्नसर्वसंहर्तृत्वं अहंकारात्मकशिवस्य । भगवतैवक्रियमाणेअंडोपरिस्थितचतुर्विंशतितत्वसंहारे आकाशाभिमानिविनायकांतस्यबुद्धींद्रियाभिमानिपार्वत्यंततात्विकदेवतासमूहस्यकथंचिदेवांतरसंहर्तृत्वं । संकर्षणमुखानलेनैव दह्यमानजगत्संहर्तृत्वंचनकथंचिदपि । अतोनतस्यापिसर्वसंहर्तृत्वं । महत्तत्वाभिमानिनोब्रह्मणश्च जगृहेपौरुषंरूपंभगवान्महदा दिभिः । संभूतंषोडशकलमादौलोकसिसृक्षयेतिवचनात् पुरुषरूपेणभगवतासृज्यमानाहंकारादिपिपीलिकांतसकलजगत्स्रष्टावन्य

थासिद्धत्वेन पाद्मसृष्टौचपाद्मब्रह्मणैवान्यथासिद्धत्वेननजगत्स्रष्टृत्वंमहत्तत्वस्याहंकारतत्वंप्रत्युपादानकारणतयातदभिमानिनोब्र
ह्मणोपिकारणत्वमेवन कर्तृत्वं। कारणेकर्तृत्वोपचारेपिस्वशरीरभूतमहत्तत्वंप्रतिनतरांकर्तृत्वं। अतःसर्वत्रस्वतंत्रतयामुख्यतःकारणी
भूतस्यहरेरेव सर्वस्रष्टृत्वंसर्वसंहर्तृत्वंच । विधिरुद्रयोस्तुकथंचित्स्वयोग्यकतिपयजगत्स्रष्टृत्वसंहर्तृत्वसंभवेपिसकलजगत्स्रष्टृत्वसंह
र्तृत्वेनकथंचिदपिघटेते। अतएवसूत्रेश्रुतौचपरब्रह्मणएवजगत्स्रष्टृत्वादिकंलक्षणतयाभिहितं। ससर्जभगवानित्यारभ्य तस्मिंस्तुभग
वान्भूयोभुवनानिचतुर्दशेत्यंताःप्राचांवाचश्चेतिभावः ॥७३५॥ त्रिशक्तिधृदित्यनेन सृजामितन्नियुक्तोहंहरोहरतितद्वशः । विश्वं
पुरुषरूपेणपरिपातित्रिशक्तिधृदितिभागवतवचनमुक्तार्थेप्रमाणंसूचयति । त्रिशक्तिधृत् सृष्टिस्थितिसंहाराख्यव्यापारत्रयोचितश

अतस्स्वयोग्यकार्यस्यकर्तारौतौहरीच्छया ॥ हरिस्तुकर्तासर्वस्यभर्ताहर्तात्रिशक्तिधृत् ॥ ७३६ ॥

क्तित्रयधारी । इदंचतन्नियुक्तोहमित्यत्रोक्तनियोगोबहिस्स्थितराज्ञइवनाज्ञामात्रं शक्तिमदागमनंविनाशक्तेरागमनायोगेनबहिस्स्थि
तभगवच्छक्तेर्ब्रह्मणिशिवेचप्रवेशायोगात् भगवत्येवत्रिशक्तिधृदित्युक्त्याब्रह्मशिवयोःपृथक्शक्त्यभावाच्च । अतःस्वाविष्टभूतश
क्त्यास्वसाध्यमपिकार्यंकुर्वन् पुरुषइवब्रह्मापाद्मेकल्पेस्वाविष्टभगवच्छक्त्याभगवत्सन्निधानोद्भूताल्पस्वशक्त्याचस्वावरदेवादीनां
सृष्टिमात्रंकरोति । तत्रापिस्थितिसंहारौभगवानेवकरोति । शिवश्चदैनंदिनसंहारेष्वंतिमसंहारेष्वाविष्टभगवच्छक्त्यातद्दत्ताल्पस्व
शक्त्याचस्वावरदेवादीनांसंहारमात्रंकरोति । तत्रापिसृष्टिस्थितीभगवानेवकरोति । तावपिसृष्टिसंहारौमुख्यतोभगवानेवकुरुते ।
तदितरसृष्टिसंहारांस्तुकेवलंभगवानेवकुरुतइतिसूचनार्थमुक्तंभगवत्पादाचार्यैः शेषाहिवैरिशिवशक्रमनुप्रधानचित्रोरुकर्मरचनंय ॥ ६७७॥

दपांगलेशं । आश्रित्यविश्वमखिलंविदधातिधाताश्रीर्यत्कटाक्षबलवत्यजितंनमामि १ शक्रोग्रदीधितिहिमाकरसूर्यसूनुपूर्वंनि
हत्यनिखिलंयदपांगलेशं । आश्रित्यनृत्यतिशिवःप्रकटोरुशक्तिःश्रीर्यत्कटाक्षबलवत्यजितंनमामीति २ नितरांयोगोनियोगइति
वशताचतदिंद्रियाणांभगवदिंद्रियचेष्टयैवचेष्टनमिति उभयत्राप्यंतःप्रवेशएवलभ्यते । अतएवोक्तंभागवते प्रसुप्तलोकतंत्राणां
निशाम्यगतिमीश्वरः । चतुर्विंशतितत्वानांगणंयुगपदाविशत् । सोनुप्रविष्टोभगवान्चेष्टारूपेणतंगणं । भिन्नंसंयोजया
माससुप्तंकर्मप्रबोधयन्निति ॥ ७३६ ॥ लोकरीत्यापिस्रष्टुर्हर्तुश्चनसर्वाधिपत्यं । किंतुरक्षकस्येतिस्पष्टीकर्तुमुदितं ॥ नपितेति ॥
अनेन स्रष्टुर्नाधिपत्यमितिसूचितं । यामिकपदेन त्रियामायामत्रयेप्युत्थायपुरंपालयन् पुरुषोभिधीयते । तस्यैवापराधि

नपिताधिपतिर्नृणांनहर्तायामिकोपिवा ॥ किंतुरक्षकएवातोविष्णुरेवजगत्पतिः ॥ ७३७ ॥

दशदिक्पतिभावेनदेवाब्रह्मेशपूर्वकाः ॥ खंडाधिपतयोविष्णुस्तदभावाज्जगत्पतिः ॥७३८॥

नांशिरश्छेदेप्यधिकाराद्धर्त्तेत्युक्तं । अनेनचसंहर्तुर्नाधिपत्यमितिसूचितं । रक्षकपदेन धनभूवेतनदानादिनासकलप्रजानां
रक्षणापरपर्यायस्थितिकृद्राजोच्यते । अतोलोकेस्थितिकर्तुरेवजगत्पतित्वदर्शनात् स्थितिकर्तुर्विष्णोरेवसकलजगत्पतित्वमितिभावः
॥ ७३७॥ संध्यावंदनमात्रवेदिभिरपिहर्यन्यदेवतानांखंडाधिपतित्वंहरेश्चपरिशेषादखंडाधिपतित्वमेववक्तव्यमित्याह ॥ दश
दिक्पतिभावेनेति ॥ प्राच्यादिदशदिशांपतित्वेनेत्यर्थः । तदभावात् दशदिक्षुएकदिशोधिपतित्वाभावात् । नहिसंध्यावंदन
कारिणोपि एकस्यादिशिइंद्रादीनिवविष्णुमपिकस्याश्चिद्दिशःपतित्वेननमंति । तस्मादिंद्रादिवद्विष्णोरप्येकस्यादिशःपतित्वंनक

 

ल्पयितुंशक्यं । महापुरुषस्यचतस्यसर्वथाआधिपत्याभावोपिनवक्तुमुचितः । अतःपरिशेषाद्विष्णुःसकलजगतांपतिरितिभावः ॥ ७३८ ॥ अंतर्बहिश्चाखिललोकपालकैरदृष्टरूपोविचरस्युरुश्रवनः। सईश्वरस्त्वंयइदंवशेनयन्नातमायथादारुमयींनरस्स्त्रियं । यल्लोकपालाःकिलमत्सरज्वरान्हित्वायतंतोपिपृथक्समेत्यच । पातुंनशेकुर्द्विपदश्चतुष्पदस्सरीसृपस्थास्मयदत्रदृश्यतइतिपंचमस्कंधस्थमनुवचनमर्थतस्संगृह्णन्इतरदेवतानांखंडाधिपत्यं तत्रापिहरिप्रेरणांविनास्वतःसामर्थ्याभावं हरेश्च सर्वेषामंतर्बहिःप्रेरकतया

अखिलैर्लोकपालैश्चाप्यदृश्यस्सन्नुरुश्रवसन् ॥ तेषामंतर्बहिश्चत्वंसदाविचरसीतिवाक् ॥ ७३९ ॥
यंहित्वाराक्षसावेशान्मत्सरज्वरसंयुताः ॥ यतमानाःपृथक्सर्वेलोकपालास्समेत्यच ॥७४० ॥
त्रातुंनशेकुरितिवाक्कास्तिभागवतेयतः ॥ अखंडाधिपतिस्तस्माद्विष्णुरेवनसंशयः ॥ मनोर्हि
वागियंकैर्वामाननीयानमानवैः ॥ ७४१ ॥ तच्छ्रुत्वामुनयस्सर्वेविस्मितामुक्तसंशयाः ॥ भूयां
संश्रद्दधुर्विष्णुंयतश्शांतिर्यतोभयं ॥ इतिभागवतेप्रोक्तंमुनीनांवचनंस्मर ॥ ७४२ ॥ ॥

सर्वेश्वरत्वं तेषांसर्वेषांतद्वशत्वंचनकेवलंयुक्तिसिद्धं किंतुप्रमाणमूलमपीत्याह ॥ अखिलैरिति ॥ तेषांलोकपालानां इदंच नः अस्माकंउरुरितिमनोर्बहुवचनप्रयोगेणस्वसमानलोकपालानांग्रहणाल्लभ्यते ॥ ७३९ ॥ पृथक्प्रत्येकं समेत्यपुंजीभूय । मानवैः मनुसंबंधित्वान्मानवशब्दवाच्यैः ॥७४०॥७४१॥ भागवतवाक्यांतरेणापिविष्णोरखंडाधिपतित्वंद्रढयति ॥ तच्छ्रुत्वेति ॥७४२॥ 

तद्गोत्रजातः तेषां कश्यपविश्वामित्रादिमुनीनां गोत्रेजातः । तेमुनयः यस्मात्गोत्रप्रवरेशाः गोत्रप्रवरमूलीभूताः ॥ ७४३ ॥
किंचप्रसिद्धश्रुतौप्रसिद्धविष्णुरुद्रपदाभ्यांविष्णुरुद्रावुदीर्ययथाविष्णोर्वशतारुद्रस्योच्यते तथाप्रसिद्धविष्णुरुद्रपदाभ्यांविष्णुरुद्रा
वुदीर्यरुद्रवशताविष्णोर्नक्वापिकथ्यते । यद्यपिसोमःपवतइतिश्रुतौसोमस्यविष्णुजनयितृत्वंकथ्यते । तथापि सोमपदस्यपवमाना
ख्यसोमे चंद्रे चंद्राभिमन्यमानसोमलतायांचलोकवेदयोःप्रसिद्धत्वेन रुद्रेप्रसिध्यभावेनचनसापराभिलषितार्थसाधिकेत्याह ॥
अस्यदेवस्येति ॥ अनेन अस्यदेवस्यमीह्लुषोवयाविष्णोरेषस्यप्रभृथेहविर्भिः । विदेहिरुद्रोरुद्रियंमहित्वंयासिष्टंवर्तिरश्विनावि

तद्गोत्रजातःपूर्वेषांतेषांवाक्यंनविस्मर ॥ यद्गोत्रप्रवरेशास्तेतानुदास्तेकथंभवान् ॥ ७४३ ॥
अस्यदेवस्येतिवेदेयथाविष्णोर्वशोहरः ॥ स्पष्टंश्रुतस्तथावेदेनक्वापीशवशोहरिः ॥ ७४४ ॥
ईषेरिच्छार्थकाद्धातोःपचाद्यचिकृतेसति ॥ गुणेजातेपालनेच्छाकृपायस्यस्वसेविषु ॥ तस्यैष
स्यनचेदेतस्येतिस्याच्छब्दविन्मते ॥ ७४५ ॥ ॥ ॥

रावदितिश्रुतिंगृह्णाति ॥ ७४४ ॥ श्रौतपदानांअर्थमाह ॥ इषेरिति ॥ इषेः इषइच्छायामित्यत्रोक्तेषुधातोः गुणेसार्वधातुका
र्धधातुकयोरितिसूत्रादिकारस्यैकाराख्यगुणेएषइत्यकारांतं इच्छावंतंवक्ति । योग्यतयाचपालनंलभ्यते । एवंच कःपिंडितार्थ
इत्यतआह ।स्वसेविषुपालनेच्छा पालनेच्छारूपाकृपायस्येति । एषस्य एषपदवाच्यस्य । नचेत् उक्तविधयाएषपदव्युत्पत्ति
र्नचेत् । एतच्छब्दस्येदंरूपंचेदितियावत् । एतस्येति एतच्छब्दस्यषष्ठ्यामेतस्येतिप्रयोगःस्यात् । नतुएषस्येति । अतोयं

शब्द उक्तविधयैवव्युत्पन्नइतिभावः ॥ ७४५ ॥ मिहसेचनइतिधातोःभक्ताभीष्टसेचनात्मीढुषः मीढुट्पदवाच्यस्येत्यर्थः । यत्यस्मात् मिहइतिधातुः । हविर्भिरितिपदस्यशेषपूरणायोक्तं यज्ञसाधनैरिति । प्रभृथशब्दस्यार्थःप्रभृतमिति । प्रकर्षेणभृतं भरणं भावेक्तप्रत्ययः । हविर्दानेनभगवतस्तृप्तिकरणमित्यर्थः । तकारस्यथकारादेशःकिंनिमित्तइत्यतउक्तं । तृतीयोतिशयेयतइति । तृतीयोतिशयइतिसूत्रात् एकवर्गस्थवर्णेषुतृतीयोवर्णःयतःअतिशयेवर्ततेअतःप्रभृतमितिसंबंधःसम्यक्पूरणमिति सूचनायभृथमित्युक्तं । हविर्भरणस्यबाहुल्याख्यातिशयसूचनायप्राशस्त्यसूचनायप्रेत्युपसर्गः । मंत्रभक्तिश्रद्धाद्यतिशयसूच

तस्यास्यविष्णोर्देवस्यभक्ताभीष्टस्यसेचनात् ॥ मीढुषोयन्मिहस्सेकेहविर्भिर्यज्ञसाधनैः
॥ ७४६ ॥ प्रभृथंप्रभृतंशस्तंतृतीयोतिशयेयतः ॥ अचोहलश्चयत्पश्चात्तृतीयोसौततःकि
ल ॥ ततःप्रभरणेपूजात्मकेसम्यक्कृतेसति ॥ ७४७ ॥ ॥ ॥

नायतृतीयोवर्णइतिभावः । अथवा अस्यपूजात्मकभरणत्वेनप्राकृतैरुदरपूरणायक्रियमाणहविर्भरणादतिशयसूचनायप्रेत्युपसर्गः । तस्यबाहुल्याख्यातिशयसूचनायतृतीयोवर्णः । एतदेवाभिप्रेत्यपूजात्मकेसम्यगितिचवक्ष्यति । ननुथकारस्यतकारापेक्षयाद्वितीयत्वात्कथंतृतीयत्वमित्यतउक्तं ॥ अचइति ॥ हलः हल्प्रत्याहारपठितात्तृइतिवर्णात् । अचः तदुपरिविद्यमानाकारात् । हलः अचश्चसमाहारेहिकादयोवर्णाभवंति । अतः तृवर्णादकाराच्चपरतोविद्यमानथकारःआपाततोद्वितीयोपिविचार्यमाणेतृतीयंइति



भावः । असौ थकारः ॥ ७४६ ॥ ७४७ ॥ वयश्शब्दार्थकथनायोक्तं ॥ भूत्यादिदानेनबंधकइति ॥ वयबंधनइतिधातोः वयाः बंधकइत्येवशब्दार्थः । तच्चबंधकत्वंलौकिकैश्वर्यादिदानेनरुद्रस्यैवोचितमितिभावेनोक्तंभूत्यादिदानेनेति । इदंचरुद्रेप्रसिद्धमितिसूचयितुंश्रुतौहिशब्दइतिभावेनोक्तं । हिप्रसिद्धोरुद्रस्त्रिभुवनेश्वरइति ॥ ७४८ ॥ रुद्रियपदस्यरुद्रसंबंधित्वार्थकत्वेरौद्रमिति स्यात् । रुद्रियमितितुकथमित्यतोदृष्टांतेनतदुपपादयति॥ घस्येति ॥ घस्य घप्रत्ययस्य समुद्राभ्राद्धःइतिसूत्रात् समुद्रपदात्घप्र

वयाभूत्यादिदानेनबंधकोवयबंधने ॥ इतिधातोर्हिप्रसिद्धोरुद्रस्त्रिभुवनेश्वरः ॥ ७४८ ॥
रुद्रियंरुद्रसंबंधिमहित्वंमहिमोच्यं ॥ घस्येयादेशकरणेसमुद्रियपदंयथा ॥ तथाबाहु
लकात्तस्माद्रौद्रमेवहिरुद्रियं ॥ ७४९ ॥ विदेलेभेतद्वदेवपूर्वाभ्यासमुपेक्षत ॥ पूर्वा
नभ्यस्तपदवीप्राप्तिंसूचयितुंश्रुतिः ॥ ७५० ॥ अनावृत्तिपदप्राप्तिसूचनायचसूत्रवत् ॥
अस्मिन्नर्थेप्रमाणानांप्रसिद्धिंचहिनाजगौ ॥ ७५१ ॥ ॥ ॥

त्ययेकृते समुद्रसंबंधीत्यर्थेसमुद्रियपदंयथाभवति तथातस्यप्रत्ययस्यछंदसिबहुलमित्यादिनाबाहुलकत्वाद्रुद्रियमित्यपिपदंभवतीतिभावः ॥ ७४९ ॥ विदइत्यस्यार्थकथनंलेभइति । विद्लृलाभइतिधातोरितिभावः । तर्हिलिटिपूर्वाभ्यासस्यविहितत्वाद्विविदइति प्रयोगःस्यादित्यतआह ॥ तद्वदिति ॥ लेभइतिप्रयोगवदित्यर्थः । यथालिट्त्वेपिलेभइतिप्रयोगेपूर्वाभ्यासोनास्ति तथाछंदसिबहुलमितिवचनादत्रापिनास्तीतिभावः । प्रयोजनवशाच्चश्रुतिःपूर्वाभ्यासमुपेक्षतेत्याह ॥ पूर्वानभ्यस्तेति ॥ भगवत्पूजनेनप्राप्त

रुद्रपद्व्याःअनेनरुद्रेणपूर्वमननुभूतत्वसूचनायप्रयोगेपिपूर्वाभ्यासोपेक्षेतिभावः । प्रयोजनांतरमप्याह ॥ अनावृत्तीति ॥ अनावृत्तिपदं पुनरावृत्तिरहितमोक्षपदं । तस्यप्राप्तिसूचनाय नकेवलमिदंभगवत्पूजनमैहिकफलमात्रप्रदं । किंतुपुनरावृत्तिशून्यमोक्षाख्यफलदमपिभवतीतिसूचनाय पदेपिपूर्ववर्णावृत्तिरूपपूर्वाभ्यासोपेक्षणमितिभावः । सूत्रवत् बह्वर्थसूचकसूत्रवत् । हिशब्दस्य प्रयोजनांतरमप्याह ॥ अस्मिन्निति ॥ हिना हिशब्देन ॥ ७५० ॥ ७५१ ॥ श्रुतौयासिष्टमितिमध्यमपुरुषद्विवचनप्रयोगबलाद्युवामित्युक्तं । वर्तिरित्यस्यार्थकथनं वर्तनमिति । इरावदित्यस्यार्थकथनं याज्ञिकान्नवदिति । यज्ञेअश्विभ्यांस्वाहेतिदीयमानान्ना

युवामप्यश्विनौवर्तिर्वर्तनंयाज्ञिकान्नवत् ॥ इरावद्ब्राह्मणेयस्मादिलेत्यन्नमुदीरितं ॥ डल
योरलयोश्चाभेदेनस्यादीदृशंपदं ॥ ७५२ ॥ यासिष्टंतस्यकृपयैवायासिष्टंलुङीदृशं ॥
अमाङ्योगेपियद्वेदेपदंशास्तिसपाणिनिः ॥ ७५३ ॥ ॥ ॥

हुतियुक्तमित्यर्थः । अन्नंवा । ब्राह्मणे इळेन्नमेवास्येतिऋग्वेदब्राह्मणे । यद्यपिइडेतिपदमन्नमात्रवाचि । तथापिअश्विनोर्यज्ञाहुतावधिकारात्तद्रूपमेवान्नंयोग्यतयालभ्यतइतिभावेनोक्तं याज्ञिकान्नवदिति । तर्हिइडावदित्येववक्तव्यं इरावदितिकथमित्यतआह ॥ डलयोरिति ॥ डलयोःडकारलकारयोः । रलयोः रेफलकारयोः ॥ ७५२ ॥ यासिष्टमित्यस्यार्थः तस्यविष्णोःकृपयैवायासिष्टमिति । अयासिष्टं युवामपिविष्णोःकृपयैवइरावद्वर्तनंप्राप्तावभूतमित्यर्थः । तर्ह्ययासिष्टमित्येववक्तव्यं । अडागमाभावेकिंकारणमित्यतआह ॥ लुङीति ॥ ईदृशं अडागमरहितं । अमाङ्योगे माङ्योगाभावे । यत् यस्मात् ॥ ७५३ ॥ वर्तिरितिद्वितीयांतं

पदंकथंस्यादित्यतआह ॥ औणादिकेति ॥ औणादिकेसंतरूपात् औणादिकोयसुन्प्रत्ययःतदंतरूपाद्धृतेः वृतुवर्तनइतिधातोरौणादिकेसुन्प्रत्ययेतकारस्यद्वित्वेऋकारस्यगुणेचकृतेवर्त्तिरितिसकारांतंपदंसिध्यतीत्यर्थः । नेदमपूर्वमित्याह ॥ यथेति ॥ यथा रुचकाशनइतिधातोःअर्चिःपदं सृप्लृगताविति धातोःपरितःसर्पणशीलघृतवाचकसर्पिःपदं तद्वदिदंपदमितियोजना ॥७५४॥ अतः श्रुत्याविष्णौरुद्रेचप्रसिद्धविष्णुरुद्रपदयोरेवग्रहणात् । अयंसमुदायार्थः । एषस्य इच्छारूपस्य कृपालोःदेवस्य सत्यसंकल्पस्य विजिगीषावतोवा द्योतमानस्य जगत्सर्जनादिक्रीडावतोवा । मीढुषः भक्ताभीष्टसेचनशीलस्य अस्यप्रसिद्धस्य अकारवाच्यस्यवा

औणादिकेसंतरूपाद्धृतेर्वर्तिर्भविष्यति ॥ यथार्चिस्सर्पिरित्यादिपदंतद्वदिदंपदं ॥ ७५४ ॥
अतस्स्पष्टार्थवाणीयंरुद्रस्याभीष्टदायकं ॥ विष्णुंशुभगुणांभोधिंरुद्रादप्यधिकंजगौ ॥ ७५५ ॥

विष्णोर्हविर्भिःप्रभृथेप्रभरणे नैवेद्यहोमादिपूजनेकृतेसति वयाः लौकिकैश्वर्यादिदानेनबंधकःरुद्रः रुद्रियं रुद्रसंबंधि महित्वंमहिमानं महःउत्सवोस्यास्तीतिमही तस्यभावंवा । यथाविदेहि लेभेहि । अथवा हि यस्मात्लेभे तस्मात् हेअश्विनौयुवां इरावत् अन्नवत् वर्त्तिर्वर्त्तनं हविर्भिर्विष्णोःप्रभृथेकृतेसत्येवयासिष्टमयासिष्टं यस्मादिंद्रादीनामधीश्वरोपिशिवःविष्णवर्चनेनैवभाग्यमवाप । तस्मात्ततोप्यतिनीचदेवतयोर्युवयोर्विष्णुकृपयैवभाग्यमभूदितिकिमुवक्तव्यमितिभावः । अस्यांश्रुतौविष्णोरश्विनोर्भाग्यदायकत्वेदृष्टांततयाहेतुतयाचविष्णोःशिवभाग्यदायकत्वमहिम्नोवर्णनादस्यमहिम्नोभगवतिनिश्चिततत्वंनित्यसिद्धत्वंचाभूदित्यपिज्ञात

व्यं ॥ ७५५ ॥ सोमपदेनरुद्रग्रहणेप्रकरणविरोधाप्रसिद्धत्वादिदोषाःकथिताः । इदानींवैदिकमुद्रयाअपरिहार्यंदोषंचाह ॥ श्रौतइति ॥ अखंडपदः सजूरिति सजूरितिवत् सोमइति सउमइतिद्विखंडरहितं सोमपदंयस्यवाचकंसोखंडपदः । सोमःसोमपदवाच्यःपदार्थः वेदविदांमतेईशोनेतिसंबंधः । ईशस्यसोमपदवाच्यत्वं उमयासहितइतिव्युत्पत्त्यापरेणाशास्यते । तत्तदास्यात् । यदिसोमपदंसजूरितिपदवत्द्विखंडंस्यात् । नचतद्युक्तं । वैदिकैर्वेदस्थसोमपदेद्विखंडतायाःकुत्राप्यनंगीकारात् । वेदमर्यादामुल्लंघ्यवेदार्थकथनेअवैदिकत्वप्रसंगात् । अतःपवमानसोमस्यचंद्रस्यसोमलतायावाश्रौतंसोमपदंवाचकंस्यात् । नान्यस्य । एवंचशिवस्यविष्णुजनकत्वेनेयंश्रुतिः शंकितुमपिशक्या विष्णोस्तुशिवपूज्यत्वंशिवाभीष्टदायकत्वंचउभयवादिसंप्रतिपन्नस्पष्टश्रुत्यैवोक्तवि

श्रौतोखंडपदस्सोमोनेशोवेदविदांमते ॥ विश्वाधिकत्वगीस्सावकाशेंद्रादिश्रुताविव ॥ ७५६ ॥

धयाप्रतिपादितं । अतोवैदिकैर्वैदीकृतस्यपरस्यनास्मत्प्रतिबंदी । पवमानसोमस्यविष्णुजनकत्वमुपपादितं चंद्रस्यचसोमवंशेअवतीर्णकृष्णंप्रतिलोकमर्यादामूलकारणत्वाज्जनयितृत्वमुपपन्नं । सोमलतायाश्च सत्रेममासभगवान्हयशीर्षइतिवचनाद्यज्ञकुंडादवतीर्णहयग्रीवंप्रतिजनकताघटते । तस्मादखंडपदापीयंश्रुतिरखंडपदत्वादेवनास्मदभीष्टखंडनायालं । परस्यत्वखंडपदास्मच्छास्त्रवदनिष्टस्यैवहेतुः । विश्वाधिकोरुद्रोमहर्षिरितिवाक्नास्मच्छ्रुतिवत्स्पष्टंनविष्णोर्हरवशतांवक्ति । किंतुविश्वस्मादधिकइत्येववक्ति । साचविश्वस्मादिंद्रउत्तरइतिवत्स्वयोग्यकतिपयविश्वाधिक्यमेवब्रूयात् नसर्वाधिक्यं । अन्यथाइंद्रश्रुत्याइंद्रस्यापिसर्वेश्वरत्वप्रसक्त्यापुनस्त्वदभिलषितरुद्रसर्वेश्वरत्वस्यैवहानिप्रसंगात् । सावकाशेतिवदताविश्वमधिकंयस्मादित्यपिसमाससंभवेनपरानि ॥ ६८१ ॥

ष्टार्थलाभः । रुद्रःविश्वाधिकोमहर्षिरित्यपियोजनिकासंभवेन सर्वाधिकःसंन्यासीत्युक्ते संन्यासिष्वेवाधिक्यलाभवत्रुद्रस्यमहर्षिष्वेवाधिक्यलाभश्चसूचितः । इंद्रश्रुतेरीदृशावकाशशून्यत्वेनप्राबल्यंचसूचितं ॥ ७५६ ॥ वाक्यांतरैरपिरुद्रस्यावरतांविष्णोःसर्वोत्तमतांचसाधयति ॥ सोरोदीदिति ॥ अनेन सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वमितिश्रुतिंगृह्णाति । स्वाभीष्टसाधनसामर्थ्याभावाद्धिरुद्रस्यरोदनं । अतः कथंशिशोरिवरुदतस्तस्यसर्वेश्वरत्वमितिभावः ॥ ७५७ ॥ उच्छेषणभागोवैरुद्रइतियावेदवागिति संबंधः । हिशब्देनास्यवाक्यस्ययजुश्शाखायांप्रसिद्धतांसूचयति । सा वेदवाक् । जुषेथांयज्ञमित्याद्यासा वेदवाक् विष्णुंवक्ति । अतः सविष्णुः राट् राजा सर्वेश्वरइतियोजना । वषट्तेविष्णवासआकृणोमिइति जुषेथांयज्ञंद्रविणंचधत्तमरिष्टैर्नःपथिभिःपारयंते

सोरोदीदितिवेदेहिरोदनाद्रुद्रतोदिता ॥ नतेमहित्वमितितुविष्णोरसमतोदिता ॥७५७॥
याह्युच्छेषणभागोवैरुद्रइत्याहवेदवाक् ॥ जुषेथांयज्ञमित्याद्यासाविष्णुंवक्त्यतस्सराट् ॥७५८॥

तिश्रुतिः । अस्याअयमर्थः । हेइंद्राविष्णूइंद्रांतर्गतेंद्रनामकविष्णुनामकौभगवंतौ अस्याअपसः संसारसमुद्रजलस्य पारे परतीरे सर्वथातदसंगसूचनायविसंधिकरणं । स्थितौवासंसमीचीनेन कर्मणादेवयज्ञेन संसमीचीनेन इषा पितृयज्ञान्नेनच हिनोमि हिगतौवृद्धौचेतिधातोःविर्दयेनचवर्धयामि संतोषेणपूरितंकरोमि । ह्यंतेवाप्राप्नोमि भवदंतिकेवर्धेच । अस्मत्समीपंप्रत्यागमयामि । अरिष्टैःपथिभिः मोक्षमार्गभूतज्ञानभक्तिवैराग्यादिभिः अर्चिरादिमार्गैर्वा पारयंतौ संसारसागरपारंप्रापयंतौ । इंद्राविष्णूयुवान्नः यज्ञं जुषेथां द्रविणंचधत्तं इदमुभयंमध्यमपुरुषद्विवचनं इंद्राविष्टविष्णोःपृथक्स्थितविष्णोश्चयज्ञभोक्तृत्वंवक्ति । विष्णुसूक्तेस्मि

न्केवलेंद्रस्यस्वातंत्र्येणग्रहणायोगात् । उच्छेषणभागइतिश्रुतिःरुद्रस्ययज्ञोच्छिष्टभोक्तृतांवक्ति । एवंचवाक्यद्वयपर्यालोचनयाहर्यु च्छिष्टभोजीरुद्रइतिप्राप्तं । अतोविष्णुःसर्वोत्तमः रुद्रस्तदवरइतिकथंनसिद्ध्येदितिभावः ॥७५८॥ इममेवार्थंविस्तरेणाह ॥ इंद्रा विष्णूइति ॥ ७५९ ॥ ७६० ॥ ७६१ ॥ ७६२ ॥ श्रौतयुक्तिंचाह ॥ प्रलयइति ॥ किलेत्यनेन एकोनारायणआसीन्नब्रह्मा

इंद्राविष्णूयुवांयज्ञंजुषेथांद्रविणंचनः ॥ धत्तंदत्तंप्रदिशतामरिष्टैर्नाशवर्जितैः ॥ ७५९ ॥
पथिभिर्मोक्षमार्गैर्नःपारयंतोभवांबुधेः॥ परंपारंप्रापयंतावितियच्छ्रुतिरंजसा ॥७६०॥ऐहि
कामुष्मिकफलप्रदातारंमखस्यच॥ भोक्तारंविष्णुसूक्तस्थाविष्णुंस्तौतिद्विरूपिणं ॥ ७६१ ॥
यतश्चरुद्राह्नुतिदाहस्तमद्यापियाज्ञिकाः॥प्रक्षालयंतितेनासौयज्ञोच्छिष्टाशनोध्रुवं ॥७६२॥
प्रलयेवटपत्रेप्सुशेतेनारायणःकिल ॥ तदाह्यन्येसुरास्तस्मात्सर्वेशोविष्णुरेवहि ॥ ७६३ ॥
किंचगीतोपनिषदिसर्वेद्विपुरुषाख्यया॥संगृहीतंहरिस्त्वेकःपुरुषोत्तमईरितः ॥७६४॥ रामः
प्रभूरामभृत्यादेवास्सर्वेपिवानराः ॥ कृष्णःप्रभुःकृष्णभृत्यादेवाधर्मात्मजादयः ॥ ७६५ ॥

नचशंकरः सदेवेदमग्रआसीत् एकमेवाद्वितीयमित्यादिवाक्यंसूचयति । तस्मात् सर्वप्रलयेप्युरुर्वरितत्वात् ॥ ७६३ ॥ गीतावा क्येनापिहरेःसर्वोत्तमतांस्मारयति ॥ किंचेति ॥ ७६४ ॥ रामायणभागवतयोःकथयापिविष्णोस्सर्वोत्तमतांसाधयति । रामःप्र

भुरित्यादिना ॥ ७६५ ॥ अर्हत्तमः पूज्यतमः । ननुरामकृष्णयोस्सर्वोत्तमत्वेमूलरूपस्यकिमागतमित्यतआह ॥ यथैवेति ॥ तत्तस्मात् अवतारस्यसर्वोत्तमत्वेमूलरूपस्यसर्वोत्तमताकिंवाच्येतिभावः ॥ ७६६ ॥ विष्णोःसर्वोत्तमत्वसाधनमुपसंहरति ॥ तस्मादिति ॥ ७६७ ॥ तत्तस्मात् ॥ ७६८ ॥ अतः विष्णोरेवभूतभव्यभवत्प्रभुत्वात् ॥ ७६९ ॥ पंचसौरभेषुविस्तृतप्रमेयधारणायासमर्थस्यमंदमतेरपिसाधोर्बोधायतत्रोक्तंप्रमेयं अभिनवंचप्रमेयंमालारूपेणसंग्रहीतुमुत्तरोग्रंथसंदर्भः । तत्रादौप्रमाकरणस्यै

अर्हत्तमोह्यग्रपूजामर्हत्यन्योनसंसदि ॥ यथैवेहतथामुत्रतद्विष्णुरखिलप्रभुः ॥ ७६६ ॥
तस्मात्सर्वेश्वरोविष्णुस्सर्वंसर्वत्रसर्वदा ॥ प्रवर्तयतिसर्वज्ञस्सर्वशक्तिस्सनातनः ॥ ७६७ ॥
तद्भूतंभूतमेतस्माद्भवच्चभवतिप्रभोः ॥ भाव्यंभाविष्यतिह्यस्यकृपयानान्यतःक्वचित् ॥७६८॥
अतस्सर्वेष्टलाभायसर्वानिष्टनिवृत्तये ॥ तमर्च्यमर्चयस्तुत्यंस्तुहिनम्यंनमाच्युतं ॥ ७६९ ॥
ज्ञानंमानंनेतिवाक्यंव्याहतंस्याद्विचारणे ॥ धात्वर्थःप्रत्ययार्थश्चयतस्स्थानद्वयेसमः ॥ ७७० ॥

वप्रामाण्यं प्रमायाअप्रामाण्यं स्मृतेःअयाथार्थ्यंचवदंतंतार्किकंदूषयति ॥ ज्ञानमित्यादिना ॥ कुतोव्याहतिरित्यतआह ॥ धात्वर्थइति ॥ धात्वर्थः ज्ञाअवबोधने माङ्मानइतिधात्वर्थः । उभयोरपिज्ञानवाचकत्वादितिभावः । प्रत्ययार्थः ल्युट्प्रत्ययार्थः । ल्युट्प्रत्ययेकृतेसतिलकारोकारटकाराणांलशक्वतद्धितेउपदेशेजनुनासिकइत् हलंत्यमितिचलोपेकृतेसतिउर्वरितयकारस्ययुवोर

नाकावित्यनादेशेकृतेसतिउभयत्रापिशब्दनिष्पत्तेरितिभावः ॥७७०॥ स्वतस्त्ववादे ज्ञानप्रामाण्यस्यस्वतस्त्वपरतस्त्ववादे । तदा ज्ञानस्यैवप्रामाण्यमंगीक्रियते लक्षणकथनसमयेपुनर्ज्ञानप्रामाण्यंनांगीक्रियते । ततोपिव्याहतिरितिभावः ॥ ७७१ ॥ प्राथमिक व्याहतिमुपपादयति ॥ प्रज्ञप्तिरिति ॥ यतः शब्दाः प्रज्ञप्तिशब्दमारभ्यप्रज्ञानांतशब्दाःपर्यायाः उक्तविधयाधातोःप्रत्ययस्यच समत्वेनैकार्थवाचकाः । तत्तस्मात्प्रज्ञप्त्यादिप्रज्ञानांतपदवाच्यमेववस्तु प्रमाणंस्यात् । अन्यथाघटोभवति करीरोनेतिवत्कथंन

स्वतस्त्ववादेप्रामाण्यंकस्येतिचविचारय ॥ ७७१ ॥ प्रज्ञप्तिःप्रमितिःप्रज्ञाप्रमाप्रज्ञानमेवहि ॥
प्रमाणंस्याद्यतश्शब्दाःपर्यायाश्शक्तिशोधने ॥ ७७२ ॥ श्रवणंमननंध्यानंदर्शनंस्मरणंतथा ॥
गमनंमोचनंबंधाद्रमणंचकिमुच्यतां ॥ ७७३ ॥ गर्भाधानंचजननंतथोपनयनंचकिं ॥ यज
नाध्ययनेदानभोजनेकेविचारय ॥ ७७४ ॥ भावार्थकल्युडंतोक्तिबाहुल्यस्यैवदर्शनात् ॥
अर्थोसौप्रथमप्रोक्तोमुख्यस्तस्येतिमेमतिः ॥ तल्ल्युटोभाववाचित्वंमरणेपिनगच्छति ॥७७५॥

व्याहतिरितिभावः ॥ ७७२ ॥ ननुल्युटःकरणार्थएवमुख्यः भावार्थस्तुनमुख्यः । अतःकथंज्ञानंप्रमाणंस्यादितिमंदाशंकां भावार्थएवल्युटःप्रयोगबाहुल्यंप्रदर्श्यतस्यैवमुख्यार्थत्वमुपपादयन्परिहरति ॥ श्रवणमित्यादिना ॥ प्रथमप्रोक्तः भावेकरणाधिकरणयोश्चेत्यत्रप्रथमतःपाणिनिनाअनुशिष्टः । उपलक्षणंचैतत् । उक्तविधयाभावएवबहुशःप्रयोगाणांलोकेअनुवृत्तत्वान्नमयापृथग्वक्तव्यमित्यनुवृत्तिसूत्रेणैवाह । अप्रधानाभ्यामाभ्यांकरणाधिकरणाभ्यांसह नपपाठचेत्यपिद्रष्टव्यं । तस्यप्रत्ययस्य । तत्तस्मात्

मरणेपि मरणशब्देपि मृतावितिध्वनिः ॥ ७७३ ॥ ७७४ ॥ ७७५ ॥ ज्ञानस्यकरणानुसरणंविनास्वशक्त्यैवप्रमाणशब्दवाच्यत्वात्केवलप्रमाणत्वं । करणस्यतुज्ञानमनुसृत्यैवप्रमाणशब्दवाच्यत्वमित्याह ॥प्रमाणीभूतेति॥ तल्ल्युटः तस्मि न्प्रमाणापरपर्यायप्रज्ञानरूपार्थेप्रयुक्तल्युटः । कथंभावानुसरणमित्यतआह ॥ धात्वर्थस्येति ॥ प्रमीयतेअनेनेतिकरणव्युत्पत्तौधात्वर्थरूपज्ञानस्यप्रवेशतःप्रमाणीभूतभावार्थमनुसृत्यैवतल्ल्युटःकरणेपिप्रवृत्तिःस्यादितियोजना । उपलक्षणंचैतत् । प्रमितिःप्रमाणमितिभावव्युत्पत्तौकरणस्याप्रवेशतःकरणमननुसृत्यैवान्यत्राप्रयुक्तल्युटःप्रथमतएवभावेप्रवृत्तिरित्यपिद्रष्टव्यं ॥ ७७६ ॥ तत्तस्मा द्भावेनैरपे

प्रमाणीभूतभावार्थमनुसृत्यैवतल्ल्युटः ॥ करणेपिप्रवृत्तिस्स्याद्धात्वर्थस्यप्रवेशनात् ॥७७६॥
तत्केवलंप्रमाणंसकरणेऽनुप्रमाणता ॥ यतोनुशासनंचानुततोप्येतद्गुणोचितं ॥ ७७७ ॥
आधाराख्याधिकरणंभूम्यादिर्नप्रयोगवान् ॥ ७७८ ॥ ॥ ॥

क्ष्येणैवप्रमाशब्दप्रवृत्तेः करणेअन्यानुसरणेनैवप्रवृत्तेश्च । सःभावार्थः । प्रागुक्तनिमित्तंचस्मारयति ॥ यतइति ॥ अनु अनंतरं । एतत् करणेअनुप्रमाणशब्दप्रवर्तनं । अन्यमनुसृत्यप्रवर्तनात् अनंतरमनुशासनाच्चानुप्रमाणमितिभावः ॥ ७७७ ॥ ननु भावेकरणेचप्रमाणशब्दस्यप्रवृत्तिवदनुशासनसाम्यादधिकरणेकुतोनप्रवृत्तिरित्यतआह ॥ आधारेति ॥ आधारोधिकरणमिति वचनात् हानरूपक्रियाविषयस्यघटादेःआधारोभूतलादिरेवाधिकरणं । तत्रचप्रमाणशब्दस्यलोकेक्वाप्यप्रयोगात् । प्रयोगमूलत्वा

च्व्याकरणस्य नतत्रप्रमाणशब्दप्रवृत्तिरितिभावः ॥ ७७८ ॥ तर्ह्यधिकरणेअनुशासनंव्यर्थमित्यतआह ॥ नारायणादीति ॥ आदिपदेन शयनासनस्थानादिशब्दागृह्यंते । तंप्रत्ययं । प्राह अधिकरणेअन्वशासत् । ल्युडंतसकलशब्देष्वप्येतदेवसूत्रमनुशासनं । तच्चएकत्राप्रयोगेपिस्थानांतरेविद्यमानप्रयोगानुशासनायकथंनापेक्ष्यतइतिभावः । ननुकर्तुरपिईश्वरस्यज्ञानंप्रत्याधारतया अधिकरणत्वस्यापिविद्यमानत्वात्तत्रतार्किकैःप्रमाणशब्दस्यप्रयुज्यमानत्वाच्चसएवानुशासनविषयोस्त्वित्यतआह ॥ कर्त्रर्थइति ॥ तंप्रत्ययं ॥ ७७९ ॥ ननूक्तप्रकारेणकर्ताप्यधिकरणंकुतोनेत्यतआह ॥ षडिति ॥ कर्तृकारकं कर्मकारकं करणकारकं संप्रदान

नारायणादिशब्देषुल्युटोधिकरणेगतिं ॥ सूचयन्नेवतंप्राहकर्त्रर्थेनानुशास्तितं ॥ ७७९ ॥
षट्कारकमतेकर्तानैवाधिकरणंकिल ॥ कर्तृप्रामाण्यवादंतद्धंतिपाणिनिरेवसः ॥ ७८० ॥

कारक मपादानकारक मधिकरणकारकंचेति षट्कारकमते भूतलेघटंपश्यति भूतलेदारुच्छिनत्तीत्यादौ ज्ञायमानच्छिद्यमानघटदार्वादिकर्मकारकाधारस्यभूतलादेरेवाधिकरणकारकतयावैयाकरणैर्विवक्षितत्वात् देवदत्तसमानयोगक्षेमईश्वराख्यःकर्तापिनाधिकरणं शाब्देशाब्दिकाभिप्रेतार्थमुल्लंघ्यतदनभिप्रेतार्थकल्पनायांछलत्वप्रसंगात् । अतोअधिकरणेअनुशासनेपिज्ञानकर्तरीश्वरेन नुशासनं । किंतुभूतलमेवाधिकरणतयाअनुशासनविषयइतिवक्तव्यं । तत् प्रमाणशब्दप्रयोगाभावात् । प्रमाणशब्देप्रयुक्तल्युटो नानुशासनविषयः । किंतुस्थानाधिकरणादिशब्देप्रयुक्तल्युटएवानुशासनविषयइतिभावः । तत्तस्मात् ॥ ७८० ॥ अधुनासर्वव्य

वहारोपयोगित्वादस्मदाचार्योक्तमेवप्रमाणलक्षणमनुसरणीयं नान्यदित्याह ॥ याथार्थ्यमिति ॥ प्रमाणतायै प्रमाणत्वप्रतिपादनाय । इदंचोपलक्षणं । ज्ञानेप्रमाणत्वप्रतिपादनायज्ञानंयाथार्थ्यमितिजनश्शंसतीत्यपिद्रष्टव्यं । तत्तस्मात् ॥७८१॥ ननुयथावस्थितार्थविषयीकारित्वरूपयथार्थत्वस्यप्रमाणलक्षणत्वेसविषयकस्यकेवलप्रमाणस्यैवतल्लक्षणंस्यात् । निर्विषयकस्यप्रमाणस्यकथंतल्लक्षणं स्यादित्यतआह ॥ यदेति ॥ पारंपर्येण यथार्थज्ञानसाधनत्वरूपपरंपरया साक्षाद्वा तद्विषयीकृतौ तस्यार्थस्यविषयीकरणे । तत् ज्ञानं वाक्यंवा । यथार्थज्ञानजनकवाक्ये तज्जन्यज्ञानेच यथार्थमेववाक्यं यथार्थज्ञानमित्युभयत्रापियथार्थपदप्रयोगबलादेकत्रनिर्णीतः

याथार्थ्यमेवप्रामाण्यंयतस्स्ववचनेजनः ॥ प्रमाणतायैमेवाक्यंयथार्थमितिशंसति ॥
व्यवहारानुकूलत्वाल्लक्षणंचतदेवतत् ॥ ७८१ ॥ यदायत्रयथायोर्थस्तथातद्विषयी
कृतौ ॥ पारंपर्येणसाक्षाद्वायथार्थंवक्तितज्जनः ॥ ७८२ ॥ ॥

शास्त्रार्थोपरत्रापीतिन्यायेनकरणेष्वपिज्ञानवत्साक्षाद्यथावस्थितार्थविषयीकारित्वरूपयथार्थत्वाभावेपिज्ञानद्वारायथार्थज्ञानसाधनतयायथावस्थितार्थविषयित्वरूपयथार्थत्वंवक्तव्यं । अन्यथासत्यंमेवाक्यमितिलौकिकवाक्ये सत्यंवेत्यादिश्रुतौसत्यंमेव्याहृतंसतीत्यादिस्मृतौचयथार्थवचनत्वार्थकसत्यपदप्रयोगोनिर्मूलस्स्यात् । शब्दादिविषयाणांचस्वज्ञानंप्रतिविषयत्ववत्स्वज्ञानजनकश्रोत्रादींद्रियाणिचप्रतिउक्तविधयाविषयत्वाभावे श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच । अधिष्ठायमनश्चायंविषयानुपसेवते । शब्दादीन्विषयानन्यइंद्रियाग्निषुजुह्वतीत्यादिगीतायां प्रवृद्धलोभंविषयेषुलालसमित्यादिपुराणे षडिंद्रियाणिषड्विषयाश्चेतिपरकीयग्रंथे

च रूपरसादौचक्षुरादींद्रियविषयत्वोक्तिः ब्रह्मणोयुक्तिरूपविचारविषयतोक्तिः शब्दरूपशास्त्रविषयत्वोक्तिश्चव्यर्थास्यात् । अतः
साक्षात्संबंधरूपहस्ततरुसंयोगद्वारककायतरुसंयोगस्यापिसंयोगत्ववत् ज्ञानद्वाराइंद्रियविषयोरूपादिरपींद्रियविषयएव । एवंच
साक्षात्परंपरयावायथावस्थितार्थविषयत्वरूपयथार्थत्वस्ययथार्थज्ञाने तत्कारणेचविद्यमानत्वेन नलक्षणस्याव्याप्तिः । अतःसर्वैर
पिगुरुशिरोमणेर्मध्वद्युमणेस्सरणिरनुसरणीयैव ॥ ७८२ ॥ स्वतस्त्ववादइत्यत्रसूचितंप्रमेयंसूचयति ॥ प्रामाण्यवादइति ॥
प्रामाण्यवादे प्रामाण्यस्यस्वतस्त्ववादे । लक्षणोक्तौ प्रमाकरणमित्यादिलक्षणोक्तौ । अस्य ज्ञानप्रामाण्यस्य विस्मर्ता । अन्यस्य कर

प्रामाण्यवादेज्ञानस्यप्रामाण्यंवर्ततेकिल ॥ स्मर्तान्यस्यास्यविस्मर्तालक्षणोक्तौसकिंबुधः ॥ ७८३ ॥
अदुष्टकरणंचक्षुःप्रमाव्याप्तंयथाभवेत् ॥ तथाप्रमाताजीवोपिप्रमाव्याप्तःकुतोनते ॥ ७८४ ॥ अशि
ष्टकर्तृप्रामाण्येकर्तृमात्रेतदुच्यतां ॥ नचेत्सभास्वशिष्टस्त्वंशिष्टमध्येभविष्यसि ॥ ७८५ ॥ ॥

णप्रामाण्यस्यस्मर्ता । सः तार्किकःबुधःकिमितिसंबंधः ॥ ७८३ ॥ किंच ननुप्रमाव्याप्तत्वेनईश्वरस्यप्रमाणत्वे जीवस्यापितेनैवकु
तोनप्रामाण्यं । नचवाच्यमप्रमायाअप्याश्रयेजीवेकथंप्रमाव्याप्तत्वमिति । तथासत्यप्रमायाअपिकरणेइंद्रियेप्रमाव्याप्तत्वाभावप्र
संगात् । इंद्रियस्यादुष्टतावस्थायांप्रमाव्याप्तिश्चेत् तदैवजीवस्यापिकथंनप्रमाव्याप्तिः । तर्ह्येकस्यैवजीवस्यप्रामाण्याप्रामाण्येद्वेअ
पिस्यातामितिचेत् न । एकस्यैवेंद्रियस्यप्रामाण्याप्रामाण्यवदुपपत्तेः । अवस्थाभेदेनतत्रविरोधपरिहारश्चेत्तेनैवात्रापिविरोधंपरिहरे
त्याह ॥ अदुष्टेति ॥ ७८४ ॥ अशिष्टकर्तृप्रामाण्ये अशिष्टस्य पाणिनिनाप्रमाणतयाअननुशिष्टस्य कर्तुरीश्वरस्यप्रामाण्येअंगी

कृतेसति कर्तृमात्रे ज्ञानकर्तृचेतनमात्रे । तत्प्रामाण्यं । अशिष्टत्वस्य उक्तविधयाप्रमाव्याप्तत्वस्यचोभयत्रसाम्यात् । नचेत्
न्यायसाम्येप्येकत्रप्रामाण्यंनांगीकरोषिचेत् । अशिष्टः पंडितैरशिक्षितः । अर्धजरतीयांगीकाराशिष्टमध्येसत्पंडितमध्ये । अपंडि
तोभविष्यसीत्यर्थः । मूर्खसदसीदंवक्तुंशक्यते । नशिष्टमध्यइतिभावः ॥ ७८५ ॥ इदानींस्मृतेर्याथार्थ्यंसमर्थयते ॥ यदीति ॥
मानत्वं यथार्थत्वं । अनुभूतिषु प्रमारूपानुभूतिषु । प्रमारूपान्यसंस्कारजस्मृतावपिप्रमासमानविषयत्वावश्यंभावात्समानविषयेत्यु
क्तं । द्वयी यथार्थत्वायथार्थत्वरूपा ॥ ७८६ ॥ ननुयदायत्रघटंस्मरति । तदातत्रतस्यसत्वनियमाभावात्कथंयाथार्थ्यमितिचेत् स

यदिस्मृतेर्नमानत्वंनस्यात्तर्ह्यनुभूतिषु ॥ समानविषयज्ञानद्वयेयन्नद्वयीगतिः ॥ ७८६ ॥ यस्मि
न्कालेयत्रदेशेतद्धटंसंस्मरेत्किल ॥ तदानींतत्रसोर्थोभूदिदानीमस्तिवानवा ॥ स्मर्तारोपीत्थमे
वाहुस्तत्केनास्याममानता ॥ ७८७ ॥ कालात्ययस्यसंस्काराभावान्नस्मरणंयदि ॥ तर्हितत्काल
मद्यापिवर्तमानंचनस्मरेत् ॥ घटमात्रग्राहिणीयंकुतोवामानतांत्यजेत् ॥ ७८८ ॥ ॥

त्यं । इदानींतत्रघटोस्तीतिस्मरणे स्मृतेरयाथार्थ्यस्यादेव । नचैवंस्मृतेराकारः । किंतुतदातत्रघटआसीदित्येवस्मृतेराकारः । अ
स्याश्चायाथार्थ्यंतदास्यात् । यद्यनुभवकालेपितत्रघटोनासीत् नचैतदस्ति । स्मृतिकालेपितत्रघटोनास्तिचेत्काहानिरित्याह ॥ य
स्मिन्कालइति ॥ इत्थमेव पूर्वश्लोकोक्तप्रकारेणैवस्मर्तारोप्याहुरितिसंबंधः । तत्तस्मात् । अस्यांस्मृतौ । अमानता अयथार्थ
ता ॥ ७८७ ॥ कालात्ययस्य स्मृतिकालेअतीतोयोयमनुभवकालःतद्ध्वंसस्यसंस्काराभावात् । अनुभवोत्तरकालीनानुभवकाल

युक्ति- ध्वंसस्यानुभवकालेनुभवाभावेनसंस्काराभावात् तर्हिकालध्वंसस्यानुभवाभावेनस्मरणाभावे अचाक्षुषस्यतस्यकालस्यापिघटानुभ मल्लिका
वकालेनुभवायोगेनतस्यकालस्यकालविशिष्टघटस्यचस्मृतिकालेवर्तमानत्वेनस्मरणमपिनस्यात् । येनातीतकालेनुभूतघटस्यचव
॥१०८॥ र्तमानत्वेनग्रहणादयाथार्थ्यमुच्येत । कालगोष्ठींविहायघटस्वरूपमात्रस्यानुभवेस्मृतौचोल्लेखेकथमेकस्यायाथार्थ्यं । उपनीतस्यकाल फलसौ०
स्यतदानींग्रहणेइदानींतनकालध्वंसोपिविद्यमानःसर्वानुभवसिद्धश्चतेनैवोपनायकेनोपनीतःकुतोनस्मर्यते । तदानींतनकालस्यत
त्कालीनघटस्यवाइदानींवर्तमानत्वंअविद्यमानत्वात्सर्वानुभवविरुद्धत्वाच्चनोपनीतंस्मृतावुल्लिख्यते । नह्युपनीतमपिसौरभंचक्षुषा

सुहृद्भावेनपृच्छंतंप्रतितूत्तरमुच्यते ॥ यथानुभवकालोपिसाक्षिणैवोपनीयते ॥ तथात
दप्ययोप्यत्रसाक्षिणैवोपनीयतां ॥७८९॥ मनोंतःकरणंतस्यसाचिव्यंकुरुतेह्यसः ॥ ज्ञा
तज्ञापनदोषंचदूरीचक्रेततस्स्मृतिः ॥ ७९० ॥ अतोज्ञानस्यमानत्वमपवादेनहीयते ॥
नचेज्ज्ञानग्राहिणैवगृह्यतेनात्रसंशयः ॥ अपौरुषेयवेदोक्तेःप्रामाण्यंस्थिरमेवतत् ॥७९१॥

चंदनइवपाषाणेप्रतीयते । अनुभवाभावादसंस्कारस्थलेनोल्लिख्यते अतोस्मिन्पक्षेपिनस्मृतेरयाथार्थ्यस्यावसरः ॥७८८॥ नन्वती
तकालेतत्रघटोभूदितिस्मृतेराकारंवदतांभवतामप्यतीतकालस्येदानींतनकालध्वंसस्यवाउल्लेखोवक्तव्यः सकथमितिचेत् तत्राह ॥
सुहृद्भावेनेति ॥ ७८९ ॥ बहिरिंद्रियस्यचक्षुरादेरनुपनायकेसाक्षिणिस्मृतिकरणमनोरूपांतरिंद्रियोपनायकत्वंसुखेनस्यादित्याह ॥६८६॥
॥मनइति॥ सःसाक्षी। ततः प्रागज्ञातस्यैवकालध्वंसस्यस्मृतावुल्लेखात् ॥७९०॥ उपसंहरन्तर्हिकस्याप्रामाण्यमित्यतआह ॥ अत

इति ॥ अपवादेन बाधादिना । नचेत् अपवादोनचेत् । तत्तस्मा त्प्रामाण्यस्यबाधकैकापोद्यत्वादपौरुषेयेबाधकाभावाच्च ॥ ७९१ ॥ आनंदमूर्तिता ब्रह्मणःआनंदमयशिरःपाण्याद्याकारविग्रहवत्त्वं । नोचेत् अस्यप्रियमेवशिरइत्यादिश्रुतेरौपचारिकत्व मंगीकृत्यविग्रहोनांगीक्रियतेचेत्। तर्ह्यानंदश्रुतेरपिउपचारेणदुःखनिवृत्तिपरत्वस्यवक्तुंशक्यत्वात् उभयं मदभिलषितानंदविग्रह वत्त्वं त्वदभिलषितानंदस्वरूपत्वंचेत्युभयंनप्रसिध्यतीतिसंबंधः। तार्किकबालः अष्टगुणतयांगीकृतईश्वरेस्वानभिमतसुखस्यासिद्धे

आनंदश्रुतितोब्रह्मानंदरूपंयदीष्यते ॥ तर्हिप्रियशिरस्त्वादिश्रुतेरानंदमूर्तिता॥ ७९२ ॥ अप्यं
गीक्रियतांनोचेन्नोभयंचप्रसिद्ध्यति ॥ जयीतार्किकबालस्स्यात्त्वंतुभूयाःपराजयी ॥ ७९३ ॥
यद्यैक्यंनिर्गुणत्वंचवाक्यस्यबलतस्तव ॥ तर्हिभेदश्चसुगुणास्तत्तद्वाक्यबलान्मम ॥ ७९४ ॥
यदिसिद्धानुवादेनमद्वाक्यंदुर्बलंतव ॥ सिद्धत्वद्ब्रह्मवाक्तर्हिगर्ह्यामह्यंनरोचते ॥ ७९५ ॥ अपू
र्वशशश्रृंगोक्त्याबलवत्यातदापतेत् ॥ परेणपूर्वबाधश्चेद्ब्रह्मवृत्त्यानिवर्त्यतां ॥ ७९६ ॥ पूर्वेणपर
बाधश्चेद्बंधान्मुक्तिर्निवर्त्त्यतां ॥ स्तुत्यंमिथ्यायदिभवेद्दृश्यंमिथ्यानकिंतव ॥ ७९७ ॥ ॥

जयवान्स्यात् ॥ ७९२ ॥ ७९३ ॥ तत्तद्वाक्यबलात् भेदगुणप्रतिपादकवाक्यबलात् ॥ ७९४ ॥ सिद्धत्वद्ब्रह्मवाक् स्वप्रकाश तयासिद्धस्यत्वद्ब्रह्मणःप्रतिपादिका अस्तिब्रह्मेतिचेद्वेदेत्यादिवाक् ॥ ७९५ ॥ बलवत्या सिद्धविषयत्वाभावेनबलवत्या । तत् शश श्रृंगं । वृत्त्या श्रवणजनितांतःकरणसाक्षाद्वृत्त्या ॥ ७९६ ॥ तवेत्यनेन यद्दृश्यं तन्मिथ्येतिपराभिमतव्याप्तिंसूचयति ॥ ७९७ ॥

युक्ति- श्रुत्युत्पन्नदृशेःश्रुत्युत्पन्नदर्शनविषयत्वादितियावत्। श्रुत्युत्पन्नस्तुतेःश्रुत्युत्पन्नस्तुतिविषयत्वादितियावत्। सन् भेदभगवद्गुणा मल्लिका
दिरपिसन्नित्यर्थः। वेदमूलत्वस्योभयत्रसाम्यादेकंसत् अपरंमिथ्येतिवक्तुंनशक्यतइतिभावः। तत्रदृष्टांतमाह ॥ एकेति फलसौ०
॥१०९॥ ॥ ७९८ ॥ ऐक्यगुणमिथ्यात्ववाक्यानांप्रागुक्तदूषणंस्मारयति ॥ किंचेति ॥ दंताः प्रतिपाद्यतयाश्रुतिमुखस्थितत्वेनदंतस
मानाः ब्रह्मधर्मतयाब्रह्मखंडभूतैक्याद्यर्थाः ॥ ७९९ ॥ भेदवाक्यादेरतत्वावेदकत्वंवदतःपरस्यदूषणमाह ॥ अपौरुषेयेति ॥

श्रुत्युत्पन्नदृशोस्सचेच्छ्रुत्युत्पन्नस्तुतेश्चसन् ॥ एकपङ्क्तिस्थगेहानांदाहादाहौकथंवद ॥ प्रतिबं
दीततोबंदीकरोतिभवतश्श्रुतिं ॥ ७९८ ॥ किंचाखंडार्थवादाख्यमयश्चणकमश्नुतः ॥ दंताः
पेतुर्भवद्वाक्यभुजंगस्यफणेनकिं ॥ ७९९ ॥ अपौरुषेयनिर्दोषवाक्येष्वेषुयदीष्यते ॥ सर्वथाऽ
मानतातर्हिगताप्रच्छन्नबौद्धता ॥ ८०० ॥ अमानत्वस्वतस्त्वाख्यतत्वस्यव्यक्तवक्तरि ॥ अ
मानताकालकूटंयदिवक्रेवसेत्तव ॥ स्वमानोच्चारणेशक्तिर्गमिष्यतिमरिष्यसि ॥ ८०१ ॥

सर्वथा अमानता अर्थांतरकथनंविना अतत्वावेदकत्वरूपंकेवलाप्रामाण्यं। प्रच्छन्नबौद्धतागता स्पष्टंवेदाप्रामाण्यवादित्वेनप्रच्छन्न
बौद्धतागता। किंतुप्रसिद्धबौद्धतैवागतेतियोजना ॥ ८०० ॥ प्रकारांतरेणापिपरस्यप्रच्छन्नबौद्धत्वमुपपादयति ॥ अमानत्वेति ॥ ॥६८७॥
साहित्यमुद्रयादूषणांतरंचाह ॥ अमानतेति ॥ मरिष्यसिस्वेष्टसाधनशक्त्यभावेमृतप्रायोभविष्यसीत्यर्थः ॥ ८०१ ॥ अवांतर

प्रमेयमुपसंहरति ॥ तस्मादिति ॥ ८०२ ॥ लेशतस्तदेवदर्शयति ॥ निर्दुःखेति ॥ भोगोनुभवः। तत् आपातप्रतीतज्ञानमा
त्रनिषेधनं। तत्तस्मात्। आपाततोज्ञानमात्रनिषेधपरत्वेनावयोरयुक्तार्थत्वात्। तर्केण तर्कमुद्रया। अखिलाभोगाः मुक्तस्त्रीपुरुषाणा
मन्योन्यंदर्शनस्पर्शनकमलाघ्राणनादिभोगाः॥८०३॥८०४॥ पराभिमतंस्वावेद्यत्वरूपस्वप्रकाशत्वमपिस्वरूपभूतसुखानुभवायोगे
नदूषयति ॥ सुखानुभवेति ॥ सुखानुभवाभावेपिसुखरूपत्वज्ञानरूपत्वमात्रेणैवमुक्तेःसाफल्यंस्यादित्यतआह ॥ सुखाविषय

तस्मादबाधितार्थानिवाक्यानिस्युर्यथाश्रुतं ॥ बाधितार्थानिवाक्यानियोग्यार्थेषुनयेद्बुधः॥८०२॥
निर्दुःखसुखभोगाख्योमोक्षोवाच्यस्त्वयामया ॥ यत्रत्वस्येतिवाक्यंतुज्ञानमात्रंनिषेधति
॥८०३॥ तच्छ्रुत्वातार्किकोहृष्येत्तत्सातर्केणतार्किकं ॥ हंतुसंत्वखिलाभोगामुक्तौसर्वजनप्रियाः
॥८०४॥सुखानुभवसिद्ध्यर्थंस्वावेद्यत्वंपरित्यज ॥ सुखाविषयकज्ञानरूपंसुखमयंमनः ॥ किंते
नफलवत्किंतुतद्द्रष्टुस्साक्षिणःफलं ॥ ८०५ ॥ किंचाभिमानिव्यपदेशस्त्वित्यत्रससूत्रकृत् ॥
यतोमृदब्रवीदित्याद्यापातानुपपन्नवाक् ॥ तद्वद्देवपरेत्याहतन्नेत्याहमतंतव ॥ ८०६ ॥ ॥

केति॥ सुखमयं सुखरूपं। तेन सुखरूपत्वज्ञानरूपत्वमात्रेण फलवत् सुखादिफलवत्तद्द्रष्टुः तस्य मानससुखस्यद्रष्टुः॥८०५॥अपि
चतत्त्वमसि सर्वंखल्विदंब्रह्मेत्याद्यैक्येषु त्वंसर्वपदाहमादिपदानांअंतर्यामिपरदेवताविषयत्वमेववक्तुमुचितं। नतुबाधितजीवैक्यक
थनमित्येतत्सौत्रप्रक्रिययाप्रतिपादयति॥ किंचेति ॥अनुपपन्नवाक्। अनुपपन्नार्थवाक् तद्वद्देवपरा। तत्तस्मात्॥८०६॥प्रत्युज्ञ

मप्रश्रयणाभिवादनंविधीयतेसाधुमिथस्सुमध्यमे । प्राज्ञैःपरस्मैपुरुषायचेतसागुहाशयायैवनदेहमानिनइतिभागवतस्थरुद्रवाक्येना
पिजीवेश्वरयोर्भेदकथनमेवोचितं ब्रह्मरुद्रादिषुक्रियमाणनमस्कारपूजादीनांचतत्तदंतर्याम्यधोक्षजाख्यभगवद्विषयत्वकथनंचोचि
तमित्याह ॥ प्रत्युद्गममिति ॥ अनेनतद्वाक्यमर्थतःसंगृहीतमितिद्रष्टव्यं । तेमतं जीवेश्वरयोरेकत्वरूपमतं । जीवेषुबाधिता
र्थकवाक्यानामपिजीवपरत्वकथनरूपमतंच । कथमित्यतआह ॥ गुहेति ॥ इत्युक्तौ जीवपरमात्माख्यौ द्वौपदार्थौ । यद्यस्मात्

प्रत्युद्गमंप्रश्रयणमभिवादनमेवच ॥ गुहाशयायकुर्वंतिनतुतदेहमानिने ॥ ८०७ ॥ इतियः
प्राहगिरिशस्सोपिनेत्याहतेमतं ॥ गुहाशयोदेहमानीत्युक्तौयदेहगौजगौ ॥ ८०८ ॥ यद्देह
मानिनंप्राहजीवमेवमहेश्वरः ॥ सोत्यल्पगुणवाक्यानिजीवेष्वेवानुशास्तितत् ॥ ८०९ ॥ उप
चारार्हसुगुणस्तोमोक्तीःपरमात्मनि ॥ सोन्वशिक्षद्यतःप्रत्युद्गमाद्यमदिशत्प्रभोः ॥ ८१० ॥
अतश्श्रुतिपुराणादौरुद्राद्युत्कर्षवाकुया ॥ सांतर्याम्यधिदैवादिष्वित्युक्तांतरगोचरा ॥ ८११ ॥

तस्मात्तवमतंनेत्याहेतिपूर्वेणान्वयः ॥ ८०७ ॥ ८०८ ॥ एतद्वाक्यबलेनैवप्रमेयांतरंचसिद्धमित्याह ॥ यदिति ॥ यद्यस्मात्महे
श्वरः देहमानिनं देहाभिमानवत्त्वेनदेहमानिपदवाच्यंजीवमेवप्राह । तत्तस्मात्सःमहेश्वरः अत्यल्पगुणवाक्यानि भगवत्यनुपप
न्नात्यल्पगुणप्रतिपादकवाक्यानिजीवेष्वेवानुशास्ति । नतुभगवतीतियोजना । देहाभिमानाख्यनीचगुणप्रतिपादकदेहमानिपदे
नजीवमेवनिर्दिशन् रुद्रमहिमप्रतिपादकवाक्यानामंतर्यामिपरत्ववत् जननमरणादिदोषप्रतिपादकवाक्यानामपिनांतर्यामिपरत्वं ।

किंतुजीवपरत्वमेवेतिसूचितवानितिभावः ॥ ८०९ ॥ ८१० ॥ ८११ ॥ गुहाशयोपिहरिरेव नत्वन्यइत्यौत्तररुद्रवाक्येनैवसिद्ध मित्याह ॥ अधोक्षजइति ॥ अनेन सत्वंविशुद्धंवसुदेवशब्दितंयदीयतेतत्रपुमानपावृतः। सत्वंचयस्मिन्भगवान्वासुदेवोह्यधोक्ष जोमेमनसाविधीयतेइतिश्लोकंगृह्णाति । अस्यार्थः । यद्यस्मात्तत्र सत्वगुणे मनसिप्रचुरेसति अपावृतः अपगतमावृतमावरणंप्र कृत्याख्यंयस्मात्सोपावृतः पुमान् परमपुरुषः ईयतेज्ञायते । तस्माद्विशुद्धं रजस्तमोभ्यामविमिश्रितं सत्वंसत्वगुणः । वसुदेव शब्दितं सर्वत्रनिवसनशीलत्वाद्वसुदेवशब्दवाच्यःपरमात्मा दीव्यतेप्रकाश्यतेअनेनेतिव्युत्पत्त्यावसुदेवशब्दप्रतिपादितं । अस्तुस

अधोक्षजोमेमनसाविधीयतइतीश्वरः ॥ सएवतंयद्व्यनक्तिगुहाशयपदोदितं ॥ ८१२ ॥
एवंचविष्णोरुत्कर्षेसर्वागमगिरांभरं ॥ योहरोवक्तिसर्वस्यसगुरुर्नात्रसंशयः ॥ त्रिलो
चनमतायास्मैकोवाद्रुह्येद्विलोचनः ॥ ८१३ ॥ ॥ ॥

त्वगुणस्यवसुदेवनाम प्रकृतेकिमायातमित्यतउक्तं ॥ सत्वंचेति ॥ तत्सत्वंच सत्वगुणः। यस्मिन्परमात्मनि मत्स्यकूर्माद्यवतारैः स्वरक्षकस्यपरमात्मनःवशेतिष्ठतीत्यर्थः । रजस्तमोगुणप्रचुरदैत्यसंहारेणसत्वगुणप्रचुरदेवतारक्षणेसत्वगुणस्यैवरक्षणंकृतंभवति । एवंचवसुदेवशब्दवाच्यःसत्वगुणोयस्यवशेस्ति । सभगवान्वसुदेवोयस्यरक्ष्यः सवासुदेवइतिव्युत्पत्त्यावासुदेवः वासुदेवशब्दवा च्यः । नतुवसुदेवपुत्रत्वाद्वासुदेवः । नापिसाक्षात्सत्वगुणस्यैवाधारतयावासुदेवः । तथासतित्रिगुणवर्जितत्वार्थकत्वेनमदभिमत

या गुणमात्रनिषेधकत्वेनत्वदभिमतयानिर्गुणश्रुत्यैवविरोधात् । सात्विकसनकादिवदस्याप्युत्पत्तिसंभवेनवसुदेवपुत्रत्वार्थकशब्द स्यान्यार्थकथनायोगात् प्राकृततयादर्शनयोग्यत्वसंभवेन वक्ष्यमाणाधोक्षजपदायोगात् सत्वगुणप्रचुरब्रह्मणइवमनसाधार्यत्व मात्रसंभवेपि विधीयतइतिवक्ष्यमाणस्यसर्वेभ्योप्यतिशयेनधार्यत्वस्यायोगात् । सत्वात्संजायतेज्ञानमितिवचनान्मनोवृत्तिरूप भगवत्साक्षात्कारकरणस्यसत्वगुणस्यसाक्षात्कर्तृजीवेष्वेववृत्तेरुचितत्वेनईयतइत्युक्तज्ञेयभगवन्निष्ठतायाःप्रयोजनाभावात् । त्रिविधाभवतिश्रद्धादेहिनांसास्वभावजा । सात्विकीराजसीचैवतामसीचैवतांशृण्वितिगीतावचनेसात्विकादित्रितयकारणीभूतस्व भावपदोदितजीवस्वरूपभूत सात्विकत्वराजसत्वतामसत्वाख्यस्वभावत्रयस्य त्रिधापदमहिम्नासूचितस्य सात्विकसात्विकत्व सात्विकराजसत्वसात्विकतामसत्वाख्यसज्जीवनिष्ठप्राकृतगुणनिमित्तत्रैविध्यस्य राजससात्विकत्वराजसराजसत्वराजसतामसत्वा ख्यमध्यमजीवनिष्ठप्राकृतगुणनिमित्तत्रैविध्यस्य तामससात्विकत्व तामसराजसत्व तामसतामसत्वाख्याधमजीवनिष्ठप्राकृतगु णनिमित्तत्रैविध्यस्यचेत्येवंनवविधबाह्यविभागस्य कारणीभूतस्वभावपदोदितजीवस्वरूपसात्विकसात्विकत्वादिविभागनवकस्य च देहीतिपदोदितजीवेष्वेवकथनात् । स्वयोग्यस्वरूपज्ञानानंदादेःसदावभासनस्वभावाःसात्विकसात्विकाःस्वयोग्यमौक्तान्नपा नादिविषयेषुचमध्येमध्येंअभिलाषस्वभावाः सात्विकराजसाः मुक्त्यनंतरमपिस्वयोग्यस्वरूपज्ञानेष्वेवसर्वदाशक्तिमंतः कदाचिद्व्यक्तिमंतः कदाचिदव्यक्तिमंतश्चसात्विकतामसाइतिउत्तमानांस्वरूपेविभागः । मध्यमाधमेषुतत्स्वरूपदोषाणामपिसंभवा न्नकश्चित्क्षुद्रोपद्रवः । बाह्यतत्वज्ञानकरणस्यापिसत्वगुणस्यहेयत्वघटनायस्वरूपज्ञानंप्रत्यावरणत्वावश्यंभावेन भगवतोपावृत



पदोक्तावरणशून्यत्वायोगात् । अतएवसमग्रविज्ञानवैचित्र्यायस्वरूपविभागस्याप्यपेक्षितत्वात् । संसारदशायामानसज्ञान वैचित्र्यायप्राकृतगुणत्रयनिमित्तभागत्रयस्याप्यपेक्षितत्वात् । ननुसज्जीवेषुचबहिःराजसत्वतामसत्वयोःकिमर्थंप्रवेशः । दुर्जीवेषु चसात्विकत्वराजसत्वयोःकुतोनिवेशः मध्यमजीवेषुचसात्विकत्वतामसत्वयोःकिंप्रयोजनमितिचेत्सत्यं । बहिःसज्जीवानामपिकादाचित्कसांसारिकभ्रमप्रमादादेःक्रमेणसंपादनार्थंतयोरपेक्षितत्वात् । सात्विकसात्विकेषुतात्विकयोगिषुरुद्रादिषुप्रमादादेरल्पत्वादविवक्षा । स्वरूपेचभगवतःस्वमहिम्नैवजीवानांयोग्यतातिरेकेणादृश्यत्वसंभवेपि दृश्यजगतिक्रमात्स्वयोग्यतातिरेकेणज्ञानप्रतिरोधार्थं । अतएवमिथ्याज्ञानिषुकल्यादेर्बहुमिथ्याज्ञानित्वादुत्तमत्वं । तादृशस्वभावस्यापिवक्तुमुचितत्वात् । दुर्जीवेषुस्वरूपेबहिश्चताम सतामसानांराक्षसानामिवअन्यत्रापितमोनिमित्तकबहुतरमिथ्याज्ञानप्रसक्तौसत्यांक्रमेणतन्निरोधार्थं । मध्यमजीवेषुचसर्वत्रापिरजो गुणस्वभावेनैवमिश्रज्ञानसंभवेपितेषांचैकप्रकारत्वाभावेनतन्निष्ठमिश्रज्ञानस्यापितारतम्यबोधनायतस्यैवज्ञानस्योच्चत्वनीचत्वसंपा दनार्थं । प्राथमिकसत्वप्रवेशेतज्जन्यतत्वज्ञानस्यापिसत्वप्रवेशरहितमध्यमाधमकोटिभ्यामाधिक्यसिद्धे र्मिश्रजीवत्वमहिम्नामिश्र त्वसंपादकरजोमहिम्नाचमिथ्याज्ञानस्यापिआधिक्यसिद्धेः मध्यमराजसराजसत्वतमसोरुभयोरप्यप्रवेशेनउच्चादधमस्यनीचादुत्त मस्यमिश्रज्ञानस्यद्विर्बद्धरजःपदमहिम्नासिद्धेः ईषत्सत्वतमःप्रवेशस्यचाविवक्षितत्वात् । अधमपक्षेसत्वाप्रवेशेनरजःपदद्वयाभावे नतमःपदप्रवेशेनचप्राचीनपक्षद्वयादपिसत्वगुणजन्यतत्वज्ञानस्याल्पत्वसिद्धौपूर्वोक्तन्यायेनतामसपक्षोदितमिथ्याज्ञानस्याप्यल्प त्वसिद्धेः सत्वतमोगुणजन्यसत्कर्मदुष्कर्मप्राबल्येनतयोरुभयोरुत्तमाधमत्वसिध्यर्थंवासात्विकतामसत्वोक्तेःसार्थक्यात् । राजस

राजसपदोक्तमध्यमेतुसत्कर्मदुष्कर्मणोरन्यतरस्याप्याधिक्यालाभेनोभयोरपिसमत्वस्यैवलाभेमध्यमत्वस्यैवसिद्धेः। नचवाच्यंताम
सपदप्रयोगेनमिथ्याज्ञानबाहुल्येपूर्ववत्तत्वज्ञानस्यचबाहुल्यमत्रापिस्यादिति । तथासतिप्राचीनपक्षस्यांतिमपक्षस्यचसांकर्यप्रसंगा
त् । अधमेष्वेषुज्ञानोत्कर्षायोगाच्च । अथवा । तमसाऽज्ञानमेवचेतिवचनेनतमोगुणादज्ञानस्यापिसंभवात्पूर्वोक्तकोटिद्वयादपि
अंतिमेष्वेषुअज्ञानातिशयद्योतनायतामसत्वोक्तिरितिद्रष्टव्यं । अथवासत्वपदेनमायानिबर्हणसामर्थ्यंब्रह्मादीनांस्वरूपतःसात्वि
कसात्विकत्वेभगवतस्ततोप्यतिशयितसात्विकत्वस्यन्यायप्राप्तत्वात्सत्वपदेनतस्यस्वभावतएवसत्वंग्राह्यं । अत्रविशेषशक्त्याआ
धाराधेयभावस्यैवसंभवान्नकश्चित्क्षुद्रोपद्रवः । एतेनैवापाततोदोषापादकशब्दानामपिभाष्यादौउक्तविधयाभगवतिगुणपरतयैव
योजयितुंशक्तिसद्भावेतेपिशब्दाविष्णुपरतयैवयोज्याइतिसूचितं । ननुवसुदेवपुत्रत्वाख्यप्रसिद्धार्थएवकुतोनेत्यतउक्तं । अधोक्ष
जोहीति ॥ यस्मादधस्तादेवाक्षजमक्षजनितंज्ञानंसोधोक्षजोहि मनुष्यदृशामगोचरोनारायणःकथंकस्यचित्पुत्रोभवेत् । अतःद्वेधा
सत्वगुणाख्यवसुदेवसंबंधित्वादेवभगवान्वासुदेवइतिपूर्वेणान्वयः । सःवासुदेवः मेमनसाविधीयते विशेषेण वि विशिष्टतया
विःपरमात्मेतिवा धीयतेधार्यते अथवासःवासुदेवः मेमनसा मांविधत्तइत्यादिवाक्यानांशुकरूपेणव्याख्यानसमयेमदुपदिष्टज्ञानेन
विधीयते सर्वैर्नमस्कर्तव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइत्यादिविधेरभिधेयः विकल्पापोह्यइत्यादिविधेश्चविषयीक्रियते । स
कलविधीनांविषयतयाप्रतिपाद्यतइत्यर्थः । एवंच मच्छिष्योयस्त्वं अहंत्वांननमस्करोमीतिकथंकोपंकरोषि । गुरूपदिष्टज्ञानग्रहणे
दक्षत्वाद्दक्षशब्दवाच्योयस्त्वंकथमधुनाअदक्षोभूरितिफलितोर्थः। सएव पूर्वश्लोकोक्तएवईश्वरःरुद्रः । यद्यस्मात् ॥८१२॥८१३॥

प्रमेयांतरेपिप्रतिबंदींग्रहीतुमुक्तं ॥ भेदस्येति ॥ ऐक्येप्रातिभासिकत्वोपपादनायोक्तं ॥ भेदोहीति ॥ तस्यऐक्यस्य अद्यैवनिषिद्धता ब्रह्मज्ञानान्यबाध्यतांकिंनदद्यादितिसंबंधः ॥ ८१४ ॥ सा प्रातिभासिकताख्या । एवंचवृद्धिमिच्छतोमूलमपिन ष्टमित्याभाणकंत्वमेवानुकरोषीत्याह ॥ अतइति ॥ ८१५ ॥ इममेवदोषंप्रमेयद्वयेप्यतिदेष्टुमुक्तं ॥ एवमिति ॥ अभावाभाव

भेदस्यव्यावहार्यत्वेस्यादैक्यंप्रातिभासिकं ॥ भेदोह्यैक्यनिषेधात्मातस्याद्यैवनिषिद्धता ॥
किंनदद्यात्त्वदद्वैतेब्रह्मज्ञानान्यबाध्यतां ॥ ८१४ ॥ इदानीमेवबाध्यत्वाच्छुक्तिरूप्येपिसा
दशा ॥ अतोवृद्ध्यर्थिनश्चित्रंमूलनाशोभवेत्तव ॥ ८१५ ॥ एवमेवत्रिकालेषुनिषेधाभाव
रूपिणी ॥ सत्यताव्यावहार्याचेन्मिथ्यात्वंप्रातिभासिकं ॥ ८१६ ॥ भवेत्पूर्वोक्तमार्गेणगुणा
भावनिषेधकाः ॥ अभावाभावरूपत्वाद्भावरूपागुणाःप्रभोः ॥ ८१७ ॥ व्यावहार्यायदि
तदानैर्गुण्यंप्रातिभासिकं ॥ भवेदघटभूमेःकिंसघटाभूर्नबाधिका ॥ ८१८ ॥ प्रातिभासिक
मानानिमानान्यासन्यतस्तव ॥ तस्मान्मन्मानमार्तांडःप्रलयार्कोभवेद्द्विषां ॥ ८१९ ॥ ॥

रूपत्वाद्गुणाभावनिषेधकाःप्रभोःभावरूपागुणायदिव्यावहार्याइतिसंबंधः । भावस्याप्यभावनिषेधकत्वेदृष्टांतकथनायोक्तं अघट भूमेरिति ॥ ८१६ ॥ ८१७ ॥ ८१८ ॥ तवमानानि ऐक्यमिथ्यात्वनिर्गुणत्वप्रतिपादकमानानि यतःप्रातिभासिकमानानि उक्त विधयाप्रातिभासिकैक्यादेःप्रतिपादकमानान्यासन् । मन्मानमार्तांडः मदभिमतभेदसत्यत्वसगुणत्वप्रतिपादकप्रमाणाख्यमार्तांडः

॥ ८१९ ॥ ऐक्यादीनांस्वेनप्रागुक्तबाधंपरस्याप्यनुभवारूढंकर्तुमुक्तं ॥ एक्येति ॥ यद्यस्मात् । अतःकारणात् अनादौसंसारे केनकस्यबाधःभवेत् । वदेतिसंबंधः । त्वमप्यस्मिन्संसारेऽनादिकालमारभ्यैक्यादिकंसांसारिकव्यवहारानुकूलत्वादनादृत्य भेदादिकमेवपुरस्कृत्यभेदसापेक्षभगवत्पूजनं गुणसापेक्षंगुणानुस्मरणरूपभगवद्ध्यानं सत्यत्वसापेक्षनित्यनैमित्तिककर्माणिचकरोषि अन्यथैषांत्वदभिमतव्यावहारिकत्वमेवनस्यात् । अतइदानींभेदादिनाऐक्यादेःकथंनबाधइतिभावः ॥ ८२० ॥ ८२१ ॥ अथयदिविशिष्टयोर्भेदःविशिष्टयोरैक्यमेवबाधते नतुचितोरैक्यमितिवदसि तर्हिचितोरैक्यमपिचितोरेवभेदंबाधते नतुविशिष्टयोर्भेदं ।

ऐक्यनैर्गुण्यमिथ्यात्वान्यधःकृत्यैवयद्भवान् ॥ भेदसद्गुणसत्यत्वान्यालंब्येश्वरपूजनं ॥ ८२० ॥
गुणानुस्मरणंश्रौतस्मार्तकर्माणिचानिशं ॥ करोषिकेनकस्यातोबाधोऽनादौभवेद्वद ॥ ८२१ ॥
चिदेकतांनबाधेतयद्ययंतर्हिसाप्यमुं ॥ नबाधेतन्यायसाम्यात्तद्भेदोभूदबाधितः ॥ ८२२ ॥

एवंचब्रह्मज्ञानेप्यबाध्यत्वात्मदभिमतोजीवेश्वरयोर्भेदोवज्रलेपायितोभूदित्याह ॥ चिदेकतामिति ॥ चितोरेकतामित्यर्थः । अयं विशिष्टयोर्भेदः। सा चितोरेकता । अमुं विशिष्टयोर्भेदं । न्यायसाम्यात् भिन्नविषयाख्यन्यायसाम्यात् । तत्तस्मात् । अंगीकृत्येदंदूषणांतरमुक्तं । वस्तुगत्याजीवेश्वराख्यविशिष्टयोर्भेदग्राहिणासाक्षिणादुःखस्याननुभवित्रीचित् नतद्विरुद्धस्वभावजीवचिदितितयोश्चितोरपिभेदस्यतेनैवेदानींगृहीतत्वेनचिदैक्यस्यापिप्रातिभासिकत्वापरिहारादित्यपिद्रष्टव्यं । इदंचपुनरितिग्रंथकारए ॥ ६९१ ॥

वसूचयिष्यति ॥ ८२२ ॥ किंचचितोरैक्यमपिविशिष्टयोरैक्यप्रतिपादकवाक्यबलादेवपरेणवक्तव्यं । तच्चोक्तविधयाप्रातिभासिकप्रमाणतयाअकिंचित्करमभूत् । अतस्त्वदभिमतचिदैक्यमेवप्रमाणाभावात्शशशृंगोपममभूदित्याह ॥ विशिष्टैक्येति ॥ तत्तस्मात् ॥ ८२३ ॥ नचवाच्यं वाक्यस्वारस्यलब्धार्थमादायअतत्वावेदकमपितदैक्यवाक्यंकथंचित्प्रामाण्यस्यरक्षणायार्थांतरेनेतव्यमिति । अतत्वावेदकभेदवाक्याप्रामाण्यांगीकारवत् गतिसामान्यादितिसूत्रन्यायेनवेदमात्रेप्येकवाक्यत्वरक्षणायातत्वावेदकेतवैक्यवाक्येप्यप्रामाण्यस्यैवांगीकर्तुमुचितत्वादित्याह ॥ अतत्वावेदकमिति ॥ अभ्युपगम्यभेदवाक्यवदित्युक्तं । वस्तुग

विशिष्टैक्यपरंवाक्यंप्रातिभासिकमानतां ॥ गतंचितोरेकतातन्मानाभावादसत्यभूत् ॥ ८२३ ॥
अतत्वावेदकंवाक्यमुपेक्ष्यंभेदवाक्यवत् ॥ कश्शुक्तिरूप्यतावाक्यमुद्दिधीर्षतिशुद्धधीः ॥ ८२४ ॥
नचेद्भेदप्रमाणंचदृष्टेर्थेव्यावहारिके ॥ जीवब्रह्मचितोरेवभेदंलक्षणयावदेत् ॥ ८२५ ॥ ॥

त्यामायिमतेपिव्यावहारिकप्रमाणतयांगीकृतभेदवाक्यसाम्यमुक्तविधयाप्रातिभासिकप्रमाणत्वेनांगीकृतैक्यवाक्यस्यनवक्तुमुचितं किंतुतादृशमेववाक्यंवाच्यं । तच्चनास्तीत्याशयेनाह ॥ कइति ॥ अनेन प्रातिभासिकार्थप्रतिपादकेभवद्वाक्येप्रामाण्यस्यैवाभावात्कस्यरक्षणार्थमर्थांतरानुसरणमित्यपिसूचितं ॥ ८२४ ॥ बाधकांतरंचाह ॥ नचेदिति ॥ नचे द्भेदवाक्येसर्वथाअप्रामाण्यं नवक्तव्यंचेत् । दृष्टे वाक्यस्वारस्यतोलब्धे अर्थेविशिष्टयोर्भेदे । अवश्यंचैतदेव । प्रातिभासिकार्थवाक्यस्यार्थांतरंवदताव्यावहारिकार्थकवाक्येसुतरामर्थांतरस्यैववक्तव्यत्वात् विशिष्टैक्यवाक्येचिदैक्यवद्विशिष्टभेदवाक्येभेदस्यैवन्यायप्राप्तत्वाच्च ॥ ८२५ ॥

अतः अत्तृत्वानत्तृत्वाख्यमुक्तिसहितचिद्भेदग्राहिभेदवाक्येनापिचिदैक्यस्यबाधितत्वात् । अतएवपुनःशब्दः ॥ ८२६ ॥ अंगी
कृत्यविशिष्टभेदबोधकवाक्याल्लक्षणयाचिद्भेदसिद्धिरित्युक्तं । वस्तुगत्याविशिष्टभेदकथनसमयएवविशेष्यभूतचितोरपिभेदःसि
ध्यतीत्याह ॥ वस्तुतइति ॥ संपाद्यतेसम्यक्ज्ञाप्यते । गत्यर्थानांज्ञानार्थत्वात् सर्वज्ञत्वाल्पज्ञत्वरूपविरुद्धविशेषणाभ्यांप्राक्वि
द्यमानएवचिद्भेदोबोध्यते । नत्वपूर्वःक्रियते गोत्वाश्वत्वयोरिवएकस्मिन्धर्मिणिएकदैवसंबंधायोग्ययोर्विरुद्धविशेषणयोःसंबंध
स्फुटनायैवप्राक् भेदस्यापेक्षितत्वात् । अतःकथंविरुद्धविशेषणसंबंधात्प्रागविद्यमानचिद्भेदकरणं । किंतुविरुद्धविशेषणसंबंधात्

अतःपुनश्चिदेकत्वंप्रातिभासिकतांगतं ॥ एवंचघट्टकुट्यांतेप्रभातोभून्नसंशयः ॥ ८२६ ॥
वस्तुतस्तुचितोरेवविशेषणबलात्तयोः ॥ भिदासंपाद्यतेतेनचोद्यस्यावसरोपिन ॥ ८२७ ॥
अन्यदौपाधिकंसर्वमुपाधौसतिजायते ॥ उपाध्यपगमेगच्छेद्भेदस्तुनतथाकिल ॥ ८२८ ॥

पूर्वमेवसहानवस्थितयोस्तयोःपृथक्पृथक्सहानवस्थानायकेवलचित्येवपार्थक्यंचवक्तव्यं । अन्यथाअन्योन्याश्रयप्रसंगः । नच
वाच्यमेकेनैवघटाद्युपाधिनायत्रभेदःसंपाद्यते तत्रोक्तविरोधाभावात्भेदःकर्तुंशक्यतइति । तत्राप्याकाशैकदेशसंबद्धेनघटेन स्वा
संबंधिप्रदेशांतरात्खलुभेदःसंपादनीयः तथाचोपाधिसंबंधवत्त्वासंबंधवत्त्वाख्यविरुद्धविशेषणद्वयादेवभेदज्ञापनेनास्यापिपक्षस्य
प्राचीनपक्षसमत्वादेकदेशत्वस्यापिभेदसापेक्षत्वाच्चेतिभावः । तेनकारणेन । चोद्यस्य विशिष्टभेदप्रतिपादकवाक्यं चिदैक्यस्यन
बाधकमितिचोद्यस्य ॥ ८२७ ॥ ननुजपाकुसुमाद्युपाधिनास्फटिकेरक्तिमोत्पत्तिदर्शनात्विरुद्धधर्माख्योपाधिनाभेदोत्पत्तिःकुतोने

त्यतआह ॥ अन्यदिति ॥ गच्छेत्नश्येत् ॥ ८२८ ॥ सः भेदोपाधिः । कालयेत्ज्ञापयेत् । घटोपाधेःघटाभ्रांतः घटोदरस्था काशांतः भिदाकिंस्यादितिसंबंधः । घटोपाधेःस्वासंबंधिप्रदेशांतरादेवभेदोज्ञाप्यते । नतुघटोदरस्थाकाशांशानामेवमिथोभेदःप्रद र्श्यते ॥८२९॥ उपाधेःसंबंधासंबंधौचप्रागेवस्थितभेदसापेक्षाविति कथंतस्यकारकावित्याह ॥अतइति॥ अतःघटोपाधिनाघटाभ्र एवभेदस्याज्ञापनात् । यः भेदकोपाधिः । तौ भेदविशेषौ । सःउपाधिः ॥ ८३० ॥ नन्वेकस्मिन्वृक्षएवकपिसंयोगतदभाववत्ए

स्वसंबंध्येकदेशस्यस्वासंबंधिप्रदेशतः ॥ भेदंसकालयेत्किंस्याद्धटाभ्रांतर्घटाद्भिदा ॥ ८२९ ॥
अतस्स्वतोविशेषंवाभेदंवाभेद्यवस्तुनि ॥ योपेक्षतेस्वयोगायस्वयमेवकथंपुनः ॥ कुर्यादुपाधि
स्तौपूर्वोनह्विसस्वपितुःपिता ॥ ८३० ॥ वृक्षाग्रेकपिसंयोगोवृक्षमूलेपरंनसः ॥ भावाभाववि
रोधस्यनचेच्छांतिर्भविष्यति ॥ तत्संयोगस्वभावाच्चपरिहारोभवेन्नते ॥ ८३१ ॥ एवंचभेद
मात्रस्योपाधेर्जन्मनयुक्तिमत् ॥ तद्भिद्यमानभेदस्यज्ञापकोसौनकारकः ॥८३२॥ अतोविशिष्ट
भेदश्चस्वतश्चिद्भेदमाक्षिपेत् ॥ द्विर्बद्धभेदाद्बाधस्तच्चिदैक्यस्यैवघातकः ॥ ८३३ ॥ ॥

कस्मिन्नेवगगनेघटसंबंधावपिस्यातामित्यतआह ॥ वृक्षेति ॥ तत्राप्यंशभेदादेवसंयोगतदभावौ नत्वेकस्मिन्नेवेतिभावः । तत्त स्मात् ॥ ८३१ ॥ भेदमात्रस्य केवलभेदमात्रस्य । तत्तस्मात्असौ भेदोपाधिः ॥ ८३२ ॥ स्वतःस्वस्वभावतः । द्विर्बद्धभेदात् विशिष्टस्वभावगतचिद्भेदात् । पूर्वोक्तरीत्यालक्षणबलादागतचिद्भेदाच्चेत्यर्थः । तत्तस्मात् प्रकारद्वयेनप्रमाणसिद्धत्वात् ॥८३३॥

लोकरीत्यापरमपहसति ॥ तदिति ॥ तत्तस्मात् । तेयामिकाः ॥ ८३४ ॥ अधुनामोक्षेऐक्यप्रतिपादकतयापराभिमतस्य कर्माणिविज्ञानमयश्चआत्मापरेव्ययेसर्वएकीभवंतीतिवाक्यस्यार्थमाह ॥ परेव्ययइति ॥ ८३५ ॥ आधारमनुशास्ति सप्तमीबलादाधारमनुशास्ति । च्विः एकीभवंतीत्यत्रविद्यमानश्चिवप्रत्ययः । भूततद्भाववादिनं भूतस्य प्रागेवविद्यमानस्य तद्भावस्य ब्रह्मभावस्य । वादिनं । अभूततद्भावार्थकच्विप्रत्ययः प्रागविद्यमानस्य मुक्तानांहरेश्चवैकुंठाख्यस्थानैक्यस्यप्रतिपादनएवघटते । न

तद्यामिकानांसदसिकिंस्यात्तस्करकैतवैः ॥ उक्तिव्यत्यासेपिकुर्युश्चौर्यस्यस्थैर्यमेवते ॥ ८३४ ॥
परेऽव्ययेसर्वएकीभवंतीतिचयाश्रुतिः ॥ साचगोष्ठेगावएकीभवंतीत्यादिवाक्यवत् ॥ मुक्तानामेकतामाहगवामिवपरस्परं ॥ ८३५ ॥ आधारंगोष्ठवद्ब्रह्मपरंसर्वोत्तमत्वतः ॥ पूर्णत्वतोवा
महिमव्ययस्याभावतोऽव्ययं ॥ ८३६ ॥ अनुशास्तिनचेच्चिवस्त्वांहिनस्तीतिमतिर्मम ॥ अभूततद्भाववादीभूततद्भाववादिनं ॥ ८३७ ॥ कालानांकर्मणांचैवजडानांकथमेकता ॥ परेणैकी
भवंतीतिप्रयोगश्चभवेत्तदा ॥ सप्तमीयंभवद्ग्रंथस्याष्टमींकुरुतेसदा ॥ ८३८ ॥ ॥

तुसंसारदशायामपिविद्यमानतयांगीकृतजीवब्रह्मैक्यस्यप्रतिपादनइतिभावः ॥ ८३६ ॥ ८३७ ॥ परपक्षेदूषणांतरमाह ॥ कलानामिति ॥ गताःकलाःपंचदशप्रतिष्ठाइत्यत्रोक्तकलानां । कर्माणीत्यत्रोक्तकर्मणां ऐक्यासंभवसूचनायजडानामितिग्रंथकृतोवचनं । तदा ब्रह्मणैवैक्यस्यश्रुत्यभिप्रेतत्वे । परेणेतितृतीयाप्रयोगएवस्यात् । नतुसप्तमीत्यर्थः । शब्दार्थाकुशलंपरमपहसति

॥ सप्तमीति ॥ अष्टमीं अष्टमीतिथिं । भगवद्ग्रंथस्यापाठ्यत्वप्रयोजकानध्ययनांकुरुतइतिभावः ॥ ८३८ ॥ वाचारंभणश्रुत्यासत्यत्वसाधनप्रकारमाह ॥वक्तीति॥ मृत्तिकाश्रुतिः यथासौम्यैकेनमृत्पिंडेनसर्वंमृण्मयंविज्ञातंस्यात् वाचारंभणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिश्रुतिरित्यर्थः । कारणमात्रस्य उपलक्षणयाउपादानकारणसमुदायस्य सकलकारणसमुदायस्यवा सत्यतांवक्तीतियोजना । नत्वकारणतयापरेणाभिमतब्रह्मचिन्मात्रस्येतिभावः । कार्यमात्रस्यनखनिकृंतनाख्यकार्ष्णायसस्य कार्यरूपत्वेन उपलक्षणया सकलकार्यस्य नतुसर्वथाअकार्यस्यब्रह्मचिन्मात्रस्येतिभावः । सद्भावं सत्यत्वं । कार्ष्णायसश्रुतिः यथासौम्यैकेननखनि

वक्तिकारणमात्रस्यसत्यतांमृत्तिकाश्रुतिः ॥ कार्यमात्रस्यसद्भावंवक्तिकार्ष्णायसश्रुतिः
॥ ८३९ ॥ उपादानस्यसत्यत्वेकार्यसत्त्वमभूद्बलात् ॥ उपादेयस्यसत्यत्वेतत्सत्त्वंचभवे
द्बलात् ॥ अतोद्विर्बद्धसत्यत्वंकोवामोचयितुंक्षमः ॥ ८४० ॥ ॥ ॥

कृंतनेनसर्वंकार्ष्णायसंज्ञातंस्यात्। वाचारंभणंविकारोनामधेयंकार्ष्णायसमित्येवसत्यमितिश्रुतिरित्यर्थः॥८३९॥ वाक्यमर्यादयाआगतकार्यकारणसत्यत्वमुक्त्वाऽर्थादागततत्सत्यत्वमप्याह ॥उपादानस्येति॥ तत्सत्त्वं उपादानसत्त्वं। उपादानोपादेययोरभिन्नत्वेनैकसत्यत्वेअपरसत्यत्वस्याप्यावश्यकत्वादितिभावः॥ द्विर्बद्धसत्यत्वं वाक्या दर्थाच्चागतसत्यत्वं । इदंचइतिशब्दमुपेक्ष्यपरीत्यैवार्थकथनेपिवाक्यद्वयस्यस्वारसिकार्थमर्यादयाकार्यकारणात्मकप्रपंचसत्यतैवसिद्ध्येत् । नतुब्रह्मसत्यत्वंजगन्मिथ्यात्वंचेतिज्ञापना

योदितं । वस्तुतस्तुविष्णुतत्वनिर्णयादावुक्तएवार्थोद्रष्टव्यः ॥८४०॥ श्रौतपदशक्त्यैवलभ्यंमूलग्रंथानुकूलमर्थांतरंचाह ॥ वाचारं भणेति ॥ तस्मात् परोदीरितार्थस्यश्रौतपदलभ्यत्वात् । अस्यजगतः सदैकविधतां । विकारः षट्शरावादिविकारः मृत्तिका वाचारं भणं वाचा वागिंद्रियेण आरंभणंयस्यतत् वाचारंभणं नामधेयं घटमृत्तिकादिनामधेयंच इत्येव इदानींयथावर्तते अनेनप्रकारेणैवस र्वदातिष्ठति । कार्यकारणात्मकंनामरूपात्मकमिदंजगत् अनाद्यंतकालेष्वप्येकप्रकारमेवेत्यर्थः । अतएव शुक्लः कंबलःशुक्लापटी शुक्लं वस्त्रं तानीमानिशुक्लानि तदिदंशुक्लमितिवत्विकारःसत्यः मृत्तिकेत्येवसत्या नामधेयंसत्यं तानीमानिसत्यानि तदिदंसत्यमिति श्रु

वाचारंभणवाक्तस्माद्यथापूर्वमितिश्रुतेः ॥ नामरूपात्मकस्यास्य वक्त्येकविधतांसदा ॥
उक्तंविकारसत्यत्वंत्वदर्थंबाधतेयतः ॥ ८४१ ॥ अक्लीबेनसहोक्तौचक्लीबोसौशिष्यते
किल ॥ शिष्यमाणस्यतस्यैकवद्भावोप्युचितःकिल ॥ ८४२ ॥ ॥

तेःएकप्रकारवद्विषयजगत्सत्यत्वरूपार्थलाभात् अनादिकालमारभ्ययस्ययस्यघटादेर्यद्रूपं यच्चनाम तस्यतस्यपदार्थस्य सर्वदातद्रूप त्वं तन्नामधेयत्वंचवाचारंभणवाक्वक्तीतिसंबंधः। इदंचोपलक्षणं। कार्यकारणात्मकस्य नामरूपात्मकस्यास्यैवप्रपंचस्य पृथक्पृथक् बहूनांवचनांततयेति त्रिवाचाशपथपूर्वकंसत्यत्वंचवक्तीत्यपिद्रष्टव्यं । अतएव नपुंसकैकवचनप्रयोगः। यतइत्यस्यार्थंस्वयमेवाह ॥ उक्तमिति ॥ विकारसत्यत्वं नखनिकृंतनाख्यविकारसत्यत्वं। त्वदर्थंविकारोनामधेयमित्यत्राभिप्रेतंकार्यमिथ्यात्वं ॥ ८४१ ॥ ननु कथमयंश्रुतेरर्थोलभ्यतइत्याशंक्यनपुंसकेनैकवचनमन्यतरस्यामितिसूत्रंकिलपदेनसूचयन् अक्लीबेनसहोक्तौक्लीबंशिष्यते एकत्व

मस्यवास्यादितिवृत्तिंदर्शयति ॥ अक्लीबेनेति ॥ अक्लीबेन स्त्रीलिंगपुंल्लिंगांतपदेन सहोक्तौ नपुंसकलिंगांतपदस्यसहकथने स्त्रीलिंगपुंल्लिंगनपुंसकलिंगांतपदानामेकस्मिन्वाक्येसहपाठइत्यर्थः । असौ त्रिलिंगांतपदार्थविषयकःशब्दः क्लीबः नपुंसकलिंगांतःशिष्यते प्राक्त्रिलिंगांतविशेषणपदेनोदितानांतेषांपुनस्तेनैवपदेनपरामर्शेतत्पदंबहुवचनांतनपुंसकलिंगंभवतिएकवचनांतंवास्यादित्यर्थः । एकवद्भावः एकवचनांतत्वं । अतस्त्रिलिंगांतपदोक्तानांमृत्तिकादीनांसत्यमित्येकवचनांतनपुंसकलिंगपदेनसत्यत्वविधानंघटतइतिभावः ॥ ८४२ ॥ ननुकिमर्थःनामादीनामव्यत्यासःश्रुत्याप्रतिपाद्यतइत्यतः प्रयोजनद्वयमाह ॥ मृदिति ॥ तं अन्व

मृज्ज्ञानेसर्वमृत्कार्यज्ञानंसर्वत्रसर्वदा ॥ नामाद्यव्यत्ययेसत्येवस्यादित्याहतंचवाक् ॥ ८४३ ॥
व्यत्यासाभावतस्वोक्तसत्यत्वस्थापनायच ॥ महावाक्योक्ततत्वेस्मिन्व्यावहारिकताचन ॥ ८४४ ॥

त्ययं । अस्मिन्कल्पे मृत्तिकावाचकमृत्पदस्यकल्पांतरेपदार्थांतरवाचकत्वेमृत्तिकायाः पदांतरवाच्यत्वेच एतत्कल्पीयमृत्पिंडः कल्पांतरीयमृत्पिंडः एतत्कल्पीयमृण्मयं कल्पांतरीयमृण्मयंच भिन्नंभिन्नंस्यात् । इदानींतनमृण्मयानांकल्पांतरीयमृण्मयानांचाकारश्चभिन्नभिन्नःस्यात् । तथाचेदानींज्ञातेनैकमृत्पिंडेनैतद्विजातीयकल्पांतरस्थमृण्मयज्ञानायोगात्सर्वमृण्मयज्ञानंकथंस्यात् । इदानींज्ञातघटाकारात्कल्पांतरस्थघटाकारस्यापिव्यत्यासे श्रुत्युक्तंसादृश्यादेकविज्ञानेनसर्वविज्ञानंचकथंस्यात् । व्याप्तिज्ञानसंकेतग्रहणादिकंचकथंस्यात् । अतःश्रुतिर्नाम्नांरूपाणांचाव्यत्यासमाहेतिभावः ॥ ८४३ ॥ अत्रोक्तसत्यपदस्यव्यावहारिकसत्यत्व

युक्ति- परंतांनिवारयति ॥ महावाक्येति ॥ ८४४ ॥ इत्येवेतिपदंदेहलीदीपन्यायेनपूर्वत्रोत्तरत्रचसंबध्यते । एवंचइत्येवसत्यंनत्वन्य मलिका
॥ ११७ ॥ दित्यर्थलाभेनाकारणरूपस्याकार्यरूपस्यचशुक्तिरूप्यादेःपरोदीरितसत्यतानिवारितेत्याह ॥एवकारइति॥ तेनकारणेन॥८४५॥
तर्हिब्रह्मणिजगतिचसत्ताद्वैविध्यंस्यादित्येतत्प्रागर्थाद्दूषितमपिपुनःश्रौतमर्यादयाचदूषयति ॥ यदिति ॥ यद्यस्मात् ॥ नामरूप फलसौ०
योश्चान्यथात्वं वैपरीत्यं । न इत्येवेतिश्रुत्याप्रतिपादनात्कदापिनघटते तस्मात् सः नामरूपात्मकप्रपंचः । कदा अन्यथा मि

एवकारोकारणस्याकार्यस्यचनसत्यता ॥ इत्याहतेनसत्तायास्त्रैविध्यंप्रत्यषिध्यत ॥८४५॥ यन्ना
मरूपयोश्चान्यथात्वंनसकदान्यथा ॥ कार्यकारणरूपंचनामरूपात्मकंजगत् ॥ द्वेधानिर्दिश्य
तत्सत्त्वमपिवक्तिसयुक्तिकं ॥८४६॥ यदामृदपिविज्ञातासादृश्याज्ज्ञापयेज्जगत् ॥ तदासमर्थ
स्सामर्थ्याद्विज्ञातःपुरुषोत्तमः ॥ कथंनदद्यात्सार्वज्ञमितिकैमुत्यतःप्रभोः ॥ ८४७ ॥ सार्वज्ञदा
नशक्तिंसाबोधयंतीमुहुर्मुहुः ॥ निदर्शनत्रयमिदंनृणांप्रादर्शयच्छ्रुतिः ॥ ८४८ ॥ ॥

थ्याभूतः । नकदापीत्यर्थः । जगतोपिब्रह्मवत्कदापिव्यत्यासाभावात्पारमार्थिकत्वमेववक्तव्यं । अतःसत्ताद्वैविध्यमपिनश्रुतेर
भिप्रेतमितिभावः । नन्वेवंतर्हिजगदित्येवसत्यमित्येतावतैवालं किमर्थंजगतोविभागकथनमित्यतआह ॥ कार्येति ॥ सयुक्तिक
मितिवदता नामाभिधेयत्वाद्रूपवत्त्वात्कारणरूपत्वात्कार्यरूपत्वाच्चेतियुक्तिचतुष्टयसूचनार्थंविभागकथनमितिद्योतितं ॥ ८४६ ॥
इदानींयथासोम्येतिवाक्यत्रयस्य येनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातंभवतीतिमूलोपक्रमवाक्येनसंगतिमाह ॥ यदेति ॥ ॥ ६९५ ॥

सा यथासोम्येत्यादिश्रुतिः । निदर्शनत्रयमितिवदताअतिस्पष्टीकरणायश्रुतेःप्रवृत्तिरितिसूचितं॥ ८४७ ॥ ८४८ ॥ नोचेत् सर्व
विज्ञानेनविज्ञातुःसार्वज्ञाख्यफलसिद्धिप्रतिपादिकानोचेत्। परंदूषयेदित्यर्थः । स्वकीयकृतेःपरदूषणेकथंशक्तिरित्यतआह ॥ हय
ग्रीवेति ॥ ८४९ ॥ इदानीमेकमेवाद्वितीयमितिश्रुत्या भावाभावात्मकद्वितीयमात्रनिषेधःक्रियतेवा उतभावत्वेनसकलभावाना
मेवनिषेधःक्रियतेवा अथवा सकलभावानांस्वरूपस्यापिनिषेधःक्रियतेवा ब्रह्मव्यतिरिक्तसकलभावस्वरूपाणामेवनिषेधःक्रियतेवे
त्यादिविकल्पंमनसिनिधायक्रमेणदूषयति ॥श्रुत्येत्यादिना॥ द्वितीयमात्रस्य भावाभावात्मकद्वितीयमात्रस्य अत्यंताभावोपिनेति

इत्येववाच्यश्श्रुत्यर्थोनोचेत्कुप्येदियंकृतिः ॥ हयग्रीवप्रसादोत्थसामर्थ्यकृतकौतुका ॥ ८४९ ॥
श्रुत्याद्वितीयमात्रस्यनिषेधेसतितेमते ॥ अत्यंताभावोपिनेतिद्वितीयंपुनरापतेत् ॥ ८५० ॥
भावस्यैवनिषेधेसत्यभावाभावसंभवात् ॥ तदाकारेणसकलंद्वितीयंपुनरापतेत् ॥ ८५१ ॥
भावस्वरूपमात्रस्यासत्त्वात्तस्यापिबाधने ॥ ब्राह्मयाश्रितोपिबाधेनद्वितीयंपुनरापतेत् ॥८५२॥

कृत्वाद्वितीयंभावरूपद्वितीयंपुनरापतेदितिसंबंधः । अभावाभावस्यभावात्मकत्वात् अत्यंताभावनिषेधेभावात्मकंद्वितीयंबलात्सिद्ध्ये
दितिभावः । उपलक्षणंचैतत् । भावनिषेधेचतदभावोप्युर्वरितःस्यात् । भूतलेघटाभावनिषेधकालेघटदर्शनेन घटनिषेधेचघटाभा
वदर्शनेनोभयनिषेधस्त्वसंभावितएवेत्यपिद्रष्टव्यं ॥८५०॥ द्वितीयंदूषयति॥ भावस्येति ॥ तदाकारेण अभावाभावाकारेण भाव
निषेधेपिअभावाभावरूपेणतस्यैवावस्थानसंभवादितिभावः ॥ ८५१ ॥ तृतीयंदूषयति ॥ भावस्वरूपेति ॥ भावस्वरूपमात्रस्य

येनकेनाप्याकारेणभावत्वाकारेणविशिष्टस्यसकलभावस्वरूपस्येत्यर्थः। असत्त्वान्मिथ्यात्वात् तस्यभावस्वरूपस्य ब्राह्म्याःपरब्रह्मसंबंधिन्याः। भावमात्रनिषेधेब्रह्मचितोपिनिषेधप्रसंगेनब्रह्मैवनस्यात् । तथाचब्रह्मप्रमाख्यबाधकाभावेनद्वितीयंजगत्पुनरापतेदितिभावः॥ ८५२ ॥ चतुर्थंदूषयति ॥ ब्रह्मरूपस्येति ॥ तद्गुणांबुधेः ब्रह्मणःसार्वज्ञादिगुणांबुधेःअबाधसंभवेन । आवयोर्मतेगुणगुणिनोरभेदेनतस्यापिब्रह्मरूपभावतयाबाधाभावसंभवेनेत्यर्थः । एतादृशगुणसमुदायस्यापिमायावादिनानिषेध्यद्वितीयकोटौप्रक्षेपात्त्वद्वितीयमित्युक्तं ॥ ८५३ ॥ ननुब्रह्मगुणयोरभेदेअभिन्नयोर्घटकरीरयोरेकशेषत्वदर्शनेन प्रकृते एकशेषत्वप्राप्त्यैप्रा

ब्रह्मरूपस्यभावस्यानिषेधेतद्गुणांबुधेः ॥ अबाधसंभवेनत्वद्वितीयंपुनरापतेत् ॥८५३॥
एकशेषेणतद्बाधेपुनर्ज्ञाननिषेधनात् ॥ ब्रह्मणोजडतापत्त्याद्वितीयंपुनरापतेत् ॥ ८५४ ॥
श्रुत्यबाधेवेदरूपंद्वितीयंपुनरापतेत् ॥ श्रुतेर्बाधेत्वबाध्यंतद्वितीयंपुनरापतेत् ॥ ८५५ ॥

धान्यात्तद्धर्मिणएवावशेषेपरिशेषगुणानामेवबाधइत्यतआह ॥ एकशेषेणेति ॥ जडप्रमायाःबाधकत्वासंभवात्द्वितीयंपुनरापतेदितिभावः। उपलक्षणंचैतत्। करीरस्यघटगुणत्वाभावेनघटतन्मात्रत्वादस्त्वेकशेषः । गुणगुणिनोस्तुभेदाभेदवादिनस्तवमतेभेदसद्भावात् ममतेविशेषसद्भावान्नैकशेषइत्यपिद्रष्टव्यं ॥ ८५४॥ पुनरपिप्रकारद्वयेनद्वितीयापत्तिमुपपादयति ॥ श्रुतीति ॥ अबाध्यं मिथ्याभूतवेदस्यबाष्पारोपितधूमवत्प्रमाजनकत्वासंभवेनबाधकप्रमाभावादबाध्यं। तत्जगत् ॥ ८५५ ॥ किंचद्विती

यशब्दस्यसर्वनामशब्दत्वेनजगतोद्वितीयंब्रह्मापिभवति । एवंचसकलद्वितीयस्यापिनिषेधेब्रह्मणोपिनिषेधःस्यात् । प्रामाणिकत्वे नब्रह्मणोनिषेधायोगात्ततःसंकोचे ततएवप्रपंचादपिसंकोचस्स्यात् । श्रुतेश्चाप्रामाणिकशून्यनिर्गुणादिद्वितीयनिषेधपरत्वंस्यादि त्याह ॥ विश्वान्यदिति ॥ तच्छेषे ब्रह्मणःशेषे तन्यायात् अन्यस्य जगतोपिशेषेसति द्वितीयंपुनरापतेदितिसंबंधः । तन्याया दितिवदता सदेवेदमग्रआसीदितिप्राग्ब्रह्मणःप्रस्तुतत्वात्तत्संकोचश्चेत्तत्रैव इदमग्रे अस्याग्रइति इदंपदेनजगतः अग्रपदेनकाल स्यैवप्रस्तुतत्वात्कालादिप्रपंचादपिसंकोचःस्यादितिसूचितं ॥ ८५६ ॥ द्वितीयपक्षेदूषणांतरंवदन्पुनर्द्वितीयापत्तिमेवोपपादयति

विश्वान्यद्ब्रह्मनाशास्यंद्वितीयस्यैवदूषणे ॥ तच्छेषेन्यस्यतन्यायाद्द्वितीयंपुनरापतेत् ॥ ८५६ ॥
अभावस्ययथारक्षावाक्यप्रामाण्यगुप्तये ॥ तथाभावस्यरक्षायांद्वितीयंपुनरापतेत् ॥ ८५७ ॥
अन्योन्याभावरूपत्वाद्भावाद्भिन्नंभवन्मते ॥ भेदपंचकरूपंचद्वितीयंपुनरापतेत् ॥८५८॥ दश
प्रमतिनामामेगुरुस्त्रिदशतोचितः ॥ योदीदिशद्दोषमेकंदूष्येषुदशसुप्रभुः ॥ ८५९ ॥ ॥

॥ अभावस्येति ॥ ८५७ ॥ दूषणांतरमप्याह ॥ अन्योन्येति ॥ अस्मन्मतेअन्योन्याभावेघटादिभावस्वरूपत्वस्यापिविद्यमा नत्वाद्भवन्मतेभावभिन्नमित्युक्तं ॥ ८५८ ॥ दशसुपक्षेषुएकस्यैवदूषणस्येदानींकौशलमाचार्यस्यैव नममेत्याशयेनतंस्तुवन् अन यैवशक्त्यातस्यदेवत्वंचोपपादयति ॥ दशेति ॥ त्रिदशतोचितः त्रिदशपदवाच्यदेवत्वोचितः । एकंदशसुप्रयुंजन्त्रीन्दोषान् दशसुसुतरांप्रयुंज्यात् । अतस्त्रयोदोषादशसुयस्येतिव्युत्पत्त्या त्रिदशत्वंतस्यकैमुत्यसिद्धमित्युत्प्रेक्षितं ॥ ८५९ ॥ किंचनविद्यतेद्वि

तीयंयस्येतित्वदभिमतसमासेब्रह्मप्रतियोगिकद्वितीयनिषेधरूपेत्वदभिमतार्थेचानादिकालमारभ्यब्रह्मण्येवविद्यमानत्वांगीकारात्त
वमतेब्रह्मणोद्वितीयमज्ञानमेवेतितस्यैवनिषेधःस्यात्। नत्वज्ञानकार्यतयातृतीयस्यजगतः। एवंचतवब्रह्माश्रिताज्ञानस्यैवखंडनात्त
दभावेजगत्यज्ञानकार्यत्वरूपमिथ्यात्वखंडनाच्चश्रुतिस्तवैवद्वेधाप्यनिष्टदायिन्यभूत्। ममतुमदनभिमतप्रमेयद्वयस्यापिनिवारणा
त्द्वेधाप्यनुकूलैवेत्याह ॥ किंचेति ॥ द्वितीयाज्ञानस्य द्वितीयंयदज्ञानंतस्येत्यर्थः। तेनकारणेन। गौः गौरिवगौः। वेदरूपागौरि
त्यर्थः। दोग्ध्रीनेत्युपलक्षणं। उक्तविधयाममेष्टदोग्ध्री तवानिष्टदोग्ध्रीचेत्यपिद्रष्टव्यं ॥ ८६० ॥ वेदस्यगोत्वेनवर्णनात्तेनैवनिद

किंचद्वितीयाज्ञानस्यकार्यत्वाद्ब्रह्मणोजगत् ॥ तृतीयंतेनगौर्दोग्ध्रीविद्यतेतेनकाचन
॥ ८६० ॥ यदखंडार्थवादीत्वंतृणखंडंचनादिशः ॥ तैलंधूलिषुनिक्षिप्तंपिण्याकंभ
स्मसात्कृतं ॥ निषेधोन निषेध्यंन केनवागौर्जिजीविषेत् ॥ ८६१ ॥ ॥

र्शनेनपरसिद्धांतस्यहेयतां स्वसिद्धांतस्योपादेयतांचोपपादयति ॥ यदिति ॥ यद्यस्मात् तृणखंडं तृणंचखंडंचतृणखंडं। तृणंय
थाकश्चिन्नदिशतितथाअखंडंब्रह्म स्वप्रकाशतयासिद्धंयद्वाक्यस्यार्थतयानादिशः। तृणस्यखंडंयथानदिशति तथाब्रह्मणोविशेष
णतयाखंडभूतमैक्यंचाखंडवादित्वाद्वाक्यस्यार्थतयानादिशइतिभावः। तैलं गवांपुष्ट्यर्थेदीयमानतैलमिववाक्यप्रामाण्यरक्षणाय
विचाराख्यमथनेकृतेसतिपर्यवसितोर्थनिषेधः धूलिषुनिक्षिप्तं धूलिषुनिक्षिप्ततैलमिवसर्वमिथ्यात्ववादेननाशितइतिभावः। पिण्या ॥ ६९७ ॥
कं तैलंगृहीत्वाबहिष्क्रियमाणंपिण्याकमिव वाक्येननिरस्यमानंजगदितिभावः। तदेवदर्शयति ॥ निषेधोननिषेध्यंनेति ॥

गौः गोसदृशीवेदवाक् ॥ ८६१ ॥ ताः वेदवागाख्यगावः क्रंदंत्यः येअभितोवेदादिद्रोहकारिणःपुरुषस्यापदेस्थानेअंधेतमसिपा
तयितुंयोग्याः। येचरामाख्यपरदेवतावंतोनभवंतिअन्नेष्वेवजागृधुःप्रेत्यस्तेनेभ्यःप्रनःअस्मान्माब्रूहीतिमानस्तेनेभ्यइत्यादिश्रुत्याह
यग्रीवंप्रत्याक्रोशंकुर्वत्यः। वाजिनः हयग्रीवस्य। यथाचोरैरुपहृतागावःस्वग्राममलभमानाःग्रामंप्रतिगच्छंतंमार्गज्ञमश्वमनुसृत्य
गच्छंति तथास्वार्थदर्शकंहयग्रीवमनुसृत्यैवगच्छंत्यइत्यर्थः। आहारप्रदःकइत्यतआह ॥ वाजिकिंकरेति ॥ यथाअश्वरक्षकः
पुरुषःअश्वग्रासादेकदेशंपदेपदेक्रंदंतीनांगवामपिकृपयादिशति तथाहयग्रीवकिंकरमध्वाख्ययोगींद्रेणवेदाअपिपदेपदेनिरवधिक
सर्वज्ञस्यहयग्रीवस्यैवानुभवयोग्यज्ञानानंदादिदिव्यगुणानांएकदेशएव यतोवाचोनिवर्ततइतिश्रुत्यादत्तोग्रासोयासांताः। मध्वमु

एवंनिराशास्तास्सर्वाःक्रंदंत्योवाजिनोनुगाः ॥ वाजिकिंकरमध्वाख्ययोगींद्रेणपदेपदे ॥ ८६२ ॥
दत्तग्रासास्सतांबृंदारण्यमेत्यकृतोत्सवाः ॥ गोविंदमेवपरितः प्रापुरित्यतिमंगलं ॥ ८६३ ॥ ॥

निनाहयग्रीवगुणस्तोमप्रतिपादनेनप्रमाणीकृताइतिभावः। बृंदारण्यं बृंदाख्यारण्यं। अरण्यएवसाधुभिरुपनिषदांपठ्यमानत्वा
द्वृंदसहितारण्यंवा। गोयोग्यबृंदावनमितिध्वनिः। प्रापुः बृंदावनेगावोगोविंदमिवइमाअपिमूर्तिमत्यःगोविंदमेवपरितस्तुष्टुवुरि
तिभावः। ननुकथंतर्हिंअथयोन्यांदेवतामुपास्तेअन्योसावन्योहमस्मीतिनसवेदयथापशुरेवमितिभेदोपासकानांनिंदेतिचेत् न।
अभेदस्यानुपास्यत्वमंगीकुर्वतात्वयापिउपासनाकालेभेदोपास्तेरेवांगीकृतत्वेनतवैवनिंदाप्रसंगात्। तथाचायंश्रुत्यर्थःस्यात्। यःअ
न्यां वस्तुतएवभिन्नांदेवतां अन्योसावन्योहमस्मीतिउपास्ते तयाअविद्यमानंवक्ति नतुवेद वेदनविषयंनकरोति। सः यथापशु

रेवमितिश्रुत्यर्थस्यपदसंपदैवलाभात् । अथवाब्रह्मनामकविष्णूपास्तिःप्रागुक्ता । अथयःअन्यां विष्णोरन्यां शिवादिदेवतांउपा
स्तेद्वारतयाअन्योसौस्वामी अन्योहंदासोस्मीति । सनवेद यथापशु रेवमिति । अन्योसौवैष्णवकुलोत्पन्नः अन्योहंशैवकुलोत्प
न्नइतिवा । अन्योसौविष्णुः शैवानामसंबंधी अन्योहं शैवोविष्णवसंबंधीतिवामत्वाउपास्ते सःनवेद यथापशु रेवमिति शैवशा
क्तादिनिंदापरंवाक्यंस्यात् । अन्यदेवतापदस्यैतदुपनिषत्प्रतिपाद्यदेवतातोन्यदेवतायाएवउक्तौस्वारस्यात् । नचवाच्यं तदिदम
पिएतर्हियएवंवेदाहंब्रह्मास्मीतिइदंसर्वंभवतीतिवाक्येऐक्यवेदनस्यैवोक्तिरिति । ब्रह्मवाइदमग्रआसीत्तदात्मानमेवावेदहंब्रह्मास्मी
ति तस्मात्तत्सर्वमभवदितिततोपिपूर्ववाक्येप्रस्तुतब्रह्मैवतदिदमितिपरामृश्यएवमितिप्रागुक्तब्रह्मवेदनप्रकारेणैववेदनोक्तेरहमस्मी
तिपदयोरपि हातुंयोग्यंहं तन्नभवतीत्यहं सदाअस्तितयामीयमानमस्मीतिचव्युत्पत्त्याअंतर्यामितयासर्वाहेयस्य आसीदित्युक्त्या
अतीतकालसत्तामात्रप्रतीतिनिरासायसदाअस्तितयाप्रमीयमाणस्यचब्रह्मणएवग्राह्यत्वेनत्वदभिलषितजीवैक्यस्यानवकाशात् । अ
वश्यंचैतदेवं अहमस्मीतिपदाज्जीवग्रहणेप्रागुक्तप्रकारार्थकैवंपदस्यव्याकोपप्रसंगात् । एषतआत्मांतर्यामी यआत्मनितिष्ठन्आ
त्मनोंतरो यमात्मानंवेदेतिचाभ्यासेनसतात्पर्यसयुक्तिकनिरवकाशोत्तरवाक्यव्याकोपात् । जीवब्रह्मणोरभेदाभिप्राये ब्रह्मवदह
मित्युल्लिख्यमानजीवानामपिसत्त्वावश्यंभावेन ब्रह्मवाइदमग्रआसीदितिब्रह्मस्थितिमात्रप्रतिपादकपूर्ववाक्यकोपाच्च । त्वयापिजी
वत्वयोग्यब्रह्मचिन्मात्रस्यैवतदासत्त्वांगीकारेणजीवभावापन्नचैतन्यानांसृष्टेःपूर्वमभावस्यापरिहारात् । तेषामपितद्रूपेणतदैवस
त्त्वेअहंब्रह्मास्मीतितदुक्तेरेवसकलजीवोक्तित्वात्पुनःएतर्हियएवंवेदेत्यादिवाक्यानांवैयर्थ्यप्रसंगा देतर्हीत्युक्तेदानींतनजीवाभेद

स्यत्वद्रीत्यैवायोगाच्च । अहमस्मीतिपदयोरप्रसिद्धार्थकथनस्योपनिषदोरहस्यविद्यात्वघटनाय ब्रह्मवाक्येअपूर्वार्थतयासिद्धानुवादकत्वदोषपरिहाराय प्रागुक्तभेदवाक्यविरोधपरिहारायोत्तमपुरुषाहंपदबलादेवस्वत्वलाभेनात्मानमेवेत्यस्यवैयर्थ्यपरिहारायचावश्यकत्वात् । एवंच योन्यां सकलजीवेभ्योभिन्नांपरदेवतां अन्योसौविष्णुर्ब्रह्मशब्दार्थः अहमस्मिशब्दार्थश्चान्योजीवइतिमत्वा अहंब्रह्मास्मीतिप्रागुक्तवाक्येजीवइतिमत्वाअहंब्रह्मास्मीतिप्रागुक्तवाक्येजीवाभिन्नतयाउपास्ते नसवेदयथापशुरितिचपूर्वोत्तरवाक्यानुगुणोवाक्यार्थःस्यात् । अतःपूर्वोत्तरवाक्यार्थमनालोच्यजीवाभेदमंगीकुर्वतोगर्वनिवारणायेदंवाक्यंप्रवृत्तं । एवंतर्हिंसइदं सर्वंभवतीतिसर्वभावापत्त्याख्यफलोक्तिःकथमितिचेन्नकथंचित् । इदं मुमुक्षोर्मनसिमोक्षरूपतयासदाविद्यमानं सर्वं नानाविधविषयभोगं भवतिप्राप्नोतीतिफलस्यैवश्रुत्याप्रतिपादनात् । भूप्राप्तावितिधातुव्याख्यानात् । परस्मैपदंतुफलस्यपराधीनत्वज्ञापनार्थं । पशुपक्ष्यादिसकलजगदाकारेणपरिणामाख्यसंसाररूपसर्वभावस्यब्रह्मविद्याफलत्वायोगात् । नचवाच्यं सर्वनिवृत्तिरत्राभिप्रेतेति अपदार्थत्वात् अवाक्यार्थत्वात् मुख्येसंभवत्यमुख्यायोगात् तस्मात्सर्वमभवदितिवाक्येसृष्टेःपूर्वकालीनब्रह्मणिसकलजगदाकारेणपरिणामस्यैवपरेणापिवक्तव्यत्वेनप्रक्रमविरोधाच्च । नहितदापितस्यसर्वनिवृत्तिरेवफलं संसारस्यैवाभावप्रसंगात्सकलजगदाकारेणपरिणामाख्यप्रमेयेप्रमाणाभावप्रसंगाच्च । अहंमनुरभवमित्यादिवामदेववाक्येसर्वभावाख्यसर्वत्वस्यस्पष्टमुक्ततया पूर्वोत्तरवाक्येष्वपितस्यैववक्तव्यत्वाच्च वस्तुतस्तुपदानामनुपमर्देनार्थकथनेदैवासुरसंपद्विभागयोगाख्यगीताध्यायवदभेदवादिनां निंदार्थंभेदवादिनांप्रशंसार्थंच तदाहुर्यद्ब्रह्मविद्ययासर्वंभविष्यंतोमनुष्यामन्यंते किमुतद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ब्रह्मवाइदम

युक्ति- ग्रआसीत्तदात्मानमेवावेदहंब्रह्मास्मीतितस्मात्तत्सर्वमभवत् तद्योदेवानांप्रत्यबुध्यत सएवतदभवत्तथर्षीणांतथामनुष्याणांतथैत मल्लिका
॥ १२१ ॥ त्पश्यन्नृषिर्वामदेवःप्रतिपेदेहंमनुरभवंसूर्यश्चेतितदिदमप्येतर्हियएवंवेदाहंब्रह्मास्मीतिसइदंसर्वंभवति । तस्यहनदेवाश्चनाभूत्याई फलसौ०
शतआत्माह्येषांसभवत्यथयोन्यांदेवतामुपास्तेन्योसावन्योहमस्मीतिनसवेदयथापशुरेवं सदेवानांचयथाहवैहवःपशवोमनुष्याभुं
ज्युरेवमेकैकःपुरुषोदेवान्भुनक्त्येकस्मिन्नेवपशावादीयमानेप्रियंभवतिकिमुबहुषुतस्मादेषांतन्नप्रियंयदेतन्मनुष्याविद्युरितिखंडोयं
प्रवृत्तः । तथाहि । तत् उपरिवक्ष्यमाणंप्रमेयमाहुः पूर्वाचार्याःइतिवेदद्रष्टुर्वचनं । ब्रह्मविद्यया अद्वैतविषयशब्दश्रवणमात्रजन्य
या अद्वैतसाक्षात्काररूपस्वाभिमतब्रह्मविद्यया सर्वं नानाविधपशुपक्ष्यादिरूपंजगत् भविष्यंतः उपर्यपिभवितुंयोग्यंव्युत्पन्नमात्र
स्योक्तब्रह्मविद्ययाअनादिकालमारभ्यसर्वभावाख्यसंसारप्राप्तिवद्ब्रह्मप्रलयेपिसर्वभावाख्यसंसारमेवप्राप्स्यंतइतियावत् । अथयोन्यां
देवतामुपास्तइत्युत्तरवाक्यबलादिहाभेदवादिनइत्यतोमनुष्याः मनुअवबोधनइतिधातोर्भगवतोधस्तादेवबोधनयोग्यास्तामसाज
नाःयत्मन्यंते आलोचयंति तदाहुरितिपूर्ववाक्यार्थः । किंतदालोचनमित्यतःप्राप्तं किमुतद्ब्रह्मेतिवाक्यं । तद्ब्रह्म अस्माभिरहं
त्वेनज्ञायमानंब्रह्म अवेत्किमु अस्मद्वद्ब्रह्माभेदंअज्ञासीत्किं । यस्मात्कारणात्तद्ब्रह्मापि सर्वं सकलजगदाकारेणपरिणतमभवत् ।
यथाब्रह्मविद्यायांसत्यामेवास्माकंअयंसंसारआपतितः तथाब्रह्मणोपिईदृग्ज्ञानेसत्येवसंसारआपतितःकिमितिप्रश्नवाक्यार्थः । ब्रह्म
वाइदमग्रआसीदित्युत्तरवाक्यमारभ्यतदिदमप्येतर्हियएवंवेदाहंब्रह्मास्मीतीतिवाक्यपर्यंतंतेषुकस्यचित्प्रौढस्योत्तरं । इदमग्रेब्रह्मा ॥ ६९९ ॥
सीद्वै तद्ब्रह्मात्मानमेवाहंब्रह्मास्मीत्यवे दज्ञासीत् । अस्माकमपिविद्यमानंब्रह्मज्ञानं सर्वज्ञस्यब्रह्मणःकथंनस्यादितिभावः । तस्मा

ज्ज्ञानस्यविद्यमानत्वात्तद्ब्रह्मापि सर्वं सर्वाकारेणपरिणतमभवत् । अस्मद्वद्ब्रह्मापिज्ञानेसत्येवसंसरतीत्युक्तंभवति । तद्ब्रह्म योदेवानांमध्येप्रत्यबुध्यत सतदेव सर्वमेवाभवत् । देवोवाऋषिर्वामनुष्योवासर्वेपिज्ञानेसत्येवसंसरंतीतिभावः । तमेवसर्वंभावंवामदेववाक्येनअहंमनुरभवमित्यादिनाविवेचयति । तत् तस्मात्सर्वत्रापिज्ञानेसत्येवसंसारस्यदृश्यमानत्वात् । एतर्ह्यपि इदानीमपिदंब्रह्मयःअयं ब्रह्मास्मीत्येवंवेद इदंसर्वंभवति । नत्वस्मात्संसारान्मुच्यते । तस्माद्रोचनार्थंफलश्रुतिरितिन्यायेनस्वोक्तब्रह्मविद्यायांअस्मान्प्रवर्तयितुमेवास्मदार्येणेदृक्फलमुक्तं । नतुकदापिभविष्यति । किंतुनीवीमोक्षोहिमोक्षइत्यमरकोक्तगुरूपदेशानुसारेणवनिताविषयानुभवएवाद्वैतभावनायाःफलं । अतोवयमपितैरेवचोक्तगुप्तपटलानुसारेणशाक्तादिमतमवलंब्यमधुपानरतोत्सवादावेवनिरताभवाम इतियन्मन्यंते । तदाहुरितिपूर्वेणान्वयः । इदानींश्रुतिरेषांमिथ्याज्ञानिनामंधंतमएवफलमित्याह ॥ तस्यहेति ॥ देवाश्चाभूत्यै सर्वैश्वर्याभावाय अभूत्यै पुनर्भवनशून्यांधतमसेवानेशतइतिन ईशतएवेतिभावः । किमर्थंदेवानांतेषुद्वेषइत्यतउक्तं ॥ आत्माह्येति ॥ एषांदेवानां सः एभिर्मिथ्याज्ञानिभिःस्वाभिन्नतयोपासितोनारायणः आत्मास्वामीभवति । स्वस्वामिद्रोहित्वात्द्वेषंकुर्वंतीति भावः । दुर्मतमनूद्यतेषामनर्थंचोक्त्वाश्रुतिर्भेदवादिनंस्तौति ॥ अथेत्यादिना ॥ अन्योसौविष्णुः अहंतुजीवोन्योस्मीति योदेवतामन्यां स्वभिन्नामुपास्ते सःभेदज्ञानी यथापशुः प्रागुक्तोमिथ्याज्ञानी एवंनवेद तच्छ्रुत्यादाववमानंकृत्वाविषयलंपटोनभवति । किंतुदुर्विषयेषुविरक्तःश्रुत्युक्तमुक्तिमेवसाधयतीतिभावः । भेदज्ञानिनएवगुणानाह । सदेवानांपशुःकामधेनुरित्यादिना । मनुष्याः मनुष्या न्भुंज्युः भोजयेयुः आनंदयेयुः । ननुइदानींभेदज्ञानिनोजन्मांतरेकर्मवशादभेदवादिकुलेजनिश्चेत्कातस्यगतिरि

त्यतआह ॥ तस्माद्भिति ॥ तस्माद्भेदवादिनांदेवपशुत्वात् एषां यत्रकुत्राप्युत्पन्नानांभेदज्ञानिनां मनुष्याः मनुष्यरूपपशवः प्रागुक्तमिथ्याज्ञानिनः यत्प्रमेयंविदुः चर्चितवंतः। तन्नप्रियं। तथाचाप्रियभूततदीयदुर्बोधंश्रुत्वातानुपेक्ष्यवैष्णवमतमेवावलंबमानो भवति । स्वभोजकपशुत्वात्तेषुतथादेवाःकृपयंतीतिभावः । इदंचगीतावाक्येकृष्णवाचकगोविंदपदप्रयोगान्मूलकृतैवसूचितं ॥ ८६२ ॥ ८६३ ॥ भयंद्वितीयाभिनिवेशतस्स्यादीशादपेतस्यविपर्ययोस्मृतिः । यन्मायया तोबुधआभजेत्तंभक्त्यैकयेशंगुरुदेवतात्मेतिभागवतश्लोकस्यप्राग्व्याख्यातस्यापिसविस्तरमर्थांतरमाह ॥ ईशादिति ॥ ब्रह्मणः ब्रह्मशब्दवाच्यात्प्रभोःततःविष्णोः

ईशात्सर्वेश्वराद्विष्णोरपेतस्यततःप्रभोः ॥ ब्रह्मणस्तुद्वितीयेपिब्रह्मण्यभिनिवेशतः ॥ ८६४ ॥
निर्गुणाख्येऽभिमानेनभयंभवतियन्नृणां ॥ विपर्ययोस्मृतिश्चस्यान्मुकुंदब्रह्ममोचनात् ॥ ८६५ ॥
सगुणस्यद्वितीयंहिनिर्गुणंस्यान्नचापरं ॥ निरर्थोसिनिरर्थाख्यभेदकंयदिमुंचसि ॥ ८६६ ॥

द्वितीये भिन्ने निर्गुणाख्येब्रह्मणि । मन्येऽकुतश्चिद्भयमच्युतस्यपादांबुजोपासनमत्रनित्यं । उद्विग्नबुद्धेरसदात्मभावाद्विश्वात्मना यत्रनिवर्ततेभीरितिप्राचीनश्लोकेस्पष्टंविष्णोःप्रस्तुतत्वात् अतएवोत्तरश्लोकेईशपदेनोदितइतिसूचनायततइत्युक्तं । अभिनिवेशतइत्यस्यार्थकथनमभिमानेनेति । यद्यस्मात् ॥८६४॥८६५॥ द्वितीयशब्देननिर्गुणमेवकुतोग्राह्यमित्यतआह ॥ निरर्थोसीति ॥ निर्गुणइत्यत्रविद्यमानस्यनिराख्योपसर्गस्यार्थंगुणराहित्यरूपमर्थं भेदकं विरुद्धधर्मरूपतयासगुणाद्व्यावर्तकं । एकमेवाद्वितीयमितिवाक्येद्वितीयशब्देनभिन्नमेवग्राह्यं । अत्रचपूर्वोत्तरश्लोकेषुअच्युतनारायणादिपदैःसगुणस्यविष्णोरेवप्रस्तुतत्वात्ततोवि

रुद्धधर्मवन्निर्गुणमेवद्वितीयंभवितुमर्हतीतिभावः ॥ ८६६ ॥ तर्ह्यल्पज्ञत्वादिनाविष्णोर्विरुद्धधर्माक्रांताब्रह्मरुद्रादयोत्रत्यद्विती यशब्देनकुतोनोच्यंतइतिचेत् सत्यं। अस्माभिस्तेष्वपिसर्वोत्तमत्वाग्रहमोचनायतेप्यर्थतयांगीक्रियंते । तथापिसगुणनिर्गुणयोरत्यं तसाक्षाद्विरुद्धत्वेनसगुणद्वितीयतानिर्गुणएवमुख्येतिभावेनेदमेवोपात्तं । परस्यतुमतेविष्णुब्रह्मादीनांसर्वेषामपिद्वितीयकोटिस्थ तयाविष्णोर्द्वितीयंतत्कोटिविरुद्धंनिर्गुणमेवस्यात्। नतुतत्कोटिमध्यपतितंकिंचित् । अतःपरेणात्रद्वितीयशब्देननिर्गुणमेववक्त व्यं । एवंचपरप्रक्रिययैवपराभिमतनिर्गुणस्यघातकत्वादिदंपद्यंपरस्यबाधकमेव नतुसाधकमित्याह ॥द्वितीयकोटिस्थेशादिति॥ तदेव निर्गुणमेव हीत्यनेन ब्राह्मणकोटितोद्वितीयश्शूद्रएवस्यात् नतुब्राह्मणेष्वेवकश्चिदितिप्रसिद्धिंसूचयति ॥८६७॥ तमेवेशं नारा

द्वितीयकोटिस्थेशात्तेद्वितीयंस्यात्तदेवहि ॥ ८६७ ॥ अतोभक्त्यातमेवेशंभजेद्यश्चगुरुर्भुवि ॥

देवताचभवेत्ताद्दशाचार्येयत्नवान्बुधः ॥ इतिवाक्यार्थमालोच्यत्यजान्यद्वजनःप्रभुं ॥ ८६८ ॥

यणाख्यमेवेश्वरंगुरुदेवतात्मेत्यस्यार्थमाह ॥ यश्चेति ॥ यःमध्वमुनिःभुविगुरुश्चभवेत् तत्वोपदेष्टृत्वात् । देवताचभवेत्। वाय्वा ख्यदेवतारूपत्वात् । ताद्दशाचार्येयत्नवानितिगुरुदेवतात्मेतिपदस्यार्थइतिभावः । अनेन आत्माजीवेधृतौयत्नेस्वभावेपरमात्म नि इत्यभिधानात्गुरुश्चसादेवताच गुरुदेवतायामात्मायस्येतिसमासःसूचितोभवति । इदंच नानाचार्याणामेवलोकेविद्यमानत्वात् तान्विहायमध्वमुनेस्तन्मतानुवर्तिनांचचरणानुसरणंज्ञानार्थिभिःकर्तव्यमितिसूचनार्थं । अन्यथागुर्वात्मेत्येवावक्ष्यत् । मध्वमतानु वर्तिनामेववायुस्तुत्यातन्नत्यादिप्रयत्नदर्शनात्तस्यैवात्रग्रहणमुचितमितिसूचनायात्मपदं । अन्यत् निर्गुणादिकं ॥८६८॥ इदानीं

अविद्यमानोह्यवभातिहिद्वयोध्यातुर्धियास्वप्नमनोरथोयथा । तत्कर्मसंकल्पविकल्पकंमनोबुधोनिरुंध्यादभयंयतस्स्यादितिश्लोकस्यार्थमाह॥अविद्यमानइति॥ तत् निर्गुणं पूर्वपद्ये मन्येकुतश्चिदितिप्राथमिकपद्ये अच्युताभिधःस्पष्टोदितोयः अच्युतपदेनस्पष्टमुदितइत्यर्थः । उपर्युपरि उपर्यध्यधसःसामीप्यइतिसूत्रात् अव्यवहितोपरितने श्रृण्वन्सुभद्राणिरथांगपाणेर्जन्मानिकर्माणिचयानिलोके। गीतानिनामानितदर्थकानिगायन्विलज्जोविचरेदसंगइतिपद्ये यश्चक्रांकः चक्रंअंकोयस्यसः चक्रांकः । रथांगपाणिपदोदितइत्यर्थः । अधोधः अस्मात्पद्यद्वयादव्यवहितपूर्वभागेविद्यमाने कायेनवाचामनसेंद्रियैर्वाबुद्ध्यात्मनावानुसृतस्वभावः । करोतियद्य

अविद्यमानोह्यत्यंतासन्नपिद्वयशब्दितः॥ द्वितीयोनिर्गुणाख्यात्माध्यातुर्नैर्गुण्यवादिनः
॥ ८६९ ॥ दुर्धियाभातितत्वंतुतन्नकिंत्वच्युताभिधः ॥ अस्मात्पद्यद्वयात्पूर्वपद्येस्पष्टो
दितःकिल ॥ उपर्युपरिचक्रांकोधोधोनारायणश्चयः ॥ ८७० ॥ दैवत्वेनासदीशादेर्वाद्व
यस्याग्रहाच्चभीः ॥ गुरुत्वेनतुतत्सेवाऽसूचिपूर्वविशेषणात् ॥ ८७१ ॥ ॥

त्सकलंपरस्मैनारायणायेतिसमर्पयेत्तदितिपद्ये यःनारायणः नारायणपदोदितः सएवतत्वमितिसंबंधः । कथोपक्रमपद्ये मध्यस्थितपद्ये उपसंहारपद्येच हरावेवप्रसिद्धश्रुतिद्वयेनलिंगेनचनारायणस्यैवस्थाप्यतयाप्रस्तुतत्वात्सएवपरमतत्वं निर्गुणंतूक्तविधयाए तदध्यायप्रमेयविरुद्धत्वान्नतत्वमितिभावः ॥ ८६९ ॥ ८७० ॥ अविद्यमानोह्यवभातिहिद्वयइतिचरणस्यार्थांतरमाह ॥ दैवत्वेनेति ॥ आदिपदेन ब्रह्मादयोगृह्यंते । तेषांनिर्गुणवत्सर्वथाअविद्यमानत्वस्यासंमतत्वाद्दैवत्वेन परदैवत्वेनअसदीशादेरित्युक्तं । ॥ ७०१ ॥

द्वयस्य विष्णोर्भिन्नतयाद्वयपदोदितस्य। उपलक्षणंचैतत् । भयंद्वितीयाभिनिवेशतइतिपद्येद्वितीयपदोदितस्येत्यपिद्रष्टव्यं । तत्सेवा रुद्रब्रह्मादीनांसेवा। पूर्वविशेषणात् गुरुदेवतात्मेतिविशेषणात् । गुरुदेवतायांप्रयत्नवत्त्वस्यतत्रोदितत्वादीशादिदेवानामपिगुरुदेवतात्वसद्भावात्गुरुत्वेनसेवाकर्तव्या । परदेवतात्वेनभजनंतुकदापिनकर्तव्यमितिभावः ॥ ८७१ ॥ तत्कर्मसंकल्पविकल्पकंमनइत्यस्यार्थमाह ॥ तदिति ॥ तत्तस्मात् तेषांनिर्गुणानां कर्माणि परदेवतात्वेनश्रवणमननध्यानयजनादिकर्माणि तेषांकर्मणांसंकल्पविकल्पकंसंकल्पविकल्पंचकुर्वदित्यस्यतात्पर्यकथनं तेषांनिर्गुणादीनांप्राह्ययैकर्मादिकंचरदाचरत् मनइति । तस्मादितितु तदि

तत्तेषांनिर्गुणादीनांप्राह्ययैकर्मादिकंचरत् ॥ बुधोनिरुंध्याद्धिमनोविष्णावेवनियोजयेत् ॥ ८७२ ॥
मुकुंदादच्युताख्याच्चततस्स्यादभयंकिल ॥ असतस्सत्त्वशून्यस्यनिर्गुणस्यात्मभावनात् ॥ ८७३ ॥
उद्विग्नबुद्धेःपक्षिश्वाद्यात्मनाभीरभूद्धिया ॥ विश्वांतःपातिरुद्रादेर्वाभीर्विश्वस्वभावतः ॥ ८७४ ॥
सायत्राच्युतपादाब्जोपासनायांनिवर्तते ॥ सर्वात्मनाविश्वपदमित्थंपंचार्थवद्ध्रुवं ॥ ८७५ ॥

त्यस्यावृत्त्याध्याहारेणवाउक्तं ॥ ८७२ ॥ मन्येकुतश्चिदितिश्लोकस्यार्थमाह ॥ मुकुंदादिति ॥ अच्युताख्यात्ततोमुकुंदादितिसंबंधः । अच्युतस्यपादांबुजोपासनंअकुतश्चिद्भयंमन्यइत्यस्यतात्पर्यकथनमिदं । असच्चिदात्मभावादित्यस्यार्थमाह ॥असतइति॥ सत्त्वशून्यस्य अत्यंतासतइत्यर्थः। स्वात्मभावनात् परमात्मत्वभावनात् । उद्विग्नबुद्धेःपुरुषस्यविश्वात्मनेत्यस्यार्थमाह॥पक्षीति॥ विःपक्षी । श्वासारमेयः । अस्यचोपलक्षणत्वात् विश्वात्मनेत्यस्यपक्षिश्वाद्यात्मनेत्युक्तं । अत्रचविश्वपदस्यावृत्त्यापक्षिश्वादिरूपं

यद्विश्वं हीनयोन्यात्मकंयज्जगदित्यपिग्राह्यं । तद्रूपेणयाभीरभूत् निर्गुणभावनयारुद्रादीनांपरदेवताभावनयाचहीनयोनीःप्राप्य दुःखादिभयंलोकोनुभवति सायत्राच्युतपादाब्जोपासनायांविश्वात्मनासर्वप्रकारेणनिवर्ततइतियोजना । विश्वात्मनाभीरित्यस्या र्थांतरमाह ॥ विश्वांतःपातिरुद्रादेरिति ॥ विश्वात्मनाजननमरणादिभयग्रस्तजगत्स्वभावेन याभीः भस्मासुरादितोभूत्तद पिभयंयत्र मुक्तिसाधनाच्युतपादाब्जोपासनायांविश्वात्मनासर्वात्मनानिवर्ततइत्यपियोजना । इदंचोपलक्षणं । असतोनिर्गुणस्य आत्मभावनात् जीवत्वेनभावनात्पक्षिश्वादिजगदात्मनायाभीःसाचाच्युतपादाब्जोपासनेकृतेसतिमुक्तात्तद्भक्तान्निवर्ततेअच्युता न्निवर्ततइतिकिंवक्तव्यमित्यपियोजनाद्रष्टव्या । इदंचयोजनाद्वयं जननमरणादिदोषग्रस्तत्वात्परैःपरदैवतयोच्यमानंरुद्रब्रह्मादि

नोचेत्सार्वजनीनोक्तित्यागोनिर्हेतुकोभवेत् ॥ वादीभपंचवक्त्राभमदोविश्वपदंततः ॥ ८७६ ॥

अत्रषण्मतधर्माणांमध्येमध्वमताध्वना ॥ अकुतश्चिद्भयंमन्येतदेवेत्यनुशास्तितत् ॥ ८७७ ॥

कं निर्गुणंच नपरदेवतेतिसूचनार्थं । उक्तमर्थसंगृह्णाति ॥ विश्वपदमिति ॥ इत्थंपंचार्थवत् द्वंद्वसमासेनआवृत्त्याचअर्थद्वयवत् यथास्थितपदेनार्थत्रयवदित्यर्थः ॥ ८७३ ॥ ८७४ ॥ ८७५ ॥ नोचेत् विश्वपदंपक्षिविश्वादिनीचजगत्स्मारकंनोचेत् । सार्वज नीनोक्तित्यागः सर्वात्मनेत्युक्तित्यागः । यद्वा उक्तविधयाअयमध्यायोनिर्गुणादिनिराकरणपरोनोचेत् निर्गुणादीनामेवप्रतिपाद कंचेदितियावत् । सार्वजनीनोक्तित्यागः सर्वजनप्रसिद्धाच्युतादिपदत्यागः । उक्तविधयाबह्वर्थवत्त्वात्विश्वपदंस्तौति ॥ वादी भेति ॥ ८७६ ॥ अत्रनित्यधाइत्यत्रविद्यमानात्रपदस्यार्थमाह ॥ अत्रेति ॥षण्मतधर्माणां षण्णांसिद्धांतिनामभिमतधर्माणां ।

तदेवअच्युतपदांबुजोपासनमेव । अस्यधर्मस्यमध्वमुनिनैवप्रपंचितत्वात्मध्वमताध्वनेत्युक्तं । तत्तस्मात् इतरैःक्रियमाणधर्मा णांतत्कर्मसंकल्पविकल्पकमितिश्लोकेविनिंदितत्वात् ॥ ८७७ ॥ एतच्छ्लोकस्थपदैःसिद्धंप्रयोजनांतरमप्याह ॥ नित्यमिति ॥ सः उपदेष्टा कविनामकऋषिः ॥ ८७८ ॥ तद्रीत्येतितच्छब्दबलात्यत्प्राचीनपद्यमितिग्राह्यं । उत्तरंपद्यं । तंनिर्गुणादिपदार्थे भयभोक्तृत्वस्यप्रागुपपादितत्वाद्भयानांपुंजंभुंजानमित्युक्तं । एतद्वाक्यबलादेवप्रागुपलक्षणयानिर्गुणविषयेयोजनांतरंकृतं॥८७९॥

नित्यमित्युक्तितोमुक्तौचोपास्तिमनुशास्तिसः ॥ पादांबुजोक्त्याचाकारंसौंदर्यादिगुणानपि ॥८७८॥
प्राचीनपद्यंतद्रीत्यासर्वंनिर्णेयमुत्तरं ॥ पुंजंभयानांभुंजानंतंजानन्कोभयंजयेत् ॥ ८७९ ॥ यंभीर्बि
भेतितंभीरुस्संभजेत्स्तंभसंभवं ॥ इतिप्राचीनपद्यस्यहृदयंहृदयोहिते ॥ ७८० ॥ यस्मादुपास्ति
मेवाहमुक्त्यैमुनिपरंपरा ॥ तस्मान्मिथ्योपास्तिवार्ताहृत्स्थागर्तेपतत्तव ॥ ८८१ ॥ एकैकस्यापिपशु
पक्ष्यादिभावेनदेहिनः ॥ नानात्वंसंसृतावेवमुक्तावेकप्रकारता ॥ ८८२ ॥ ॥

भीरपियंबिभेतीतिवचनात्यंनारायणंप्रतिभीर्बिभेतीत्युक्तं । नरसिंहेप्रह्लादादिभयहारित्वस्यप्रसिद्धत्वात्स्तंभसंभवमित्युक्तं । तेतव हृदयः हृदः अयःस्थानीयं अभेद्यमित्यर्थः ॥ ८८० ॥ अनेनैवश्लोकेनप्रयोजनांतरमपिसिद्धमित्याह ॥ यस्मादिति ॥ ८८१ ॥ किंच यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः । नानात्वमात्मनोयावत्तावदस्यास्वतंत्रता । यावदस्यास्वतंत्रत्वंतावदीश्वरतोभयं । यएतत्समुपासीरंस्तेमुह्यंतिशुचार्पिताइतिभागवतवाक्येसार्धश्लोकोक्तस्य मुक्तौनानात्वाभावान्याधिपतित्वाभावादेरुत्तरश्लो

कोत्तरार्धेस्पष्टंविनिंदितत्वेनपूर्वपक्षतयाअग्राह्यत्वा न्मुक्तौनानात्वंन सद्वितीयत्वंन अन्याधिपतिमत्त्वंनेत्याद्यर्थप्रतिपादकतयाप्र तीत निरवकाशमुक्तिविषयवाक्यानामपि संसारइवपश्वादिभावेननानात्वस्य द्वितीयजन्मवत्त्वेनसद्वितीयत्वस्या- स्वाभाविका न्याधिपतिमत्त्वेनअन्याधिपतिमत्त्वस्यचाभावएवार्थोवक्तव्योनतुयथाश्रुतएवार्थः । एतदप्युपलक्षणं । मुक्तावकुतश्चिद्भयमित्य स्यापीश्वरादन्यस्माद्भयाभावोर्थोद्रष्टव्यः नतुयथाश्रुतऐक्यार्थइत्यपिग्राह्यं । किमुवक्तव्यंउक्तविधयासावकाशस्य भयंद्वितीया भिनिवेशतइत्यादिवाक्यस्येतिभावेनाह ॥ एकैकस्येति ॥ नानात्वमित्युपलक्षणं ॥ द्वितीयजन्मवत्त्वेनसद्वितीयत्वमपिद्रष्टव्यं ।

राजादितुच्छंम्लेच्छादेरीश्वरस्यापितंत्रता ॥ संसृतौस्याद्धिमुक्तौतुस्वभावेश्वरतंत्रता ॥
नापरस्यततोमुक्तिरेवप्रार्थ्याविवेकिभिः ॥ ८८३ ॥ इत्याहभगवान्व्यासोयस्माद्भागव
तेस्फुटं ॥ ततोप्यभवमन्विच्छन्नुपासीताच्युतंप्रभुं ॥ ८८४ ॥ धर्मान्भागवतान्पृष्टःक
विर्वादिविवादतः ॥ भगवंतंचतद्धर्मंविविच्येत्थमवर्णयत् ॥ ८८५ ॥ ॥

मुक्तौतु एतद्राहित्यमेवनानात्वसद्वितीयत्वयोरभावः ॥ ८८२ ॥ राजादीत्यनेना स्वाभाविकाधिपतिमत्त्वमभिप्रेतं । तदभावश्च मुक्तावनन्याधिपतित्वं । आनुषंगिकतयासिद्धंप्रयोजनांतरंचाह ॥ ततइति ॥ ततः नानायोन्यादिसत्त्वेनसंसारस्यासारत्वात् । पूर्वपक्षसिद्धांतभावस्यस्पष्टत्वात्स्फुटमित्युक्तं ॥ ८८३ ॥ ८८४ ॥ श्लोकार्थकथनमुपसंहरति ॥ धर्मानिति ॥ भागवतान् भग वत्संबंधिनः । भागवतधर्मपरिज्ञानायभगवज्ज्ञानमप्यपेक्षितमित्यतःभगवंतं तद्धर्मंचेत्युक्तं ॥ ८८५ ॥ कोभगवान्कस्तद्धर्मइति



विवेचनंकृतवानित्यतआह ॥ अच्युतइति ॥ तस्य अच्युतस्य उपास्तिः शास्त्राभ्यासरूपाध्यानरूपाच महान् सकलधर्मेभ्यः श्रेष्ठः । अखिलकर्मणां कायिकवाचिकमानसिकादिनित्यनैमित्तिककर्मणां । तद्धर्मः भगवद्धर्मः । अच्युतएवभगवान् तदुपास नमेवमुख्यधर्मः । स्वकृतनित्यनैमित्तिककर्मणांभगवत्यर्पणंचावांतरधर्मइति मन्येकुतश्चिदितिश्लोके कायेनेतिश्लोकेचनिर्णीतवा न् । प्रथमप्रोक्तत्वात् फलनिरूपणात् नित्यंकर्तव्यत्वोक्तेः शृण्वन्सुभद्राणीत्युपसंहारश्लोकेनअस्यैवविवृतत्वाच्च प्रथमश्लोको क्तमुपासनमेवमुख्योधर्मः । तदभावात्द्वितीयश्लोकोक्तोहर्यर्पणरूपोधर्मोभगवदुपासनांगभूतधर्मइत्यवर्णयदितिभावः ॥ ८८६ ॥

अच्युतोभगवांस्तस्योपास्तिर्धर्मोमहान्किल ॥ भगवत्यर्पणंचस्यातद्धर्मोखिलकर्मणां
॥ ८८६ ॥ विमतोविष्णुरेवैकोभगवानभयत्वतः ॥ व्यतिरेकेणनाशादिभयग्रस्तजडा
दिवत् ॥ भक्ताभयकरत्वाद्वाभगवान्समहाप्रभुः ॥ ८८७ ॥ ॥

योगिषुकविनामकयोगिवचनत्वात्युक्तिगर्भाश्चैतेश्लोकाइतिभावेनतत्सूचितयुक्तीश्चदर्शयति ॥ विमतइत्यादिना ॥ एतत्स्मृति समाख्ययाएकमेवाद्वितीयमितिश्रुतिरपि गंगैवेयमितिवत्सदेवेतिसावधारणप्रयोगबलात्सच्छब्दमुख्यार्थभूतसत्त्वघटितस्य शा स्त्रमपकृष्यशयीतेति एकोनारायणआसीदितिचप्रलयप्रतिपादकवचनबलात् वटपत्रशायिनोनारायणाभिधसगुणब्रह्मणःप्रस्तावा त् । तदैक्षतेत्युत्तरवाक्येपि ईक्षतिकर्मव्यपदेशात्सइतिसूत्रानुसारेणईक्षणाख्यचक्षुर्व्यापारकथनेन साकारब्रह्मणस्तस्यैवप्रारंभाच्च स्वप्रकरणप्रतिपाद्यसगुणस्यस्थिरीकरणायमध्येदेहलीदीपन्यायेन दुर्मतप्रसक्तस्य सगुणद्वितीयनिर्गुणस्यनिषेधपरैव नतुजगन्नि

युक्ति- षेधपरा जठरीकृतलोकयात्रइत्यादिवचनैःप्रलयकालेपिभगवज्जठरांतर्लोकसत्त्वेननिषेधायोगादितियुक्तमुत्पश्यामः ॥ ८८७ ॥ मल्लिका

॥ १२६ ॥ ॥ ८८८ ॥ ८८९ ॥ ८९० ॥ ८९१ ॥ भागवतवाक्यांतरेणापिमायिमतंस्पष्टंविनिंदितमित्याह ॥ यावत्स्यादिति ॥ यद्यस्मात् फलसौ०

विमतोनिर्गुणादिर्नभगवान्सभयत्वतः ॥ अन्वयेनैवसभयचैत्रमैत्रादिजीववत् ॥ ८८८ ॥ विम
तंविष्णुभजनंधर्मोभागवतोभवे ॥ भवभीभंगहेतुत्वाद्यतिरेकेणभुक्तिवत् ॥ ८८९ ॥ विमता
निर्गुणाद्यर्चाधर्मोभागवतोनसा ॥ भयहेतुत्वतःकुंभीपाकसाधनपापवत् ॥ ८९० ॥ इतिपंचानुमा
नानिसोभिप्रैतिकविःकविः ॥ ८९१ ॥ यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः ॥ नानात्वमात्म
नोयावत्तावदीश्वरतंत्रता ॥ ८९२ ॥ यावदस्यास्वतंत्रत्वंतावदीश्वरतोभयं ॥ यएतत्समुपासीरं
स्तेमुह्यंतिशुचार्पिताः ॥ ८९३ ॥ इतिभागवतेस्पष्टंमुक्तावद्वैतमिच्छतां ॥ भेदादेस्संसृतावेवस
त्वंसंसदिशंसतां ॥ मतंसर्वमनूद्यांतेनिषेधोपिविधीयते ॥ ८९४ ॥ यएतत्पूर्वकथितंप्रमेयंसमुपा
सते ॥ तेंऽधेतमसिशोकेनमूर्छायांतीतियज्जगौ ॥ ८९५ ॥ अतोभागवतंसर्वंमुक्तौचेश्वरतंत्रतां ॥
भेदस्यचसदासत्त्वंशास्तीत्येवमनोरमं ॥ ८९६ ॥ भगवत्परमेवाहुर्यतोभागवतंबुधाः ॥ भगवा
न्भाग्यवांश्चस्यात्पूज्यश्चस्यान्नचापरः ॥ अतोस्मिन्निर्गुणस्योक्तिरैक्योक्तिश्चनशोभते ॥ ८९७ ॥ ॥ ७०४ ॥
॥ ८९२ ॥ ८९३ ॥ ८९४ ॥ ८९५ ॥ ८९६ ॥ भागवतशब्दपर्यालोचनयापिभागवतेनिर्गुणोक्तेश्चानवकाशएवेत्याह ॥ भग

वानिति ॥ सखंडपदत्वे ऐश्वर्यस्यसमग्रस्येतिवचनात् अखंडपदत्वेच अत्रभगवान् भगवानितिशब्दोवृद्धैःप्रयुज्यतेयुज्यतइत्य भिधानात्पूज्यश्चस्यादितिविवेकः । अस्मिन् भागवताख्यग्रंथे । उपलक्षणंचेदं । हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः । अध्य

कदाचिन्नास्तितारूपंमिथ्यात्वंतुतवापिन ॥ लयेष्वभावमात्रेणसाध्यसिद्धिप्रसंगतः ॥८९८॥
त्रिकालनास्तितारूपोयोत्यंताभावउच्यते॥ सत्तार्थकत्वाद्भूधातोरत्यंतासत्त्वमेवतत् ॥ ८९९॥
सत्त्वप्रत्यक्षबलतोयद्यसत्त्वंनिवार्यते ॥ प्रमारूपंतदध्यक्षंब्रह्मणीवोभयंक्षिपेत् ॥ ९०० ॥ भ्रम
रूपंयदिभवेत्साह्यतद्धतितस्यधीः ॥ सत्त्वाभावस्यैवतर्हिद्विर्बद्धस्यसुबद्धता ॥ ९०१ ॥ प्रत्यक्षं
चाक्षसंयुक्तचक्षुरादींद्रियैर्यदि ॥ तर्हीन्द्रियाणामर्थानांसंयोगोत्पत्तयेपुरा ॥ सत्तापिवाच्या
तच्छोच्याहंताभूदनुमैवते ॥ ९०२ ॥ अतोसत्त्वनिरासायानीतप्रत्यक्षशक्तितः ॥ त्रिकाल
नास्तितारूपमिथ्यात्वस्यापिबाधनात् ॥ ९०३ ॥ नचांबुनाकर्णलग्नप्राचीनांबुनिवृत्तिमत् ॥
अनुमाबाधितैवाभूत्सार्थोभूत्तस्करस्तव ॥ ९०४ ॥ असन्निकृष्टाक्षजंतदसत्त्वस्यैवसाधकं ॥
नृशिरस्संगियचक्षुर्नतच्छृंगेणसंगवत् ॥ ९०५ ॥ ॥ ॥

गान्महदाख्यानंनित्यंविष्णुजनप्रियमितिवचनेहरेर्गुणश्रवणाशयाभागवतश्लोकानांशुकेनपठितत्वोक्तेर्नैकस्मिन्नपिश्लोकेनिर्गुणस्या वकाशः नैर्गुण्याभावादेवनचिदैक्यस्यचावकाशइत्यपिद्रष्टव्यं ॥८९७॥८९८॥८९९॥९००॥९०१॥९०२॥ ९०३ ॥९०४॥९०५॥

॥ ९०६ ॥ ९०७ ॥ ९०८ ॥ ९०९ ॥ ९१० ॥ ९११ ॥ ९१२ ॥ ९१३ ॥ ९१४ ॥ ९१५ ॥ ९१६ ॥ ९१७ ॥

एवंचासन्निकृष्टाक्षणाशुक्तिरूप्यनिरीक्षणं ॥ असत्तांगमयेत्तस्यनत्वसत्तोविभिन्नतां ॥ अर्थापत्त्याप्यनर्थो भून्नत्वर्थोभूत्परस्यतत् ॥ ९०६ ॥ व्यावहारिकसत्ताचभ्रांताऽभ्रांताविकल्पने ॥ असत्त्वसाधिकावास्या त्स्याद्वामिथ्यात्वबाधिका ॥ ९०७ ॥ सद्विविक्तत्वमपितेसत्त्वानाधारतैवयत् ॥ अतस्तस्यापिसाध्यत्वेस्या न्नृशृंगोपमंजगत् ॥ ९०८ ॥ अतोमिथ्यात्ववादेस्मिन्ब्रह्मान्यत्सकलंजगत् ॥ असदेवाभवत्तेनमानेस्याद्दू षणंबहु ॥ ९०९ ॥ साध्यबाधाश्रयासिद्धीस्वरूपासिद्धिरेवच॥ व्याप्यत्वासिद्धताचस्याद्दृष्टांतासिद्धिरेवच ॥ ९१० ॥ मानानुगस्यतेमानोप्यपसिद्धांतदोषतः ॥ भग्नस्स्यात्सत्त्वमात्रस्यबाधेतस्यतुधर्मिणां ॥ स्वस्वरू पेणचाबाधेसदद्वैतमतक्षतिः ॥ ९११ ॥ यथाऽबाध्यब्रह्मरूपंसदेकमभवत्तथा ॥ जडाबाध्यजगद्रूपमपिय स्मादभूद्विसत् ॥ ९१२ ॥ स्वरूपस्यापिबाधेतुप्रागुक्तंदूषणंभवेत् ॥ एवंचोभयतःपाशारज्जुर्बध्नातितेगलं ॥ ९१३ ॥ अन्यत्त्वंसदसद्भ्यांचयदिमिथ्यात्वमीर्यते ॥ अप्रसिद्धंतदासाध्यंभवेद्धिप्रतिवादिनं ॥ ९१४ ॥ दृ ष्टांतेसाध्यवैकल्यशल्यंचैवभवेत्तव ॥ सत्त्वभ्रांतिस्सन्निकर्षशून्यप्रत्यक्षमेवच ॥ ९१५ ॥ असत्त्वंस्थिरये दुक्तविधयाननिवारयेत् ॥ अतःप्रसाध्यकांगंचनासीदेतन्निदर्शनं ॥ ९१६ ॥ किंचासत्त्वनिषेधेपिसत्त्वस्या भावमात्रतः ॥ प्रागुक्तपंचदोषाणांनैवोद्धारोभवेत्तव ॥ ९१७ ॥ ॥ ॥

॥ ९१८ ॥ ९१९ ॥ ९२० ॥ ९२१ ॥ ९२२ ॥ ९२३ ॥ ९२४ ॥ ९२५ ॥ ९२६ ॥ ९२७ ॥ ९२८ ॥ ९२९ ॥

बाष्पारोपितधूमस्यसत्त्वाभावेनकेवलं ॥ असद्विलक्षणस्यापिकिंनासिद्धिर्भवन्मते ॥ ९१८ ॥ एवंचसद्वि विक्तेषुरज्जुसर्पादिकेषुते ॥ असद्भिन्नेष्वपियतस्तद्योग्यार्थोनदृश्यते ॥ ९१९ ॥ तत्सत्त्वरहितत्वाख्यमस त्त्वंसर्वसंमतं ॥ मिथ्यात्वमस्तुसर्वत्रपुनस्तस्यासतोन्यता ॥ व्यर्थाकिमर्थंस्वीकार्यायाव्याहत्याचदूषयेत् ॥ ९२० ॥ दोषेसत्येवदृश्यत्वंयोगस्यायोग्यतातथा ॥ असत्त्वस्यैवसिद्ध्यर्थेलिंगभूते नसंशयः ॥ उक्तासि द्ध्यादिदोषाणांतस्मान्नास्तितवौषधं ॥ ९२१ ॥ व्यावहारिकसत्ताचप्रागुक्तेनैववर्त्मना ॥ नविकल्पसहात स्मान्मिथ्यात्वाशांपरित्यज ॥ ९२२ ॥ ज्ञानेननाश्यतायातुसापिनास्तिनिदर्शने ॥ ९२३ ॥ किंचभेदेतवम तेप्यनादौज्ञाननाश्यता ॥ त्वद्रीत्यैवनयस्मात्स्वोपादेयक्षयरूपिणी ॥ अतोंशतोबाधिताभूत्त्वन्नयेनैवते नुमा ॥ ९२४ ॥ हाहंतकिंतेस्खलनमंधस्येवपदेपदे ॥ अविद्योपादानताचतमसीवनदूषणं ॥ ९२५ ॥ अज्ञा नस्यानुपादेयमज्ञानंसत्यमेवयत् ॥ अज्ञानोपादानतयाकिंनश्छिन्नंततोवद ॥ ९२६ ॥ स्वात्यंताभावसाहित्यं विरोधाद्बाधितंतव ॥ अविरोधेजगत्सत्त्वसिद्धेर्ममनदूषणं ॥ ९२७ ॥ किंचैवंसदसत्त्वाख्यपक्षस्याप्यविरो धतः ॥ अनिर्वाच्यत्ववृक्षस्यमूलच्छेदोभवत्तव ॥ ९२८ ॥ दृश्यध्यस्तत्वरूपंयद्दृश्यत्वंतवसंमतं ॥ सा ध्यावैशिष्ट्यदोषेणनतन्मिथ्यात्वसाधकं ॥ ९२९ ॥ ॥ ॥

॥ ९३० ॥ ९३१ ॥ ९३२ ॥ ९३३ ॥ ९३४ ॥ ९३५ ॥ ९३६ ॥ ९३७ ॥ ९३८ ॥ ९३९ ॥ ९४० ॥ तत्तस्मात् उक्तवि
हेतोरन्यतरासिद्धिश्चस्यादीदृशिसाधने ॥ बाध्यत्वंचममासिद्धंकेनसाध्यंप्रसाध्यते ॥ ९३० ॥ नापिवृत्ति
व्याप्यतातेमतेभवतिदृश्यता ॥ संबंधस्यानिरुक्त्याचब्रह्माणिव्यभिचारतः ॥ यतस्तेचरमावृत्तिर्ब्रह्मचि
न्मात्रगोचरा ॥ ९४१ ॥ साक्षिवेद्येशुक्तिरूप्येत्वद्दृष्टांतेप्यवर्तनात् ॥ साक्षिवेद्याज्ञानपूर्वेभागासिद्धिप्रसं
गतः ॥ ९३२ ॥ कथंचिद्युक्तिवेद्यत्वाच्छ्रुतिवेद्यत्वतश्चतत् ॥ वृत्तिव्याप्यंयदितदास्यादैक्येव्यभिचारिता
॥ ९३३ ॥ अत्यंतासत्यपिज्ञानमर्थेशब्दःकरोतिहि ॥ इत्युक्तेश्शशशृंगादौत्वद्रीत्याव्यभिचारिता ॥९३४॥
वृत्त्याकाराकारितायांहेत्वसिद्धिश्चमेभवेत् ॥ ९३५ ॥ किंचदृश्यत्वजडतापरिच्छिन्नत्वपूर्वके ॥ धर्मेसत्य
पिशुक्तिस्तेनमिथ्याकेनहेतुना ॥ ९३६ ॥ तद्रूप्यस्यैवमिथ्यात्वेबाधएवप्रयोजकः ॥ वाच्यस्त्वयापिनत्व
न्यस्सतुनास्त्येवमन्यते ॥ ९३७ ॥ निष्प्रकारंकधीपक्षेबाधस्तुभवतोपिन ॥ नास्तित्वाकारबोधंयद्बाधमाहु
र्विपश्चितः ॥ ९३८ ॥ बाधबाधेपिबाधेनतदभावेसएवसन् ॥ अतोमिथ्यात्ववादस्तेयुक्तोर्मिथ्यात्वमान
यत् ॥ ९४९ ॥ सत्यत्ववादिनामेवसहायमकरोदहो ॥ विस्तरस्त्वस्यसर्वस्यमूलशास्त्रेप्रदृश्यतां ॥ ९४० ॥
चर्चेयंपररीत्यैवपरावद्याभिधित्सया ॥ तन्मन्येमाध्वराद्धांतंविद्वन्मकुटवर्धनं ॥ ९४१ ॥ ॥
धयासकलभागवतवाक्यानामपिमध्वमतानुकूलत्वात् ॥ ९४१ ॥ ॥ ॥

विष्णुलोकाख्यमुक्तेःमुक्तनानाजात्याक्रांतत्वादिमाहात्म्यं तत्प्रापकमुख्यप्राणमाहात्म्यं प्राप्यभगवन्माहात्म्यंच विस्तरेणप्रति
पादयतो मुमुक्षूणांदेवर्ष्यादीनांप्रार्थनारूपस्य अतएवाद्यापिमुमूर्षूणांकर्णेजप्यमानस्य नानानमित्यादिवर्गचतुष्टयात्मकसोम
सूक्तस्या र्थकथनार्थंजरतीभिरित्यादिरुत्तरोग्रंथसंदर्भः । तत्रमंदानामपिसुबोधायवर्गस्थवाक्यान्युद्धृत्यतदर्थःकथ्यते ॥ ना
नानंवाउनोधियोविव्रतानिजनानां । तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वंतमिच्छतींद्रायेंदोपरिस्रव ॥ १ ॥ जरतीभिरोषधीभिःपर्णे
भिःशकुनानां ॥ कार्मारोअश्मभिर्द्युभिर्हिरण्यवंतमिच्छतींद्रायेंदोपरिस्रव ॥ २ ॥ कारुरहंततोभिषगुपलप्रक्षिणीनना ॥ नाना
धियोवसूयवोनुगाइवतस्थिमेंद्रा० ॥ ३ ॥ अश्वोवोह्वासुखंरथंहसनामुपमंत्रिणः ॥ शेपोरोमण्वंतौभेदौवारिन्मंडूकइच्छतीं
द्रा० ॥ ४ ॥ १ ॥ शर्यणावतिसोममिंद्रःपिबतुवृत्रहा ॥ बलंदधानआत्मनिकरिष्यन्वीर्यंमहदिंद्रा० ॥ ५ ॥ आपवस्वविशांपत
आर्जीकात्सोममीढ्वः ॥ ऋतवाकेनसत्येनश्रद्धयातपसासुतइंद्रा० ॥ ६ ॥ पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत् ॥ तंगंधर्वाःप्रत्य
गृभ्णंतंसोमेरसमादधुरिंद्रा०॥ ७ ॥ ऋतंवदन्नृतद्युम्नसत्यंवदन्त्सत्यकर्मन् ॥ श्रद्धांवदन्त्सोमराजन्धात्रासोमपरिष्कृतइंद्रा०॥८॥
सत्यमुग्रस्यबृहतःसंस्रवंतिसंस्रवाः ॥ संयंतिरसिनोरसाःपुनानोब्रह्मणाहरइंद्रा० ॥ ९ ॥ २ ॥ यत्रब्रह्मापवमानच्छंदस्याँवाचंव
दन् ॥ ग्राव्णासोमेमहीयतेसोमेनानंदंजनयन्निंद्रा०॥ १० ॥ यत्रज्योतिरजस्रंयस्मिंल्लोकेस्वर्हितं ॥ तस्मिन्मांधेहिपवमानामृतेलो
केअक्षितइंद्रा० ॥ ११ ॥ यत्रराजावैवस्वतोयत्रावरोधनंदिवः ॥ यत्रामूर्यह्वतीरापस्तत्रमाममृतंकृधींद्रा० ॥ १२ ॥ यत्रानुकामं
चरणंत्रिनाकेत्रिदिवेदिवः ॥ लोकायत्रज्योतिष्मंतस्तत्रमाममृतंकृधींद्रा० ॥ १३ ॥ यत्रकामानिकामाश्चयत्रब्रध्नस्यविष्टपं ॥ स्व

धाचयत्रतृप्तिश्चतत्रमाममृतंकृधींद्रा० ॥ १४ ॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते ॥ कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधींद्रा० ॥ १५ ॥ ३ ॥ यइंदोःपवमानस्यानुधामान्यक्रमीत् ॥ तमाहुःसुप्रजाइतियस्तेसोमाविधन्मनइंद्रा० ॥ १६ ॥ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः ॥ सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रा० ॥ १७ ॥ सप्तदिशोनानासूर्याःसप्तहोतारऋत्विजः ॥ देवाआदित्यायेसप्ततेभिःसोमाभिरक्षनइंद्रा० ॥ १८ ॥ यत्तेराजञ्छृतंहविस्तनसोमाभिरक्षनः ॥ अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रायेंदोपरिस्रव ॥ १९ ॥ ४ ॥ यत्रतत्परमंपदंविष्णोर्लोकेमहीयते ॥ देवैःसुकृतकर्मभिस्तत्रमाममृतंकृधींद्रायेंदोपरिस्रव ॥ २० ॥ अयंवर्गचतुष्टयार्थः । हेइंदो इंदुनामकपवमान यत्रविष्णुलोके नःअस्माकं जनानां अस्मज्जातीयानांपूर्वमुक्तनानाविधजीवानां धियःबुद्धेः नानानं नानानानाविधंअनंअननं ऋचांत्वःपोषमास्ते सतत्रपर्येतीत्यादिवाक्यानुसारेणऋक्पाठसामगानपुराणपठनहरिध्यानंपरितोगमनादिचेष्टा अस्ति उ एव वै प्रसिद्धं । यत्रमुक्तौनःजनानां वि विविधानि आनंदोद्रेकेणक्रियमाणत्वाद्विशिष्टानिचव्रतानि यज्ञदीक्षितादिव्रतानिसंतिउ संत्येव । अस्यार्थस्यश्रुतिपुराणादौप्रसिद्धिद्योतनार्थं अतएवावधारणार्थंचेदमव्ययद्वयं। यत्रमुक्तौ तक्षा मुक्तकारुः रिष्टं मुक्तिस्थानस्थचिन्मयवृक्षपक्षिपक्षादिभ्योलीलयापतितंवंशशररत्नादिखंडंगरुडादिखंडंचमुक्तानांलीलोचितरत्नमयकार्मुकादिकरणायइच्छति। भिषक्मुक्तवैद्यः तेषामेवखंडानांस्वस्वस्थानेकदाचित्पुनःसंधानायरुतं लीलयाक्रियमाणसंधानकरणमंत्रस्वरं इच्छति। अतएवकारुभिषग्व्यापारयोःसहैवग्रहणं । यत्रब्रह्मा यज्ञशालास्थितोब्रह्मा सुन्वंतं सोमाभिषवणंकुर्वंतंऋत्विजंइच्छति। अत्रापिपुनर्लतापोषणायभिषजउपयोगाद्देहलीदीपन्यायेनमध्येतस्यग्रहणं । तत्र इंद्राय परमैश्वर्यसं ॥ ७०७॥

पन्नाय अतएवसकलमुक्तानामीशायपरमात्मने तत्सेवार्थमित्यर्थः। मां परिस्रव परितःप्रापय । तत्रापिभगवान्मुक्तानामिंद्रएव नतुमुक्ताभिन्नइतिसूचनायइंद्रपदं। तत्सेवार्थमेवममतत्रप्रापणं नतुकेवलंभोगार्थमितिसूचनायचतुर्थी । प्रेरणमात्रेणनाहंगंतुंशक्तः। किंतुत्वयासहैवगंतव्यमितिसूचनायपरिस्रवेतिप्रयोगश्चेतिद्रष्टव्यं ॥१॥अप्रसिद्धत्वादुत्तरार्धप्रमेयंपुनरपिविशदयति॥जरतीभिरिति॥ यत्रमुक्तौ जरतीभिः अनाद्यनंतकालमारभ्यबहुवर्षजीवित्वाज्जरतीभिः वृद्धाभिः ओषधीभिः फलपाकांतवंशशरादिभिः । शकुनानांपक्षिणां पर्णेभिः पत्रैः द्युभिः कांतिमद्भिः अश्मभिःरत्नैःसह कार्मारःकारुः हिरण्यवंतं मध्येमध्येपुंखादौचसुवर्णखचितालंकारवंतं चापंरथंशरादिकंचइच्छतिकर्तुमिच्छति । तत्रमांपरिस्रवेतितुपूर्ववदेव ॥ २ ॥ ननुमुक्तौकार्माराद्यःकथंसंतीत्यतआह ॥ कारुरिति ॥ यत्रमुक्तौ अहं मुक्त्यनंतरमपि कारुः कारुत्वजात्याक्रांतएवास्मीतित्वष्टुर्वचनमिदं । भिषक् अश्विन्यादिदेवसमूहो भिषक् वैद्यजात्याक्रांतएवास्ति । उपलप्रक्षिणी लीलार्थंपट्टणेपट्टणालंकारेपियुक्तपदार्थानामवश्यमपेक्षितत्वाच्चोपलक्षेपणोपयुक्तयंत्रविशेषः । नना चापविशेषदारुतंत्वादिरूपेणनानाप्रकाराऽस्ति । यत्र नानाधियः जीवानांतत्रापिपरस्परंभिन्नत्वाद्भिन्नबुद्धियुक्ताः जीवेश्वरभेदेबुद्धिमंतोवा । वसूयवः वसवः । परवस्तु नारायणं सदायुंजंतीतिवसूयवोमुक्तावा वयंसर्वेअनुगाइव हरेरनुगमनशीलाइवातस्थिम आवर्तेमहि । मध्येउपविष्टंनारायणंपरिवारतयासेवमानानांसर्वदाअनुगमनाभावात् भूमाववतारसमयेपितस्यानुगमनाभावादनुगाइवेत्युक्तं । यथाप्रभोरनुगंतारोपितदाज्ञाधारिणः तथावयमपितदाज्ञाधारिणइत्यत्रतात्पर्यं । तत्रमामित्यादिपूर्ववत् ॥ ३ ॥ यत्रमुक्तौ अश्वः सुखं सुखंयथाभवतितथा रथंवोढा वोढा प्रापयिता । स्त्रीभिर्वायानैर्वेतिवचनात् ।

लसद्विमानावलिभिर्नभस्वतामितिभागवतोत्त्याचमुक्तानांरथस्थतयागमनसद्भावात् रथस्यचाश्वेनैवनेतव्यत्वात् मुक्तोश्वःमुक्ता नांइंद्रादीनांरथंआनंदोद्रेकेणैवनयति । दुःखलेशमात्रमपितस्यनास्तीतिभावेनसुखमित्युक्तं । शेपःशेपौ स्थूलांडवंतौ अर्शआदि भ्यइतिसूत्रात् । ज्ञानानंदमयत्वेनातिमंडलत्वात्फकारस्यपकारः । रोमण्वंतौ सर्वांगेषुरोमवंतौ । भेदौ भिंदतइतिव्युत्पत्त्यापरस्प रंशिरस्ताडनंकुर्वंतौमेषौ । उपमंत्रिणः हरेःसमीपेसेवायोग्यप्रधानपुरुषस्यब्रह्मेंद्रादेर्मुक्तसमूहस्य हसनां हासं सुखं सुखेनैव वोढा रौ प्रापयितारौ । यथासंसारेब्रह्मसभायामिंद्रसभायांचकदाचित्तयोःपरिहासदशायांतत्तल्लोकस्थौज्ञानिभूतमेषौयुद्धंकुरुतः तथा मुक्तावप्यानंदोद्रेकेणैवयुद्धंकृत्वा तयोर्हासंजनयतइतिभावः । इत्इत्थं मुक्तावपिकारुभिषगोषध्यश्वमेषादीनांस्वस्वाजात्युचित लीलावत्मंडूकः वाः उदकं इच्छति यानस्थानामागमनसमये तीरस्थोमंडूकःउदकंप्रवेष्टुमिच्छतीतिभावः । तत्रमामित्यादिपूर्व वत् ॥ ४ ॥ १ ॥ यत्रमुक्तौ आत्मनिबलंदधानः महद्वीर्यंकरिष्यन् वृत्रहाइंद्रः अस्येंद्रस्यमुक्तेर्भावित्वात्करिष्यन्निति भाविप्रयो गः । शर्यणावति शीर्यतेसोमरसोनयेतिव्युत्पत्त्याशर्यणा सोमरससाधकदशापटी तद्वतिपात्रेस्थितंसोमंसोमरसं मुक्तैर्लीलयाक्रि यमाणयज्ञेपिबतु । पास्यतीतियावत् । व्यत्ययोबहुलमितिवचनात् । तत्रमामित्यादिपूर्ववत् ॥ ५ ॥ दिशांपतेहेसोम सोमाभि मानित्वात्सोमपदवाच्य पवमान आर्जीकात् सोमरसार्जकात् ऋत्विजः रसस्रवणार्थंसोमलतांपेषयतःऋत्विजइत्यर्थः । सुतः अ भिमन्यमानलताद्वाराअभिस्रवणमभितःस्रवणंप्राप्तः । अतएवमीढ्वः रससेचनशीलस्त्वं मुक्तावपिमंदवायुरूपेणरससूक्ष्मांशंसंगृह्य दिशिदिशिस्थितमुक्तान्प्रतिसेचनशीलोवा । अतएवदिशांदिशिदिशिस्थितमुक्तानांपतइत्युक्तं । ऋतवाकेन यथार्थज्ञानसूक्तेन सत्ये

न ज्ञानपूर्वककर्मणा। ऋतंयथार्थविज्ञानंसत्यंतत्पूर्विकाकृतिरितिवचनात्। श्रद्धयातपसाचसहआसमंतात्पवस्वपवनंकुरु। पवनंक
रिष्यसीतियावत्। मुक्तिस्थमंदानिलंप्रेरयन्मुक्तिस्थानेसर्वत्रमुक्तब्रह्मरूपेणसंचरिष्यसि। मुक्तावप्यंतःप्राकाराद्बहिःतत्रस्थजीव
न्मुक्तान्आनंदयन्वायुरूपेणयत्रमुक्तौसंचरतिसएनान्ब्रह्मगमयतीतिश्रुतेः। तत्रमामित्यादिपूर्ववत्॥ पवमानस्यमाहात्म्यकथ
नमिदं॥ ६॥ सूर्यस्यदुहितायमुना। पर्जन्यवृद्धं पर्जन्यःवृद्धोयेनेतिव्युत्पत्त्याजलदानेनपर्जन्याभिवृद्धिकरं तं संसारेस्वपतित्वे
नवृतंवरुणं। यत्रमुक्तौमहिषं पतिं आसम्यक् अभरत् बिभृतवती। गंधर्वाः अर्वागंधर्वोश्वइत्यभिधानात् संसारेवरुणाधीनत
यास्थितायागयोग्याश्वाःतंवरुणंयत्रमुक्तौप्रत्यगृह्णन् स्वामित्वेनगृहीतवंतः। मुक्तावपितदधीनतयैवस्थिताइतिभावः। तं संसारे
सोमरसाभिमानिवरुणं। यत्रमुक्तौसोमे मुक्तसोमलतायां। रसं रसस्वामित्वाद्रसशब्दवाच्यंआदधुःकृतवंतः। तत्रेत्यादिपूर्ववत्
॥ ७॥ हेऋतद्युम्न ऋतंयथार्थज्ञानमेवद्युम्नं द्रविणंयस्यतत्संबुद्धिः हेऋतद्युम्न सत्यकर्मन् सत्यानां यथार्थज्ञानपूर्वकयागादिक्रि
याणां कर्मयस्यतत्संबुद्धिः। राजन् मुक्तानामधिपते हेसोम सोमाभिमानित्वात्सोमपदवाच्यवायो त्वं यत्रमुक्तौसोम मुक्तौविद्यमा
नचिन्मयसोमरसाभिमानित्वात्सोमपदवाच्य त्वं ऋतंवदन् सत्यंवदन् श्रद्धांवदन् धात्राब्रह्मरूपेणपरिष्कृतः अलंकृतस्तिष्ठसि।
वायोःमुक्तौब्रह्मरूपेणैवावस्थानस्यशास्त्रसिद्धत्वादिदमुक्तं। तत्रेत्यादिपूर्ववत्॥ ८॥ हेहरे विशेषसंनिधानवत्त्वाद्धरिशब्दवा
च्य पवमान उग्रस्य शत्रूणांभयंकरस्य बृहतः अधिकारिषुसर्वोत्तमस्य यस्यतवआज्ञया संस्रवाः सम्यक्स्रवणशीलानद्यः संस्रवं
ति सम्यग्वहंति। रसाः मधुरादिरसाः रसिनः रसवतःपदार्थान् संयंति प्राप्नुवंति। सत्वं यत्रमुक्तौब्रह्मणा ब्रह्मरूपेणपुनानः पा

वयंस्तिष्ठसि । सत्यं इदंवचनमयमर्थार्थेन । तत्रेत्यादिपूर्ववत् ॥ ९ ॥ हेपवमान यत्रमुक्तौ छंदस्यां छंदःसंबंधिनींवाचंवदन्ब्रह्मा ग्राव्णा सोमलतापेषणोपयुक्ताश्मना स्रुतेनसोमेन सोमरसेन आनंदं सोमरसपातॄणामिंद्रादीनांस्वरूपानंदंजनयन्प्रादुर्भावयन् सोमे सोमलताप्रधानत्वात्सोमशब्दवाच्येयज्ञेमहीयते सर्वैःपूज्यते तत्रेत्यादिपूर्ववत् ॥ १० ॥ यत्रमुक्तौ अजस्रंसर्वदाज्योतिस्तिष्ठति । वैकुंठलोकप्रकाशस्यलक्ष्मीस्वरूपत्वेनानाद्यनंतत्वद्योतनायाजस्रमित्युक्तं । यस्मिन्लोके वैकुंठलोके स्वः सुखं हितंनिहितं । हे पवमान अमृते नविद्यतेमृतंमरणंयत्रेत्यमृतशब्दवाच्ये अक्षिते अनाद्यनंतकालेपिक्षयरहिते । तत्रत्यजनानांमरणाभावद्योतनार्थंविशेषणं । लोकस्यैवस्वरूपतोनाशाभावद्योतनायद्वितीयमितिविवेकः । तस्मिँल्लोके । यद्यपीदंलोकपदं सामान्यपदं । तथापिपरिशिष्टेविष्णोर्लोकइतिस्पष्टोक्तेःतत्रापिवैकुंठस्यैववाचकं । मांधेहि निक्षिप । त्वंच इंद्राय इंद्रमुद्दिश्य। परिस्रव अस्मदादिमुक्तानादायपरितोगच्छ । मांधेहीतिपृथगुक्तेरस्मिन्वाक्येयथास्थितैवयोजना ॥ ११ ॥ यत्रवैकुंठलोके वैवस्वतः यमः राजा प्रजारंजकएवनभीषकः । तत्रत्यप्रजानांमृत्युभयरहितत्वादितिभावः । यत्रवैकुंठलोके दिवः स्वर्गस्य अवरोधनं अंतःपुरस्त्रीजनः अस्ति । यत्रयह्वतीः परितोगच्छंत्यः । अमूःआपः अबभिमानिदेवताःसंति तत्रमांअमृतं मुक्तं कृधिकुरु । त्वंचेंद्रायपरिस्रव ॥१२॥ त्रिनाके दुःखरहितत्वान्नाकशब्दवाच्यवैकुंठानंतासनश्वेतद्वीपाख्यलोकत्रयवत्त्वात्रिनाकशब्दवाच्ये त्रिदिवे त्रयःदिवः सदाप्रकाशमानसूर्यैंद्वग्न्याख्याःयत्रेतिव्युत्पत्त्यात्रिदिवशब्दवाच्ये । यत्रमुक्तौ दिवः ज्योतीरूपमुक्तसमूहस्य अनुकामं इच्छानुसारेण चरणं संचरणं अस्ति । यत्रमुक्तौज्योतिष्मंतःलोकाः त्रिनाकपदेनसूचिताःसंति । तत्रेत्यादिपूर्ववत् ॥१३॥ यत्रमुक्तौ कामाः स्वयोग्यविषये



च्छाः निकामाः नितरांकाम्यंतइतिनिकामा विषयाश्चसंति । अन्यथासत्यसंकल्पत्वाभावप्रसंगात् । यत्रमुक्तौब्रध्नस्यसूर्यस्य विष्टपं स्थानं । यत्रमुक्तौ स्वधाच स्वधाशब्दवाच्यपितृपत्नी चशब्देनस्वाहाशब्दवाच्याग्निपत्नीच । तृप्तिश्चास्ति । तत्रेत्यादिपूर्ववत् ॥ १४ ॥ यत्रमुक्तौभगवतोमध्यदक्षिणपक्षवामपक्षशिरोरूपाःतत्प्रतिबिंबभूतजीवानांपंचावयवरूपाश्च आनंदाः मोदाः मुदः प्रमुदश्च । आप्ताः भगवतोनिरवधिकसंपूर्णाः । अन्येषांयथायोग्यंसंपूर्णाः आसते । यत्रकामस्यइच्छायाः कामाःकाम्याः विषयाश्च आप्ताःआसते । पूर्वोक्तविषयनिरपेक्षसुखचतुष्टयात्पंचमस्यविषयाभिव्यंग्यप्रियनामकसुखस्यव्यंजकविषयसापेक्षतयाविजातीयत्वात्पार्थक्यकथनं । तत्रेत्यादिपूर्ववत् ॥ १५ ॥ ३ ॥ हेसोम पवमान यःपरमात्मा इंदोःपवमानस्य तेतव अनुधामानि अनुकूलस्थानानि अक्रमीत् आक्रम्यतस्थौ । देहेपियत्रपवनोत्रेत्यादिनोक्तस्य यत्रयत्रमुख्यप्राणस्तिष्ठति तत्रतत्रहरिरपितिष्ठतीतिनियमस्य प्रामाणिकत्वसूचनायेदमुदितं । यश्चतेमनःअविध्यत् । मनोंतःसर्वदातिष्ठतीत्यर्थः । तं सुप्रजाः उत्तमजीवाः इति मदुक्तप्रकारेणआहुः । नकेवलमिदंमहिमद्वयंमयैवकथ्यते । किंतुइममेवमहिमानंसर्वेपिसज्जनावदंतीतिभावः । तस्मैइंद्रायमांपरिस्रव ॥ १६ ॥ ननुसोमसूक्तेस्मिन्कथंमुख्यप्राणस्यप्रार्थनमित्यतःसएवमुख्यतःसोमलताभिमानित्वान्मुख्यःसोमः । चंद्रस्त्ववांतराभिमानित्वादमुख्यसोमइतिप्रतिपादयन् सोमयागादिनिवृत्तिकर्मसाध्यंमोक्षंमुख्यप्राणंप्रतिप्रार्थयते ॥ ऋषइति ॥ मंत्रकृतांऋष्यादीनां स्तोमैः नमस्य नमसोयोग्य नमस्कार्येत्यर्थः । कश्यप कात्परमात्मनः प्राप्यस्य शंपदवाच्यसुखस्य योग्याःकश्याःमुक्तियोग्याः । तान्पातीतिकश्यपऋषे सर्वज्ञ पवमानप्रायपाठविरोधेनऋष्यंतरस्यात्राग्राह्यत्वादुक्तएवार्थः । गिरः वेदपुराणादिवाचः

उद्बर्धयन् अपव्याख्याप्रत्याख्यानेनयथास्थितार्थकथनेनचवर्धयन् वीरुधांसोमलतानांपतिः मुख्यस्वामीयोभवान् राजानंचंद्रं
सोमंसोमलतायाअवांतराभिमानित्वात्सोमपदवाच्यं । जज्ञेजनयामास । मुख्यसोमस्यमुख्यप्राणस्यचंद्रेप्याविष्टरूपेणसहजननम
स्तीतिसूचनायजज्ञइत्युक्तं । हेइंदोसत्वं इंद्रायमांपरिस्रवेतियोजना ॥ १७ ॥ यत्रमुक्तौ दिशःदिगभिमानिदेवाःसप्तसंति । कल्पे
कल्पेमुक्ताः एकादशसंख्याकाःनानासूर्याश्चसंति । होतारः अग्निष्टोमादिप्रधानभूतसप्तक्रतुषुहोतारःसप्तसंति । आदित्याः इंद्र
स्यैवाज्ञयाअदित्यापुत्रत्वेनवृताःदेवाः सप्ततेषुप्रधानकाइतिवचनात्मरुद्गणेषुप्रधानभूताःप्रवहाद्याःयेसप्तमरुतश्चसंति । हेइंदोसो
म नःइंद्रायपरिस्रव । तेभिःसहअभिरक्ष । अस्मानपिभगवत्समीपंप्रापयित्वातेषांपुंजेप्रवेश्यरक्षेतिभावः ॥ १८ ॥ हेराजन्सोम यद्य
स्मात्तेतव त्वामुद्दिश्येत्यर्थः । हविःश्टतं पक्वंकृतं । तेनकारणेन नः अभिरक्ष । अरातिवा अरातिंशत्रुंवायति कंपयतीतिअरा
तिवाः । वोविधूननेइतिसूत्रात्वाजनंकंपनं । रातिंरक्षणंवापयतिप्रापयतीतिअरातिवा । वागतिगंधनयोरितिधातोः । आममत्
आमं चक्रकृततापरहितंपुरुषंमश्नातीतिआममत् । अतप्ततनूर्नतदामोअश्नुतइतिश्रुतेः । यःपरमात्मा नःअस्मान् मातारीत्अतारीत् ।
अतिक्रम्यगतवान् । यश्चपरमात्मा नःअस्माकं । मो मा किं नभवतिकिं । भवत्येव अस्माकंस्वामीतियावत् । यश्चपरमात्मा नोअस्माकं
मते किंचन जगत् मो मा नभवति । सकलजगद्भिन्नइतिवा । नोइतिवत्मोइत्यपिनिषेधार्थकमव्ययमस्ति । अतःश्रुतिरुभयथाप्यवदद्दि
तिज्ञातव्यं । हेइंदोपवमान तस्मैइंद्राय नःपरिस्रवेतिसंबंधः ॥१९॥४॥ यत्रविष्णोर्लोके तत् विष्ण्वाख्यंपरमंउत्तमं पदं पद्यतइतिव्यु ॥७१०॥
त्पत्त्यासकलमुक्तगम्यंवस्तु सुकृतकर्मभिः सुष्टुकृतयज्ञादिकर्मभिःदेवैः महीयते । हेइंदोतत्रमाममृतंकृधि । इंद्रायपरिस्रव ॥२०॥

इममेवार्थंग्रंथगौरवभयाल्लेशतोदर्शयामीतिभावेनोक्तं ॥ तच्चकिंचिद्विवृण्महइति ॥ ९४२ ॥ तद्वाक्यं तत्रमाममृतंकृधीतिवा

जरतीभिःकारुरहमश्वोवोढेतिवाक्तयं ॥ वक्तिवैकुंठमाहात्म्यंतच्चकिंचिद्विवृण्महे ॥ ९४२ ॥

कार्मारःकारुजातीयोयत्रमुक्तौहरेःपुरि ॥ जरतीभिःप्रवृद्धाभिरोषधीभिश्चिदात्मभिः ॥ ९४३ ॥

वंशादिभिर्ध्वजंचापंबाणवेणुरथादिकं ॥ क्रीडायैरचितंदिव्यंशकुनानांपतत्रिणां ॥ ९४४ ॥

पर्णैःपत्रैर्दिशखंडाद्यैर्द्युभिर्द्योतनकारिभिः ॥ अश्मभिश्चित्ररत्नैश्चचित्रितंपुनरिच्छति ॥ हिर

ण्यवंतंकर्तुंचतत्रमाममृतंकृधि ॥ ९४५ ॥ प्रायपाठबलादत्राप्येतद्वाक्यंकिलोह्यते ॥ परिस्र

वस्त्रावयेंदोतत्रमामितिवाभवेत् ॥ ९४६ ॥ यत्रकारुरहंत्वष्टायत्रास्तेजातितोभिषक् ॥ यत्रो

पलक्षेपणीचननानानाविधःकिल ॥ ९४७ ॥ नानाधियस्तारतम्यबुद्धयोवसवोखिलाः ॥

विचित्रवसुयुक्तावामुक्तास्सर्वेऽनुगाइव ॥ ९४८ ॥ वयंतस्थिमकृष्णस्यतत्रमाममृतंकृधि ॥

अवतारेऽनुगमनाभावात्सर्वेऽनुगाइव ॥ ९४९ ॥ यत्रविष्णोस्समीपस्थसामंतस्यप्रधानिनः ॥

उपमंत्रिपदोक्तस्यमुक्तशक्रादिरूपिणः ॥ ९५० ॥ रथंज्ञानानंदमयमश्वोमुक्ततुरंगमः ॥ सुखं

सुखेनैववोढापर्यंकप्रापयिताकिल ॥ ९५१ ॥ ॥ ॥

कयं । यथास्थितपदयोजनापिघटतइत्याह ॥ परिस्त्रवेति ॥९४३॥९४४॥९४५॥९४६॥९४७॥९४८॥९४९॥९५०॥ ज्ञानानंद

प्रधानं दर्शनायसुखकरंचेत्यर्थः ॥ ९५१ ॥ तस्यमेषद्वयस्य ॥ ९५२ ॥ महच्छ्रेयः अखंडसुखं सुखमयमितिप्राचीनसुखपदा
रोमण्वंतौरोमवंतौमेषौज्ञानशरीरिणौ ॥ तौभेदौपुरतस्तस्यमिथस्ताडनकारिणौ ॥ ९५२ ॥
सुखंसुखेनैवदुःखंवैराद्यंतुनकिंचन ॥ मुक्तत्वात्तस्यशेपोंडंमहत्सुखमयंसदा ॥ ९५३ ॥ हंसा
नांमंत्रिणस्तस्यवोढारौयत्रलीलया ॥ यद्धितइतिभेदौचस्यातांभेदनकारिणौ ॥ ९५४ ॥ यदि
त्थंयत्रमंडूकावाःसरोवरवारिच ॥ इच्छंतिचित्सुखाकारास्तत्रमाममृतंकृधि ॥ जात्येकवचनं
चेदमेकभेकंसरःक्वतत् ॥ ९५५ ॥ एवंनानाविधामुक्तायत्रतत्रामृतंकृधि ॥ इत्युक्त्यातद्गजीवा
नांमुक्तत्वंसुतरामभूत् ॥ ९५६ ॥ तदुत्तरर्चांचर्चांचर्किंचित्किंचिद्विविच्यते ॥ अमृतेअक्षिते
यत्रलोकेसुकृतकर्मभिः ॥ सुष्टुचीर्णनिवृत्ताख्यमुक्तिसाधनकर्मभिः ॥ ९५७ ॥ देवैर्महीयते
विष्णोःपरमंतत्पदंसदा ॥ तत्रामृतंमांकृधींदोपवमानेष्टदायक ॥ ९५८ ॥ इंद्रायपरमैश्वर्यसं
पन्नायपरिस्रव ॥ परितस्स्रावयेंद्रंतमुद्दिश्यप्रापयाशुमां ॥ ९५९ ॥ णिचोंऽतर्नीततातस्यसह
प्राप्तिविवक्षया ॥ इत्यर्थनांमुमुक्षूणांकर्णेद्यापिजपंतियां ॥ ९६० ॥ यत्रानंदाश्चमोदाश्चमुदःप्र
मुदआसते ॥ कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधि ॥ ९६१ ॥ ॥ ॥
वृत्त्याअर्थांतरकथनं । अस्मिन्पक्षेशेपःपदस्ययथास्थितविभक्तिरेवेतिगुणः ॥ ९५३ ॥ ९५४ ॥ यद्यस्मात् ॥ ९५५ ॥

तद्गजीवानां लोकस्थमंडूकादिजीवानां ॥ ९५६ ॥ ९५७ ॥ ९५८ ॥ ९५९ ॥ ९६० ॥ ९६१ ॥ ९६२ ॥ कामाप्तिव्यक्तं तत्सौख्यं तेषांमुक्तानांप्रियाख्यंसौख्यंयतस्तेषांमनःप्रियं अतस्तथोच्यते ॥ ९६३ ॥ ९६४ ॥ बहुतां आनंदाश्चमोदाश्चेत्यादिना बहुतां । एवं आनंदादीनांबाहुल्योक्तिबलेन मुक्तानामप्यत्रग्राह्यत्वात्तत्सरूपाणां तस्यविष्णोःसमानरूपाणां । आकृतेः बलात् युक्तिबलात् । पंचानंदरूपतांजगावितिपूर्वेणान्वयः ॥ ९६५ ॥ पूर्णमुद्रूपतां संपूर्णमुदाख्यानंदविशेषरूपतां । पूर्वसमाख्यया

इतिश्रुतेश्शिरःपाणिद्वयमध्यांघ्रिरूपिणः ॥ प्रियमोदप्रमोदानंदमुदाख्यास्सदासते
॥ ९६२ ॥ कामाप्तिव्यक्ततत्सौख्यंयतस्तेषांमनःप्रियं ॥ ९६३ ॥ आनंदमयरूपस्यह
रेस्सारूप्यमीयुषः ॥ मुक्तांश्चताद्दशाकारान्सर्वान्शंसतिसाश्रुतिः ॥ ९६४ ॥ प्रत्येकं
बहुतांयस्मादानंदादेश्चसाजगौ ॥ एवंचतत्सरूपाणांमुक्तानामाकृतेर्बलात् ॥ ९६५ ॥
आनंदमयपादस्यब्रह्मपुच्छमितिश्रुतिः ॥ पूर्णमुद्रूपतामेवप्राहपूर्वसमाख्यया ॥ ९६६ ॥
प्रियादिपूर्णतांतत्तच्छ्रुतिरेतत्समाख्यया ॥ शंसतीत्येवसिद्धोर्थोनोचेद्व्यर्थात्रतत्कथा ॥ ९६७ ॥

यजुर्वेदात्पूर्वविद्यमानऋग्वेदस्थैतद्वाक्यसमाख्यया । तस्मिन्नेवपूर्वोक्तमोदादिसुखसमाख्ययावा ॥ ९६६ ॥ तत्तच्छ्रुतिः तस्यप्रियमेवशिरइत्यादिश्रुतिः । एतत्समाख्यया ब्रह्मपुच्छमितिश्रुतिसमाख्ययाशिरःपाण्यादीनांसुखरूपत्वसिद्धिः । पादस्यब्रह्मपदेन पूर्णत्वकथनात्शिरःपाण्यादीनामपिपूर्णत्वसिद्धिः । अन्यथैकरूपस्थपंचावयवानांवैरूप्यप्रसंगइतिभावः । अत्र मुक्तप्रकरणे ।

तत्कथा मुदाख्यसुखकथा ॥ ९६७ ॥ यद्यस्मात्एतेमुक्ताः । तारकंनारायणं ॥ ९६८ ॥ ९६९ ॥ ९७० ॥ ९७१ ॥ यत्रज्योति
रजस्रमित्यस्यार्थकथनं ॥ नित्यंयत्रकिलेति ॥ त्रिनाकपदस्यार्थकथनं ॥ निर्दुःखत्रिपुरीरूपेति ॥ ९७२ ॥ इतःएतद्वर्गचतु

यत्स्वाकृत्यामुकुंदस्यमुक्तानिर्णन्पुराकृतिं ॥ तत्तीर्णसरितोप्येतेतारकंनविसस्मरुः ॥ ९६८ ॥ यत्रब्र
ह्माचमुक्तोस्तियत्रब्रध्नस्यविष्टपं ॥ मुक्तसूर्यस्यसदनंयत्रवैवस्वतोयमः ॥९६९॥ मुक्तस्सत्रंजनात्तेषां
राजानतुभयंकरः ॥ दिवोवरोधनंयत्रस्वर्गांतःपुरयोषितः ॥ ९७० ॥ मुक्ताःसत्यःस्वर्गिभिस्तैर्मुक्तैस्स
हकिलासते ॥ मुक्तब्रह्मादिदेवानामास्थानीकिलसापुरी ॥ ९७१ ॥ नित्यंयत्रकिलज्योतिःकिंवा
च्यातस्यनित्यता ॥ निर्दुःखत्रिपुरीरूपासापिनाकाभिधाकिल ॥९७२॥ इतोन्यायादिमुक्तिस्स्यात्सै
वप्राथ्र्यामुमुक्षुभिः ॥ प्रत्यृचंप्राथ्र्यमानेयंमहामुक्तिर्नसंशयः ॥ ९७३ ॥ एवंचपवमानस्यगुरुत्वेमुक्ति
मीयुषां ॥ बहुत्वेविष्णुसेवित्वेतल्लोकस्यक्षयोज्झितौ ॥ ९७४ ॥ तत्प्राप्तेर्मुख्यमोक्षत्वेतत्रजात्यपरि
क्षये ॥ भेदस्यपरमार्थत्वेतद्वानांमृतिवर्जने ॥ ९७५ ॥ विष्णोःपरमदैवत्वेतदन्यब्रह्मवर्जने ॥ निश्शं
कोभवदुर्मार्गंत्यजभक्त्याभजप्रभुं ॥ यद्वाङ्निरवकाशेयंतद्दोग्ध्यखिलमीप्सितं ॥ ९७६ ॥ अतश्शुभ
गुणांभोधिश्शुद्धस्सर्वविलक्षणः ॥ सत्यविश्वाश्रयोमुक्तामुक्तेशोजयतिप्रभुः ॥ ९७७ ॥ ॥

ष्टयोक्तभगवल्लोकात् ॥ ९७३ ॥ ९७४ ॥ ९७५ ॥९७६॥ सौरभपंचकार्थमनूद्यभगवंतंस्तुवन् वस्तुनिर्देशाख्यमंगलेनग्रंथमुपसं

हरति ॥ अतइति ॥ ९७७ ॥ विपत्तौतत्परिहाराय संपत्तौतद्दातुरविस्मरणाय संपत्स्थैर्यायच हरिभक्तेनसर्वोत्तमोहरिरेवप्रार्थ्यो नान्यइत्यत्रदृष्टांतमाह ॥ वित्तैरिति ॥ रिक्तः शून्यः । जात्युच्चः । जात्याश्रेष्ठः । उत्तमजीवइत्यर्थः । अत्यल्पं लौकिकराजादिकं । ऋक्षेशः नक्षत्राधिपतिश्चंद्रः । सुक्षीणश्चासौऋक्षेशश्च तस्यरक्षा सुक्षीणर्क्षेशरक्षा । क्षीणपंचदशकलश्चंद्रोऽमावास्यायांसूर्यमेत्यततएकांसुषुम्नाख्यांतेजःकलां संगृह्य प्रतिपत्तिथिमारभ्याभिवृद्धोभवतीतिपौराणिकीप्रथा । एवंसोमवंशोत्पन्नक्षत्रियकुला

वित्तैरिक्तोपिजात्युच्चोनात्यल्पमुपसर्पति ॥ सुक्षीणर्क्षेशरक्षास्यादर्कोदर्कश्रियैवहि ॥ ९७८ ॥
तत्संपत्तौविपत्तौचगतिश्श्रीपतिरेवनः ॥ योब्रह्मरुद्रवींद्रेंद्रचंद्रादीनामधीश्वरः ॥९७९॥ नान्यं
भजामिनस्तौमिनानुयामिकदाचन ॥ हरिंचहरिपत्नींचसुरादींश्चगुरून्विना ॥९८०॥ भक्तिस्स्या
त्त्वयिगोविंदतृप्तिस्स्यात्त्वन्निषेवया ॥ त्वत्तोन्यत्रविरक्तिस्स्यान्मुक्तिश्चस्यान्मुकुंदमे ॥ ९८१ ॥
अस्मिन्भवेभवेऽन्यस्मिन्भवांतेचभवामते ॥ दासानुदासाःश्रीनाथत्रातात्वंनस्सदाभव॥९८२॥
पद्याख्यसूत्रबद्धेयंहृद्यास्याद्युक्तिमल्लिका ॥ पद्मनाभस्यमध्वस्यविद्यायाश्चमनःप्रिया ॥ ९८३ ॥

ग्रेसरतयाउच्चेनचंद्रेण सूर्यवंशाधिपतित्वेनोच्चस्यसूर्यस्यैवप्रार्थना द्भगवद्भक्तत्वेनोत्तमोजीवः स्वसंकटेपिभगवंतमेवाश्रयेन्नत्वन्यमितिभावः ॥ ९७८ ॥ एतदेवदर्शयति ॥ तदिति ॥ तत्तस्मात् ॥ ९७९ ॥ ९८० ॥ ९८१ ॥ भवांते जन्मनोंते । मुक्तावित्यर्थः ॥ ९८२ ॥ स्वकृतयुक्तिमल्लिकाख्यग्रंथंहरौगुरौचसाहित्यमुद्रयासमर्पयति ॥ पद्याख्येति ॥ एकैकपद्यस्यापितत्रतत्रोक्त

विधयाबह्वर्थसूचकत्वात्पद्याख्यसूत्रेत्युक्तं । रज्जुरितिध्वनिः । विद्यायाः शारदादेव्याः ॥ ९८३ ॥ साहित्यमुद्रयैव सकलविदुषा
मुपकारिणीयंकृतिरित्याह ॥ हयग्रीवेति ॥ ९८४ ॥ स्वकृतग्रंथंप्रति त्वमपि भगवंतमेवसदास्तुहीतिसयुक्तिकंबोधयति ॥ यइ
ति ॥ मल्लीमतल्लीषुपदंदधानेत्यादौ मल्लिकायामल्लीपदस्यापिप्रयोगात्हेयुक्तिमल्लीतिस्वकृतग्रंथस्यसंबुद्धिः । वल्लभःस्वामी । सौ
रभैः । पंचसौरभैः । परिमलैरितिध्वनिः ॥ ९८५ ॥ मध्वाचार्यकृतभाष्यादिषुस्थितचातुर्याभ्यासबलेनैवस्वकृतग्रंथेपिचातुर्यला

हयग्रीवपदांभोजमधुमत्तमधुव्रतैः ॥ सदासेव्यावादिराजरचितायुक्तिमल्लिका ॥९८४॥
योयुक्तिमल्लितेफुल्लपल्लवोल्लासवल्लभः ॥ अंचा हिमंचं रम्यंच तंप्रांचंत्वंचसौरभैः
॥ ९८५ ॥ यद्वाङ्मूलासिमध्वोसौविस्तारयतुतेगुणान् ॥ दशप्रमतयोयस्यदशचाकृतयः
प्रभोः ॥ वल्लीधुरंधरोयोसौपुष्पवाटीधुरंधरः ॥ ९८६ ॥ बीजावापःप्ररोहश्चपल्लवःप्रसवा
निच ॥ यत्प्रबंधःप्रचारश्चविद्वन्मध्वस्यशक्तितः ॥ ९८७ ॥ ॥ ॥

भादादिगुरुंस्वस्यपरमोपकारकंतंस्तौति ॥ यद्वागिति ॥ यस्यमध्वस्यवाचएवमूलानियस्याःसायद्वाङ्मूला । असौ वायोरवता
ररूपः । मल्लिकागुणस्यवायोरंशेनैवविस्तार्यत्वादितिभावः । यस्यमध्वस्य । दशआकृतयः प्राणापानव्यानोदानसमानाः कूर्मानं
तकृकलदेवदत्तधनंजयाख्याः ॥ ९८६ ॥ पुष्पवाटीपुष्पवनं । वल्लीवनस्थैकापुष्पलता । यःपुष्पवाटीधुरंधरः असावेववल्लीधुरंधर



इतिसंबंधः । तस्माद्युक्तिमल्लिकायाःप्रचारोपिमध्वमुनिनैवकर्तव्यइतिभावः ॥ ९८७ ॥ युक्तिमल्लिकाकरणेनोत्पन्नपुण्यमपिमुख्यं
मुख्यप्राणस्यैवेत्यत्रसाहित्यमुद्रयायुक्तिमाह ॥ बीजेति ॥ प्ररोहः अंकुरः । यद्यस्मात् । प्रबंधः मालारूपेणपुष्पबंधनं ॥९८८॥
क्रयोत्थवित्तसंपत्त्या क्रयेण विदुषामलंकारायतत्रदानेनउत्थंवित्तंपुण्याख्यवित्तं तस्यसंपत्त्या । तत्तस्मात्गुरुर्मध्वः ॥ ९८९ ॥
स्ववनंस्वग्रंथः । स्वगृहं स्वस्यगृहभूतं ममशरीरं । स्वाध्वा स्वकीयोवैष्णवमार्गः । स्वराजनगरीषुवैकुंठादिषु । सए

क्रयोत्थवित्तसंपत्त्यातत्पूर्णोगुरुरेवनः ॥ तद्दत्तवित्तभुग्योहंतत्परीचारमाचरन् ॥ ९८८ ॥
गृहेषुगृहकृत्यानिकुर्वन्पथिपदानुगः ॥ तेनराजांतिकंनीतस्सोहंसेवाधुरंधरः ॥ ९८९ ॥ स्वव
नंस्वगृहंस्वाध्वस्वराजनगरीषुच ॥ सएवममयोगींद्रोयोगक्षेमधुरंधरः ॥ ९९० ॥ श्रुतिस्मृति
निषंगोत्थमंत्रास्त्रैर्यस्समंततः ॥ हिमालयस्यमलयस्यचमध्येऽजयत्खलान् ॥ ९९१ ॥ सोंतः
प्रविश्यदुश्शास्त्रपुर्यास्सर्वस्वशोधनं ॥ महाराजोममगुरुस्तुच्छंकार्यमुपैक्षत ॥ ९९२ ॥ वि
द्यादारिद्र्यदोषेणदुःखीतत्सैन्यभिक्षुकः ॥ अहमर्थातुरस्तांतुप्राविशंतद्भटैस्सह ॥ ९९३ ॥

वमध्वएव ॥ ९९० ॥ अधुनामध्वकिंकररुद्रादिदेवताकृपयाचार्यंग्रंथोजातइतिसूचनायपुनरपिमध्वमेवस्तौति ॥ श्रुतिस्मृतीति॥
मंत्रास्त्रैःमंत्ररूपवागाख्यास्त्रैः ॥ ९९१ ॥ सःमध्वः दुःशास्त्रपुर्याःअंतःप्रविश्येतिसंबंधः । महाराजस्यपरपुरीस्थगेहांतःस्थितक्षुद्र
द्रव्याशयातत्प्रवेशस्यानुचितत्वात् तुच्छंकार्यमित्युक्तं । सर्वज्ञस्यमध्वस्यवेदपंचरात्रादितएवव्युत्पत्तिः । नतुदुश्शास्त्राभ्यासेनेति

भावः॥९९२॥९९३॥ तत्सैन्यभिक्षुकः तस्यमध्वस्य सैन्ये देवऋषिगंधर्वमनुष्योत्तमपर्यंतसेनायांयाचकः। तेषांकृपयाईषद्विद्याभ्या सवानितिभावः । तां परदर्शनाख्यपुरीं । तद्भटैः तमोयोग्यानांदुष्टानांमोहनायचार्वाकपाशुपतादिदुर्दर्शनेषुप्रविष्टैर्बृहस्पतिपशुपत्यादिमध्वभटैः ॥ ९९४ ॥ तएव बृहस्पत्यादयएव । तत्रतत्र तेषुतेषुग्रंथेष्वेव । दुस्तर्कतस्करान्जघ्नुः । पूर्वोत्तरविरुद्धभाषणेन पूर्वार्थमुत्तरेणजघ्नुः उत्तरार्थंचपूर्वेणजघ्नुरितिभावः । ससंभ्रमोच्चस्वरकृत् संभ्रमेणसहरुद्रादीनामपि उच्चैः दोषंमेहरहेहरेत्यादि

दुस्तर्कतस्करान्जघ्नुस्तत्रतत्रतएवहि ॥ ससंभ्रमोच्चस्वरकृत्सोहंमेलनकृत्परं ॥ ९९४ ॥ पती
नांमरणात्सर्वादुर्वाङ्नारीर्गृहेगृहे ॥ स्वार्थैस्सहान्योन्यघातैर्हतावीक्ष्याफलांपुरीं ॥ ९९५ ॥
उपेक्ष्यार्थांश्चतांस्त्यक्त्वानिर्गतोहंततोबहिः ॥ कथामेतामकथयंसर्वांगुर्वग्रतोमम ॥ कृतीस
सुकृतीनांतुकथांकृतिमकारयत् ॥ ९९६ ॥ स्वकोशस्थसदर्थाख्यवित्तैर्दत्तैस्सएवतत् ॥ वि
द्रावयेद्धिदारिद्र्यंदद्यान्मध्वोगतिंचमे ॥ ९९७ ॥ ॥ ॥

स्तोत्रपाठेनस्वरकृत् । तेषांरुद्रादीनांमेलनंमन्मनस्येवहरेःपरिवारतयास्थापनं । तस्यकृत् । परदर्शनदूषणेसमर्थोप्यहंपरदर्शनदूषकाणांरुद्रादीनांस्तोत्रपाठादिनाचरणस्मरणंकरोमीतिभावः ॥ ९९५ ॥ पतीनां स्वरक्षकाणांदुस्तर्काणां मरणात् सुंदोपसुंदवत् परस्परंकलहेनमरणात् । अन्योन्यघातैः तर्कविरोधद्वारावाक्यानाममपिमिथोविरोधैः । स्वार्थैःसहहताःदुर्वाङ्नारीःवीक्ष्येतिसंबं

धः । तान्विरुद्धान् । ततः परदर्शनाख्यपुरीतः । साक्षादाविश्यचरुद्रादिदेवैःकृतेषुदुःशास्त्रेषुदूषणबुभुत्सयाप्रविष्टोहंरुद्रादीना मेवकृपयातत्रत्यदूषणानिदृष्ट्वादुष्टमिदंशास्त्रंनविवेकिभिःपाठ्यमितिधिक्कृत्यागतइतिभावः । एतांकथां परदर्शनवाक्येषुपरस्परं विरोधादिकथां । कृतिंयुक्तिमल्लिकारूपकृतिं ॥ ९९६ ॥ ९९७ ॥ तत्तस्मात्परदर्शनेषुविद्याख्यवित्तालाभेनमदीयविद्यादारिद्र्या

नशास्त्राभिज्ञानानचनियमयुक्तानयमिनोनमंत्रानुष्ठानव्रतचरणचित्ताअपिवयं ॥
नतद्यल्लोपेतास्तदपिचतुराएवनितरांवदामोयद्दिष्ट्याहयवदनतुभ्यंनमइति ॥ ९९८ ॥
आचार्यःपवनोस्माकमाचार्याणिचभारती ॥ देवोनारायणश्श्रीशो देवीमंगलदेवता
॥ ९९९ ॥ वादिराजाख्ययतिनासाधितायुक्तिमल्लिका ॥ मुक्तिसौरभसर्वस्वमित्थंस
त्सुन्यवेदयत् ॥ १००० ॥ ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वादिराज
तीर्थश्रीपादविरचितायांश्रीमद्युक्तिमल्लिकायांफलसौरभसर्वस्वंसंपूर्णं ॥ ॥
॥ श्रीमद्वादिराजबंधवेहयवदनायनमः ॥

परिहारात् ॥ ९९८ ॥ ग्रंथकारस्स्वगर्वपरिहारंकुर्वन्स्वेष्टदेवतांप्रणमति । नशास्त्राभिज्ञाइति ॥ ९९९ ॥ भारत्याः भारतीपतेः लक्ष्म्याः लक्ष्मीपतेश्च कृपयाअस्यग्रंथस्यसाधितत्वात्तान्सर्वान्स्वस्यगुरुत्वेनदेवतात्वेनचस्तुवन् अंतेवाचनिकंचमंगलमाचरति

॥ आचार्यइति ॥ मुक्तिसौरभसर्वस्वं मुक्तिसौरभसंपदं ॥ १००० ॥ अनिंद्यायसुरश्रेणीवंद्यायगुणसिंधवे ॥ हयग्रीवायमहते हयग्रीवायतेनमः ॥ १ ॥ सुरोत्तमाख्ययतिनाकृताभावविलासिनी ॥ भूयाच्छ्रीरमणप्रीत्यैमध्वस्यचमुदेसदा ॥ २ ॥ प्रारंभमात्रंतुमयाकृतंप्राग्गुर्वनुज्ञया ॥ पूर्तिस्तुवादिराजाख्ययोगींद्रेणैवसाधिता ॥ ३ ॥ यत्राश्रुतचर्चाचर्चास्तियुक्तयश्चाश्रुताःपुरा ॥ तन्मूलंसाचटीकेयंकिंमानुषकृतिर्भवेत् ॥४॥ कृतिमेतांस्वयंकृत्वावादिराजोबुधाग्रणीः॥ ख्यापयामासमन्नाम्नासंतोह्याश्रितवत्सलाः ॥५॥ ॥ इतिश्रीमत्कविकुलतिलकवादिराजतीर्थपूज्यचरणविरचितायाःयुक्तिमल्लिकायाःटीकायांसुरोत्तमतीर्थकृतायां भावविलासिन्यांपंचमसौरभसर्वस्वं ॥६॥ नमोस्तुवादिराजायगुरवेपरवेदिने। योवाजिवक्रदययाश्राव्यंकाव्यमचीक्लृपत् ।६।

इदं पुस्तकं कुंभघोणस्थेन टी॰ आर्॰ कृष्णाचार्येण मुंबय्यां निर्णयसागराख्यमुद्रणयंत्रालये मुद्रयित्वा प्रकाशितं.

शकाब्दाः १८२५ सन १९०३.

